श्रीमदप्पय्यदीक्षितप्रणीतः

# कुवलयानन्दः

चन्द्रालोकेन, अलंकारचन्द्रिकाव्याख्यया,
टिप्पण्यादिभिश्च सहितः ।



ागर प्रेस, मुंबई २ —

श्रीमदप्पय्यदीक्षितप्रणीतः

# कुवलयानन्दः ।



जयदेवविरचितचन्द्रालोकव्याख्यारूप-

## चन्द्रालोकसहितः ।

श्रीमत्तत्सदुपाख्यवैद्यनाथसूरिविरचितया

अलंकारचन्द्रिकाव्याख्यया, टिप्पण्यादिभिश्चालंकृतः ।



THE

# KUVALAYĀNAÑDA

OF

## APPAYYA DĪKṢIT

with the commentary (Alañkārachandrikā) of Vaidyanāth Sūri, Foot-notes & Variants etc.



तस्येदं

नवमं संस्करणम्

श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

टिप्पण्यादिभिः समलंकृत्य संशोधितम् ।



मुम्बय्यां

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः

निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा तस्यैव कृते

तत्रैव प्रकाशितम् ।



शाकः १८६९, सन १९४७

## प्राथमिकं निवेदनम् ।

अथ प्रकाश्यतेऽयमस्माभिः कुवलयानन्दोऽलंकारचन्द्रिकया युतः सकलजनमनःप्रमोदमाधातुम् । अस्य कर्तुः सुगृहीतनाम्नः श्रीमदप्पय्यदीक्षितस्येतिवृत्तं न किंचित्समासादितमस्माभिरितिहाससाधनविधुरैरिति केवलमैतिह्यमालम्ब्य किंचिदिवात्र विलिखामः । अयं हि पण्डितो द्रविडजातीयः सकलश्रौतस्मार्तक्रियाकलापनिपुणः सर्वतन्त्रस्वतन्त्रप्रतिभः कदाचित्काशीं गतः प्रभाते कृतभागीरथीस्नानो निर्वर्तितप्रातराह्निकः स्वभवनं प्रत्यागच्छन् घट्टे शयानं कंचन युवतीदत्तकण्ठग्रहं प्रावृताखिलशरीरमपि बहिर्निःसृतविस्रस्तश्वेतशिखं पुरुषमद्राक्षीत् । अवादीच्च तं क्रोधविस्मयकरुणाभिर्युगपदभिभूतचेताः—

**'किं निःशङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ' इति ।**

तदाकर्ण्य यावदुत्क्षिप्य पटमवलोकयति पृच्छन्तं स शयानः पुरुषस्तावदिमं पण्डितराजं जगन्नाथमभिज्ञाय श्रीमदप्पय्यदीक्षित उत्तरार्धमिदं पपाठ—

**'अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः' इति ।**

एवं किंवदन्त्या पण्डितराजसमकालीनत्वमस्यावगम्यते । पण्डितराजस्तु 'शहाजहानाभिधयवनसार्वभौमस्य संसदि प्रवेशं लब्धवान् । अधिगतवांश्च निजविद्याचमत्कारपरितोषितात्तस्मादेव राज्ञः पण्डितराजपदवीम् । स्थितश्च प्रथमे वयसि प्रायस्तत्रैव तत्समीपे तत्सूनोर्दाराशिकोहस्य समीपे । शहाजहानमहीपतिस्तु १६२७ तमे ख्रिस्ताब्दे राजसिंहासनमधिरूढः १६५८ तमे ख्रिस्ताब्दे औरंगजेबनाम्ना स्वपुत्रेण कारागृहे निवेशितः, १६६६ तमे ख्रिस्ताब्दे च पञ्चत्वं गतः । पण्डितराजोऽपि वार्धके मथुरायां श्रीकाश्यां च गत्वा परमेश्वराराधनेन वयःशेषं नीतवान् । तस्मात् ख्रिस्ताब्दीयसप्तदशशतकमध्ये पण्डितराज आसीदिति सुव्यक्तमेव' इति निर्णीतवान् रसगङ्गाधरभूमिकायां जयपुरस्थो दुर्गाप्रसादनामा पण्डितः । तेनास्य कुवलयानन्दस्य प्रणेतुः श्रीमदप्पय्यदीक्षितस्य जीवनकालेऽपि ख्रिस्ताब्दीयसप्तदश १७००[1] शतकमेवेत्यवसीयते ।

संप्रत्यस्मदुपलब्ध–पण्डितवर–हालास्यनाथशास्त्रिभिर्मुद्रितरसिकरञ्जनीटीकासहितकुवलयानन्दे तु श्रीमदप्पय्यदीक्षितेन्द्रचरितमित्थमुपलब्धम्—[ इमे खलु दीक्षितेन्द्राः श्रीमति चोलदेशे काञ्चीपरिसरविराजमाना डयप्पलाख्याग्रहारे गतेषु ४६५४ कल्यब्देषु तथा हौणाब्देषु १५५२ संख्याकेषु श्रीमद्भरद्वाजकुलजलधिकौस्तुभमणेः **श्रीरङ्गराजाध्वरीन्द्रतो** लब्धजन्मानः विरचितबहुप्रबन्धाः विजितवैतण्डिकनिकुरम्बाः प्रख्यातचरित्राश्चेति सार्वजनीनमेतत् । तेषां जन्मवत्सरादिकं तद्वंश्यैः शिवानन्दयोगीन्द्रैस्तच्चरिते सम्यङ् निरूपितम् । तेषां किल त्रिसप्ततिर्वयसः परमावधिरित्यभियुक्ताः । तेषां चेयं सूक्तिश्चरमा चिदम्बरक्षेत्रे । यथा—'चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं सुताश्च विनयोज्ज्वलाः सुकृतयश्च

---

१ पं. दुर्गाप्रसादानुमानितदीक्षितसमयः पं. हालास्यनाथनिर्दिष्टो वा समयो विश्वसनीय इति निर्णये ह्यैतिह्यविद एव प्रभवः ।

काश्चित् कृताः। वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किंचिदहमर्थये शिवपदं दिदृक्षे परम् ॥" इति। तेषां च विद्याग्रहणं पितुरेव। यतस्त एव निरबध्नन् तत्कृते सिद्धान्तलेशसंग्रहाख्ये ग्रन्थे—"सिद्धान्तलेशान् धियः। शुद्ध्यै संकलयामि तातचरणव्याख्यावचःख्यापितान्" इति। तथा शिखरिणीमालाव्याख्याने शिवतत्त्वविवेकेऽपि—"सर्वविद्यालतोपघ्नपारिजातमहीरुहान्। महागुरून्नमस्यामि सादरं सर्ववेदसः" इत्युपक्रमे। तथा समाप्तावपि—"श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः" इति॥

तत्कृतयः संख्यया १०४ चतुरधिकं शतमिति तदीयबिरुदलेखनक्रमगतेन चतुरधिकशतप्रबन्धनिर्वाहकपदेन ज्ञायते। तत्रेदानीमपि प्रचारे विद्यमाना ग्रन्थाः श्रीमद्**द्वैतसिद्धान्ता**वलम्बिनो **निर्गुण**वस्तुप्रतिपादनधुरीणाः—श्रीपरिमलः, सिद्धान्तलेशसंग्रहः, वेदान्तनक्षत्रवादावली, मध्वतन्त्रमुखमर्दनम्, मध्वमतविध्वंसनम्, न्यायरक्षामणिः, इति षट्। **सगुण**निष्ठाः—शिखरिणीमाला, शिवतत्त्वविवेकः, ब्रह्मतर्कस्तवः लघुविवरणम्, आदित्यस्तवरत्नं, तद्व्याख्या, शिवाद्वैतविनिर्णयः, शिवध्यानपद्धतिः, पञ्चरत्नं, तद्व्याख्या, आत्मार्पणं, मानसोल्लासः, शिवकर्णामृतम्, आनन्दलहरी, चन्द्रिका, शिवमहिमकलिकास्तुतिः, रत्नत्रयपरीक्षा, तद्व्याख्या, अरुणाचलेश्वरस्तुतिः, अपीतकुचाम्बास्तवः, चन्द्रकलास्तवः, शिवार्कमणिदीपिका, शिवार्चनचन्द्रिका, शिवपूजाविधिः, नयमणिमाला, तद्व्याख्या, इति शिवोत्कर्षवादपराः षड्विंशतिः। तथा श्री**रामानुज**मतानुसारिणः—नयनमयूखमालिका, तद्व्याख्या, श्रीवेदान्तदेशिकविरचितयादवाभ्युदयव्याख्या, तथा तत्कृतपादुकासहस्रव्याख्या, वरदराजस्तवः, इति पञ्च। **श्रीमन्माध्वसिद्धान्तानुसारिणौ**—न्यायरत्नमाला, तद्व्याख्या, चेति द्वावेव। तथा **व्याकरणे**—नक्षत्रवादावली। **अलंकारशास्त्रे**—अर्थचित्रमीमांसा, कुवलयानन्दः, इति द्वौ। तथा **पूर्वमीमांसायां**—नक्षत्रवादावली, विधिरसायनम्, इति द्वौ। **एवं मिलिला चतुश्चत्वारिंशत्।** अन्ये च बहवो ग्रन्थास्तत्कृता उपलभ्यन्ते न समग्राः।] तेष्वेकतमोऽयमलंकारशास्त्रविषयो ग्रन्थः। अत्र श्रीजयदेवप्रणीतं चन्द्रालोकमेव मूलतया परिगृह्योपमादिहेत्वलंकारान्ताः शतमलंकारा निरूपिताः। अग्रे च रसवदादयः संकरसंकरान्तास्त्रयोविंशतिरलंकाराः स्वातन्त्र्येणैव निरूपिताः। एतच्च मूल एव ग्रन्थकृता दर्शितम्—

**'येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः।**
**प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते'** इति।

सोऽयमलंकारशास्त्रमध्येतॄणामुपयोगायालंकारचन्द्रिकाख्यया टीकया सहितः प्राचीनैर्द्वित्रैः पुस्तकैः संवाद्य पाठभेदटिप्पणीभिश्च समलंकृत्यैतदन्तर्गतानां सर्वेषामपि श्लोकानामकारादिवर्णक्रमानुसारिण्या सूच्या च संयोज्य परिष्कृतोऽध्येतॄणामुपकाराय भूयादित्याशास्यते।

# चन्द्रालोकविषयानुक्रमः ।



# कुवलयानन्दविषयानुक्रमः ।

संपूर्णोऽयं कुवलयानन्दविषयानुक्रमः ।



श्रीः ।

# चन्द्रालोकः ।

## प्रथमो मयूखः १

श्रीगणेशाय नमः ।

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।
धृष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥
हंहो चिन्मयचित्तचन्द्रमणयः ! संवर्धयध्वं रसा-
न्रे रे स्वैरिणि निर्विचारकविते ! मास्मात्प्रकाशीभव ।
उल्लासाय विचारवीचिनिचयालंकारवारांनिधे-
श्चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कृती ॥ २ ॥
युक्त्यास्वाचलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत्सेव्यः समाश्रीयताम् ।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्माज्जग-
ज्जाग्रद्भास्वरपद्मकेसरशयः शीतांशुरस्माद्बुधाः ॥ ३ ॥
तं पूर्वाचार्यसूर्योक्तिज्योतिःस्तोमोद्गतं स्तुमः ।
यं निपत्य प्रकाशन्ते मद्गुणत्रसरेणवः ॥ ४ ॥
नाशङ्कनीयं पूर्वेषां मतमेतेन दूष्यते ।
किंतु चक्षुर्मृगाक्षीणां कज्जलेनैव भूष्यते ॥ ५ ॥

### काव्यहेतुमाह—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसंबद्धबीजव्यक्तिर्लतामिव ॥ ६ ॥

### काव्यलक्षणमाह—

निर्दोषा लक्षणवती सरीतिर्गुणभूषिता ।
सालंकाररसानेकवृत्तिर्वाक्काव्यनामभाक् ॥ ७ ॥
अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ ८ ॥
विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द उच्यते ।
रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा ॥ ९ ॥
अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाग्रिमः ।
ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ॥ १० ॥

शुद्धतन्मूलसंभिन्नप्रभेदैर्यौगिकस्त्रिधा ।
ते च भ्रान्तिस्फुरत्कान्तिकौन्तेयादिस्वरूपिणः ॥ ११ ॥

रूढियौगिकमाह—

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात् ।
नीरधिः पङ्कजं सौधं सागरो भूरुहः शशी ॥ १२ ॥

सामान्यपरिवृत्त्या यत्सिध्यति तदाह—

क्षीरनीरधिराकाशपङ्कजं तेन सिध्यति ।
विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥ १३ ॥
युक्तार्थता तां च विना खण्डकाव्यं स इष्यते ।
वाक्यं च खण्डवाक्यं च पदमेकमपि क्वचित् ॥ १४ ॥

क्रमादुदाहरति—

धूमवत्त्वादिति यथा देवेत्यामन्त्रणं यथा ।
वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥ १५ ॥

महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रातद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनासावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥ १६ ॥

इति श्रीजयदेवकविविरचिते चन्द्रालोकालंकारे वाग्विचारो नाम प्रथमो मयूखः ।

---

## द्वितीयो मयूखः २

### दोषनिरूपणम्—

स्याच्चेतोविशता येन सक्षता रमणीयता ।
शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम् ॥ १ ॥
भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः ।
विदुष्यते व्याकरणविरुद्धच्युतसंस्कृतिः ॥ २ ॥
अप्रयुक्तं दैवतादौ शब्दे पुंलिङ्गतादिकम् ।
असमर्थं तु हन्त्यादेः प्रयोगो गमनादिषु ॥ ३ ॥
स हन्ति हन्त कान्तारे कान्तः कुटिलकुन्तलः ।
निहतार्थं लोहिताद्रौ शोणितादिप्रयोगतः ॥ ४ ॥
एकाक्षरं विना भूभ्रूक्ष्मादिकं खतलादिवत् ।
व्यतत्त्यनुचितार्थं यत्पदमाहुस्तमेव तत् ॥ ५ ॥
इयमुद्धतशाखाग्रकेलिकौतुकवानरी ।
निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम् ॥ ६ ॥

अर्थे विदधदित्यादौ दधदाद्यमवाचकम् ।
धत्ते नभस्तलं भास्वानरुणं तरुणैः करैः ॥ ७ ॥
अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना ।
आह्लादसाधनं वायुः कान्तानाशे भवेत्कथम् ॥ ८ ॥
स्याद्व्यर्थमिह संदिग्धं नद्यां यान्ति पतत्रिणः ।
स्यादप्रतीतं शास्त्रैकगम्यं वीतानुमादिवत् ॥ ९ ॥
शिथिलं शयने लिल्ये मच्चित्तं ते शशिश्रियि ! ।
मस्तपृष्ठकटीलोष्टगल्लादिग्राम्यमुच्यते ॥ १० ॥
नेयार्थं लक्षणात्यन्तप्रसरादमनोहरम् ।
हिमांशोर्हारधिक्कारजागरे यामिकाः कराः ॥ ११ ॥
क्लिष्टमर्थो यदीयोऽर्थश्रेणितः श्रेणिमृच्छति ।
हरिप्रियापितृवारिप्रवाहप्रतिमं वचः ॥ १२ ॥
अविमृष्टविधेयांशः समासपिहिते विधौ ।
विशन्ति विशिखप्राया: कटाक्षाः कामिनां हृदि ॥ १३ ॥
अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।
अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरा ॥ १४ ॥
रथाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः ।
न मामङ्गद ! जानासि रावणं रणदारुणम् ॥ १५ ॥
यस्मिन्नुपहतो लुप्तो विसर्ग इह तत्तथा ।
कुसंधिः पटवागच्छ विसंधिर्नृपती इमौ ॥ १६ ॥
हतवृत्तमनुक्तोऽपि छन्दोदोषश्चकास्ति चेत् ।
विशाललोचने ! पश्याम्बरं तारातरङ्गितम् ॥ १७ ॥
नूनं त्वत्खड्गसंभूतं यशःपुष्पं नभस्तलम् ।
अधिकं भवतः शत्रून्दशत्यसिलताफणी ॥ १८ ॥
कथितं पुनरुक्ता वाक्छायाब्जश्यामलोचना ।
विकृतं दूरविकृतैरैयरुः कुञ्जराः पुरम् ॥ १९ ॥
पतत्प्रकर्षहीनानुप्रासादित्वे यथोत्तरम् ।
गम्भीरारम्भदम्भोलिपाणिरेष समागतः ॥ २० ॥
समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् ।
नेत्रानन्दी तुषारांशुरेत्यम्बुनिधिबान्धवः ॥ २१ ॥
अर्धान्तरपदापेक्षि क्रीडानृत्येषु सस्मितम् ।
मेघारम्भं स्तुमः शम्भुमर्धरम्भोरुविग्रहम् ॥ २२ ॥
अभवन्मतयोगः स्यान्न चेदभिमतोऽन्वयः ।
येन बद्धोऽम्बुधिर्यस्य रामस्यानुचरा वयम् ॥ २३ ॥
स एष लङ्कालंकारं रावणं हन्तुमुद्यतः ।

द्विषां संपदमाच्छिद्य यः शत्रून्समपूरयत् ॥ २४ ॥
अस्थानस्थसमासन्नविद्वज्जनमनोरमम् ।
मिथः पृथग्वाक्यपदैः संकीर्णं यत्तदेव तत् ॥ २५ ॥
वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते ।
ब्रह्माण्डं त्वद्यशःपूरगर्भितं भूरिभूषणम् ॥ २६ ॥
आकर्णय पयःपूर्णसुवर्णकलशायते ! ।
भग्नप्रक्रममारब्धशब्दनिर्वाहहीनता ॥ २७ ॥
अक्रमः कृष्ण ! पूज्यन्ते त्वामनाराध्य देवताः ।
अमत्तार्थान्तरं मुख्येऽमुख्ये वार्थे विरोधकृत् ॥ २८ ॥
त्यक्तहारमुरः कृत्वा शोकेनालिङ्गिताङ्गना ।
अपुष्टार्थो विशेष्ये चेन्न विशेषो विशेषणात् ॥ २९ ॥
विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः ।
कष्टः स्पष्टावबोधार्थमक्षमो वाच्यसंनिभः ॥ ३० ॥
व्याहतश्चेद्विरोधः स्यान्मिथः पूर्वापरार्थयोः ।
सहस्रपत्रमित्रं ते वक्त्रं केनोपमीयते ॥ ३१ ॥
कुतस्तत्रोपमा यत्र पुनरुक्तः सुधाकरः ।
दुःक्रमग्राम्यसंदिग्धास्त्रयो दोषाः क्रमादमी ॥ ३२ ॥
त्वद्भक्तः कृष्ण ! गच्छेयं नरकं स्वर्गमेव वा ।
एकं मे चुम्बनं देहि तव दास्यामि कञ्चुकम् ॥ ३३ ॥
ब्रूत किं सेव्यतां चन्द्रमुखीचन्द्रकिरीटयोः ।
अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा ॥ ३४ ॥
प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम् ।
न्यस्तेयं पश्य कन्दर्पप्रतापधवलद्युतिः ॥ ३५ ॥
केतकी शेखरे शम्भोर्धत्ते चन्द्रकलातुलाम् ।
सामान्यपरिवृत्तिः स्यात्कुण्डलच्छविविग्रहा ॥ ३६ ॥
विशेषपरिवृत्तिः स्याद्दयिता मम चेतसि ।
द्वे स्तः सहचराऽचारुविरुद्धान्योन्यसङ्गती ॥ ३७ ॥
ध्वाङ्क्षाः सन्तश्च तनयं स्वं परं च न जानते ।
सरोजनेत्र ! पुत्रस्य मुखेन्दुमवलोकय ॥ ३८ ॥
पालयिष्यति ते गोत्रमसौ नरपुरन्दरः ।
पदे तदंशे वाक्यांशे वाक्ये वाक्यकदम्बके ॥ ३९ ॥
यथानुसारमभ्यूहेद्दोषाञ्छब्दार्थसंभवान् ।
दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम् ॥ ४० ॥
निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् ।
दोषो गुणत्वं तनुते दोषत्वं वा निरस्यति ॥ ४१ ॥

भवन्तमथवा दोषं नयस्यात्यज्यतामसौ ।
मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ॥ ४२ ॥
अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् ।
तव दुग्धाब्धिसंभूतेः कथं जाता कलङ्किता ॥ ४३ ॥
कवीनां समयाद्विद्याविरुद्धो दोषतां गतः ।
दधार गौरी हृदये देवं हिमकराङ्कितम् ॥ ४४ ॥
अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ।

इति श्रीजयदेवकविवरविरचिते चन्द्रालोके दोषनिरूपणो नाम द्वितीयो मयूखः ॥

---

## तृतीयो मयूखः ३

### अथ लक्षणानि—

अन्त्याक्षरा विचित्रार्थख्यातिरक्षरसंहतिः ।
उषाकान्तेनानुगतः शूरः शौरिरयं पुनः ॥ १ ॥
शोभाख्यातोऽपि यद्दोषो गुणकीर्त्या निषिध्यते ।
मुधा निन्दति संसारं कंसारिर्यत्र पूज्यते ॥ २ ॥
अभिमानो विचारश्चेदूहितार्थनिषेधकृत् ।
इन्दुर्यदि कथं तीव्रः सूर्यो यदि कथं निशि ॥ ३ ॥
हन्तुस्त्यक्त्वा बहून्पक्षान्युक्त्यैकस्यादथारणम् ।
नेन्दुर्नार्कोऽयमौर्वाग्निः सागरादुत्थितो दहन् ॥ ४ ॥
प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।
न युद्धेन भ्रुवोः स्पन्देनैव धीरा निवारिताः ॥ ५ ॥
निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथानृतम् ।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥ ६ ॥
स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।
चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥ ७ ॥
सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥ ८ ॥
युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।
नवस्त्वं नीरदः कोऽपि स्वर्णं वर्षसि यन्मुहुः ॥ ९ ॥
कार्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथवा ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १० ॥

---

अत्र स्वर्णपदेन कनकं, पक्षे सुष्ठु अर्णः उदकम् ।
2 कुवल०

इत्यादि लक्षणं भूरि काव्यस्याहुर्महर्षयः ।
स्वर्णभ्राजिष्णुभानुत्वप्रभृतीव महीभुजः ॥ ११ ॥

इति श्रीजयदेवकविवरविरचिते चन्द्रालोके लक्षणनिरूपणो नाम तृतीयो मयूखः ॥

---

## चतुर्थो मयूखः ४

### अथ गुणः—

श्लेषो विघटमानार्थघटमानत्ववर्णनम् ।
स तु शब्दैः सजातीयैः शब्दैर्बन्धः सुखावहः ॥ १ ॥
उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः ।
भीतया मानवत्येव श्रियाश्लिष्टं हरिं स्तुमः ॥ २ ॥
यस्मादन्तःस्थितः सर्वः स्वयमर्थोऽवभासते ।
सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥ ३ ॥
समताल्पसमासत्वं वर्णाद्यैस्तुल्यताथ वा ।
श्यामला कोमला बाला मरणं शरणं गता ॥ ४ ॥
समाधिरर्थमहिमा लसद्धनरसात्मना ।
स्यादन्तर्विशता येन गात्रमङ्कुरितं सताम् ॥ ५ ॥
माधुर्यं पुनरुक्तस्य वैचित्र्यचारुतावहम् ।
वयस्य ! पश्य पश्यास्य चञ्चलं लोचनाञ्चलम् ॥ ६ ॥
ओजः स्यात्प्रौढिरर्थस्य संक्षेपो वातिभूयसः ।
रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥ ७ ॥
सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात् ।
स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥ ८ ॥
उदारता तु वैदग्ध्यमग्राम्यत्वात्पृथङ्मता ।
मानं मुञ्च प्रिये ! किंचिल्लोचनं समुदञ्चय ॥ ९ ॥
शृङ्गारे च प्रसादे च कान्त्यर्थं व्यक्तिसंग्रहः ।
अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा ॥ १० ॥
तिलकाद्यमिव स्त्रीणां विदग्धहृदयंगमम् ।
व्यतिरिक्तमलंकारप्रकृतेर्भूषणं गिराम् ॥ ११ ॥
विचित्रलक्षणन्यासो निर्वाहः प्रौढिरौचिती ।
शास्त्रान्तररहस्योक्तिः संग्रहो दिक्प्रदर्शिता ॥ १२ ॥

इति श्रीजयदेवकविवरविरचिते चन्द्रालोके गुणनिरूपणो नाम चतुर्थो मयूखः ॥

---

## पञ्चमो मयूखः ५

### शब्दालंकारपरिसंख्यानम्—

शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा ।
हारादिवदलंकारसंनिवेशो मनोहरः ॥ १ ॥
स्वरव्यञ्जनसंदोहव्यूहाः संदोहदोहदाः ।
गौर्जगज्जाग्रदुत्सेकाच्छेकानुप्रासभासुरा ॥ २ ॥
आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसंदोहस्वच्छन्दस्यन्दमन्दिरम् ॥ ३ ॥
लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ।
यत्र स्यान्न पुनः शत्रोर्गर्जितं तर्जितं जितम् ॥ ४ ॥
श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ॥ ५ ॥
उपमेयोपमानादावर्थानुप्रास इष्यते ।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥ ६ ॥
पुनरुक्तप्रतीकाशं पुनरुक्तार्थसंनिभम् ।
अंशुकान्तं शशी कुर्वन्नस्वरान्तमुपैत्यसौ ॥ ७ ॥
आवृत्तवर्णस्तबकं स्तवकन्दाङ्कुरं कवेः ।
यमकं त्वथ माधुर्यं माधुर्यं वचसो विदुः ॥ ८ ॥
काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।
तेष्वाद्यमुच्यते श्लोकद्वयी सज्जनरञ्जिता ॥ ९ ॥
कामिनीव भवेत्खड्गलेखा चारुकरालिका ।
काश्मीरसेकरक्ताङ्गी शत्रुकण्ठान्तिकाचिका ॥ १० ॥

शब्दालंकारान्निरूप्यार्थालंकारमाह । तत्रैषामलंकाराणां अनुक्रमणिका लिख्यते—

उपमानन्वयावादावुपमेयोपमानता ।
प्रतीपं रूपकं चैव परिणामस्ततो मतः ॥ १ ॥
उल्लेखः स्मृतिमद्भ्रान्तिमत्संदेहा अपह्नुतिः ।
उत्प्रेक्षातिशयोक्ती च ततः स्यात्तुल्ययोगिता ॥ २ ॥
दीपकालंकृतिश्चैव तत आवृत्तिदीपकम् ।
प्रतिवस्तूपमा चैव स्याद्दृष्टान्तो निदर्शना ॥ ३ ॥
व्यतिरेकः सहोक्तिश्च विनोक्तिस्तदनन्तरम् ।
समासोक्तिः परिकरस्तथा परिकराङ्कुरः ॥ ४ ॥

श्लेषो ज्ञेयोऽप्रस्तुतप्रशंसा च प्रस्तुताङ्कुरः ।
पर्यायोक्तं ततो व्याजस्तुतिः स्याद्व्याजनिन्दनम् ॥ ५ ॥
आक्षेपालंकृतिश्चैव विरोधाभास एव च ।
विभावना विशेषोक्तिरसंभव उदाहृतः ॥ ६ ॥
असङ्गतिश्च विषमं समं चैव विचित्रकम् ।
अधिकालंकृतिश्चाल्पालंकृतिस्तदनन्तरम् ॥ ७ ॥
अन्योन्यं च विशेषश्च व्याघातालंकृतिस्ततः ।
हेतुमालैकावली च मालादीपकसाधकौ ॥ ८ ॥
यथासंख्यं च पर्यायः परिवृत्तिस्ततो मता ।
परिसंख्यालंकृतिः स्याद्विकल्पस्तदनन्तरम् ॥ ९ ॥
समुच्चयस्ततः प्रोक्तस्ततः कारकदीपकम् ।
समाधिः प्रत्यनीकं च काव्यार्थापत्तिरेव च ॥ १० ॥
काव्यलिङ्गं ततश्चार्थान्तरन्यास उदाहृतः ।
विकस्वरः स्यात्प्रौढोक्तिः संभावनमतः परम् ॥ ११ ॥
मिथ्याध्यवसितिश्चैव ललितं च प्रहर्षणम् ।
ततो विषादनोल्लासाववज्ञालंकृतिस्ततः ॥ १२ ॥
अनुज्ञा लेशमुद्रा च रत्नावल्यपि तद्गुणः ।
स्यात्पूर्वरूपालंकारोऽतद्गुणानुगुणावपि ॥ १३ ॥
मिलितं चैव सामान्यमुन्मीलितनिमीलितौ ।
उत्तरं सूक्ष्मपिहितं व्याजोक्तिस्तदनन्तरम् ॥ १४ ॥
गूढोक्तिर्विवृतोक्तिश्च युक्तिः स्तोकोक्तिरेव च ।
छेकोक्तिश्चैव वक्रोक्तिः स्वभावोक्तिश्च भाविकम् ॥ १५ ॥
उदात्तं तत्तदात्युक्तिर्निरुक्तिस्तदनन्तरम् ।
प्रतिषेधो विधिर्हेतुरित्यलंकृतयः शतम् ॥ १६ ॥

इत्यलंकारानुक्रमणिका ।

इति श्रीजयदेवकविवरविरचिते चन्द्रालोके शब्दालंकारनिरूपणं नाम पञ्चमो मयूखः ॥ ५ ॥

समाप्तोऽयं चन्द्रालोकः ।

श्रीः ।

श्रीमदप्पय्यदीक्षितविरचितः

# कुवलयानन्दः ।

## अलंकारचन्द्रिकाख्यव्याख्यासमेतः ।

श्रीगणेशाय नमः ।

अमरीकवरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ १ ॥

परस्परतपःसंपत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥ २ ॥

---

### अलंकारचन्द्रिका ।

अनुचिन्त्य महालक्ष्मीं हरिलोचनचन्द्रिकाम् ।
कुर्वे कुवलयानन्दसदलंकारचन्द्रिकाम् ॥ १ ॥

चिकीर्षिताविघ्नसिद्धय इष्टदेवतां स्तौति—**अमरीति** । अत्र 'चरणमेव पङ्कजम्' इति मयूरव्यंसकादिसमासाश्रयणात् परिणामालंकारः । चरण आरोप्यमाणस्य पङ्कजस्यारोपविषयचरणात्मतापरिणतिं विना दुरितदूरीकरणक्रियार्थत्वासंभवात् । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति तल्लक्षणात् । न च 'पङ्कजमिव चरणं' इति पूर्वपदार्थप्रधान उपमितसमास एवास्त्विति शङ्क्यम् । अमरीणां कबरीभारस्य केशपाशस्य संबन्धिनी सौगन्ध्यलोभात्तत्संसृष्टा या भ्रमरी तया मुखरीकृतमिति विशेषणस्यानुगुण्याभावात्तस्य पङ्कजगतत्वेनैव प्रसिद्धेरिति । एतद्विशेषणावगतेन च पादपतनेनाभिव्यज्यमाना गौरीविषया सुराङ्गनागता रतिः कविगता तां पुष्णातीति प्रेयोलंकारोऽपि बोध्यः ॥ १ ॥ **परस्परेति** । प्राञ्चौ पुरातनौ, जायापती अर्थादुमामहेश्वरौ स्तुमः । किंभूतौ ? प्रपञ्चस्य जीवस्य मातापितृरूपौ निरुपाधिकृपाश्रयत्वाद्धितोपदेष्टृत्वाच्च । तथा परस्परसंबन्धिन्यास्तपःसंपत्तेः फलवदाचरितं परस्परस्वरूपं ययोस्तौ । अत्र 'पर'शब्दस्य क्रियाविनिमयविवक्षायां 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' (वा. ४७००) इति वार्तिकेन द्विर्भावे असमासवद्भावे 'पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' इत्यनेन सुपः स्वादेशे च परस्परशब्दव्युत्पत्तेः पार्वतीतपःसमृद्धिफलायितः परमेश्वरः परमेश्वरतपःसंपत्फलायिता च पार्वतीत्यर्थो लभ्यते । तपःसंपत्तेश्च फलं निरतिशयानन्द इति तदुपमया परस्परं परमप्रेमास्पदत्वलक्षणः शृङ्गारो व्यज्यमानः सौभाग्यातिशयव्यञ्जनमुखेन शिवयोर्भावप्रकर्षे पर्यवस-

उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥ ३ ॥

अलंकारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसंग्रहः ॥ ४ ॥

येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥ ५ ॥

---

तीति सहृदयैराकलनीयम् । मातापितराविति रूपकाभ्यामुक्तोपमयोः संसृष्टिः । परस्परं चोपमयोः फलायितेत्येकवाचकानुप्रवेशलक्षणः संकर इति दिक् ॥ २ ॥ संप्रति प्रतिपिपादयिषितानामलंकाराणां व्युत्पत्तेः स्वतोऽपुरुषार्थतया फलत्वायोगात्तस्या रसास्वादौपयिकत्वेन फलत्वं प्रेक्षावतां प्रकृतग्रन्थप्रवृत्तये सूचयितुं शृङ्गाररसाधिदैवतं श्रीकृष्णं प्रति रसास्वादानन्दं प्रार्थयते—**उद्घाट्येति** । स मुकुन्दो मे मह्यं शश्वद्ध्रुवं शाश्वतिकं भग्नावरणतया सदा प्रकाशमानं श्रेयो विगलितवेद्यान्तरमानन्दं 'रसो वै सः' (तै० २।६) इति श्रुतेः रसपदाभिधेयं दिशतु । ददात्वित्यर्थः । यथाश्रुते मुक्तिप्रार्थनायाः प्रकृतेऽसंगत्यापत्तेः । स कः ? यो धन्यैर्महामहिमपुण्यशालिभिर्नारदादिमुनिभिर्योगकलया योगकौशलेन हृदयाब्जस्य उरसो मध्यवर्तिनो हृदयपुण्डरीकस्य कोशं मुकुलमधोमुखतया विद्यमानमुद्घाट्य रेचकप्राणायामेनोर्ध्वमुखं कृत्वा चिराद्बहुकालं यथारुचि यथेच्छं गृह्यमाणोऽपि रामकृष्णाद्यभिमतमूर्तिध्यानगोचरीक्रियमाणोऽपि परितः पूर्णं रूपमस्य तथाभूतोऽपरिच्छिन्नब्रह्मरूपोऽविरतं निरन्तरं मुक्तिदशायां प्रस्फुरति प्रकाशत इति विरोधालंकारः; औपासनिकरूपस्य कल्पितत्वेन च तत्परिहारः । अथवा योगिभिरप्यचिन्त्यस्वरूप इति माहात्म्यातिशयवर्णनम् । अत्र योगिगतभगवद्विषयकरतिभावस्य कविगतं तं प्रत्यङ्गतया प्रेयोलंकारः ॥ ३ ॥ चिकीर्षितस्य ग्रन्थस्य प्रयोजनाभिधेये प्रदर्शयति—**अलंकारेष्विति** । एतच्चोभयान्वयि । अलंकारेष्वर्थालंकारेषूपमादिषु विषये बालानामव्युत्पन्नानां तेष्ववगाहनस्य व्युत्पत्तेः सिद्धय इत्यर्थः । तेषां ये लक्ष्यलक्षणे तयोः संग्रह इति नित्यसापेक्षत्वात्समासः । लक्ष्यमुदाहरणम् । अलंकारत्वं च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासंबन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् । अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलंकारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ॥ ४ ॥ परकीयग्रन्थापहारशङ्कानिरासायाह—**येषामिति** । येषामलंकाराणां चन्द्रालोके चन्द्रालोका-

---

पाठा०—१ 'कौशल्येन'.

## उपमालंकारः १

**उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।**
**हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ॥ ६ ॥**

यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारुसादृश्यमुद्भूततयोल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालंकारः । हंसीवेत्युदाहरणम् ।

---

स्वग्रन्थे । त एवेत्यनन्तरं लिख्यन्त इति शेषः । तत्र स्थितानामपि केषांचिदुल्लेखनात्प्राय इत्युक्तम् । यथानन्तरश्लोकस्योत्तरार्धं तत्रैवं दृश्यते 'हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव' इति । स्वयं त्वन्यदेव विरचितमिति । एवं च तदीयत्वेन कथनादाशङ्कानिरासः ॥ ५ ॥

संप्रत्यर्थालंकारेषु निरूपणीयेषु बहूलालंकारघटकतया सुप्रसिद्धतया च प्रथममुपमालंकारं लक्षयति—**उपमेति** । अयं च लक्ष्यनिर्देशः । शेषं लक्षणम् । सादृश्यलक्ष्मीश्चमत्कृतिजनकता । तद्विशिष्टसादृश्यमिति यावत् । धर्मधर्मिणोरभेदोपचाराल्लक्षणं व्याचष्टे—**यत्रेति** । यत्र काव्ये । वृत्तित्वं सप्तम्यर्थः । तच्च शक्तिलक्षणान्यतरसहकारेण बोधकत्वसंबन्धेन । उपमानमधिकगुणं चन्द्रादि, उपमेयं वर्ण्यमानं कामिनीवदनादि, सहृदयः काव्यभावनापरिपक्वबुद्धिः, व्यङ्ग्यस्य मर्यादा प्रतीतिनियमरूपा यया साः व्यञ्जनेत्यर्थः । अत्र चोपमानोपमेययोरिति स्वरूपकथनं न तु लक्षणान्तर्गतं, व्यावर्तनीयाभावादात्माश्रयापादकत्वाच्च । उपमानत्वोपमेयत्वयोरुपमाघटितत्वात् । एतच्चाग्रे व्यक्तीभविष्यति । इत्थं चालंकारत्वे सति सादृश्यत्वमुपमालंकारलक्षणं बोध्यम् । एवमग्रेऽप्यधिकारप्राप्तमलंकारत्वविशेषणं बोध्यम् । **हंसीत्यादि** । अत्र तावदिवार्थे सादृश्ये निरूपितत्वसंसर्गेण हंस्यादेरन्वयः । सादृश्यस्य प्रयोजकत्वसंसर्गेण स्वर्गङ्गावगाहनाश्रयत्वरूपे साधारणधर्मे तस्य च स्वरूपसंबन्धेन कीर्तौ सादृश्यस्य निपातार्थतया नामार्थं प्रति साक्षात्संबन्धेन विशेष्यत्वे विशेषणत्वे च बाधकाभावात् । तथा च हंसीनिरूपितसादृश्यप्रयोजकस्वर्गङ्गाकर्मकावगाहनाश्रयत्ववती कीर्तिरिति बोधः । न चैवं स्वर्गङ्गावगाहनमिवशब्दश्चेत्याद्यग्रिमग्रन्थे धात्वर्थस्य समानधर्मत्वोक्तिर्विरुद्धेति वाच्यम् । तदाश्रयत्वस्य समानधर्मत्वे तस्य तथात्वस्यौचित्यायत्तत्वेन विरोधाभावात् । तथा सति तत्रैव कुतो न सादृश्यान्वय इति चेन्न । धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधे विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वात् । न च निपातार्थभिन्नवृत्तित्वेन प्रकारता विशेषणीयेति वाच्यम् । घटो न पश्यतीत्यादौ घटाद्यन्विताभावस्य कर्मतासंसर्गेण दर्शनेऽन्वयापत्तेः । यदि तु धात्वर्थेऽपि तात्पर्यवशात्सादृश्यान्वयोऽनुभवसिद्धस्तदा धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनान्वयबुद्धिं प्रति तज्जन्योपस्थितेः प्रतिबन्धकत्वमात्रं परिकल्प्य घटो न पश्यतीत्यादौ पूर्वोक्तान्वयबोधो निराकरणीय इति दिक् । एवं 'अरविन्दमिव सुन्दरं वदनम्'

इत्यादावरविन्दादिनिरूपितसादृश्यस्य प्रयोजकतासंसर्गेण सुन्दरपदार्थैकदेशेऽपि सुन्दरत्वेऽनुभवबलादन्वयस्तद्विशिष्टस्य चाभेदेन मुखादौ। इत्थं चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः। 'अरविन्दसुन्दरम्' इति समासे त्वरविन्दपदेनारविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते। तच्चाभेदेन पदार्थैकदेशे सौन्दर्येऽन्वेति। एवं चारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नं वदनमित्यन्वयबोधः। एकदेशान्वयायोगात् 'अरविन्द'पदमेव लक्षणया सर्वार्थबोधकं; 'सुन्दर'पदं तु तात्पर्यग्राहकमित्येके। 'अरविन्दमिव वदनम्' इत्यत्रारविन्दनिरूपितसादृश्यवद्वदनमिति बोधः। सादृश्यस्य निपातार्थतया भेदेन नामार्थान्वये बाधकाभावात्। 'अरविन्दमिव भाति' इत्यत्र भातेर्ज्ञानार्थकत्वे 'अरविन्द'पदस्यारविन्दनिरूपितसादृश्यप्रकारकज्ञानविषये लक्षणा। तस्य चाभेदेन मुखादावन्वयः। शेषं तात्पर्यग्राहकम्। पूर्वोक्तदिशा वा सादृश्यस्यैव प्रकारितासंसर्गेण धात्वर्थेऽन्वयः। अत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थस्य प्रयोज्यत्वस्य सादृश्येऽन्वयात्सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकज्ञानविषय इति बोधः, आद्यकल्पे त्वरविन्दपदमेव सर्वार्थबोधकमितरतात्पर्यग्राहकमिति ध्येयम्। इयं च सादृश्यस्य पदार्थान्तरत्वमते शब्दबोधरीतिरुपदर्शिता। तस्य समानधर्मरूपत्वे तु 'चन्द्र इव मुखम्' इत्यादौ चन्द्रवृत्तिधर्मवन्मुखमिति बोधः। अत्रैवाह्लादकमिति समानधर्मोपादाने इवार्थस्य धर्मस्याह्लादकत्वे पदार्थैकदेशेऽन्वयः। तदसहिष्णुतायां तु चन्द्रनिष्ठाह्लादकत्ववति आह्लादकपदस्य लक्षणा। चन्द्रादिपदं तात्पर्यग्राहकम्। 'चन्द्रसदृशम्' इत्यत्राप्येकदेशे सादृश्ये चन्द्रान्वयः, ससंबन्धिकत्वात्। 'सदृश'पदं वा चन्द्रसादृश्यविशिष्टे लाक्षणिकम्। अत्रैवाह्लादकत्वेनेत्युक्तावभेदस्तृतीयार्थस्तस्य च सदृशपदार्थैकदेशे धर्मेऽन्वयः। तथा चाह्लादकत्वाभिन्नचन्द्रवृत्तिधर्मवदभिन्नं मुखमिति बोधः। सदृशपदमेव वा सर्वार्थबोधकमितरतात्पर्यग्राहकमित्येवंविधान्वयसरणिश्रेणयस्तत्र तत्र शब्दव्युत्पत्तिनिपुणैरनुसंधेया इत्यलं प्रसक्तानुप्रसक्तपरिचिन्तनेन॥ पूर्णोपमेतीत्यनन्तरमालंकारिकैरिति पूरणीयम्। तत्त्वं च विशेषत उपात्तशब्दशक्तिप्रतिपादितोपमानोपमेयकत्वे सति विशेषतः शब्दोपात्तसमानधर्मकत्वे च सति विशेषतः स्वनिरूढशब्दगम्यत्वं स्वपदमुपमापरम्। उपमानलुप्तायामपि लक्षणयोपमानप्रतिपत्तेस्तद्वारणाय शक्तीति। उपमेयलुप्तायां स्मरवधूयन्तीत्यादावात्मन उपमेयस्याध्याहृतेनात्मानमिति शब्देन बोधनादुपात्तेति शब्दविशेषणम्। एवमपि तन्वीत्यनेनात्रोपमेयस्य, काव्यस्य सदृशं न दृश्यत इत्येवंविधायां लुप्तोपमायामुपमानस्य च, सदृशपदोपात्तत्वाद्विशेषत इति, उपमेयोपमानतावच्छेदकरूपेणेत्यर्थः। धर्मलुप्तायामप्युपमावाचकेन सामान्यतो धर्मस्योपात्तत्वाद्विशेषत इति। उपमाप्रयोजकतावच्छेदकरूपेणेत्यर्थः। वाचकलुप्तायामपि लक्षणयोपमानादिपदेनोपमावगमात्तद्वारणाय विशेषतः स्वनिरूढेति। उपमायां च निरूढा 'इववद्वायथाशब्दा' इत्याद्यभियुक्तोक्तिसंगृहीता इवादयः। अत्र निपातरूपस्येवादेरुपसर्गवद्द्योतकत्वमेव। कथमन्यथा 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यादा-

इयं च पूर्णोपमेत्युच्यते । हंसी कीर्तिः स्वर्गङ्गावगाहनमिवशब्दश्लेषेतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ।

यथा वा,—

'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥'

अत्र यद्यप्युपमानोपमेययोर्नैकः साधारणो धर्मः । उपमाने ईश्वरे चन्द्रगरलयोर्ग्रहणमुपादानं तयोर्मध्ये पूर्वस्य चन्द्रस्य शिरसा श्लाघनं वहनमुत्तरस्य गरलस्य कण्ठे नियमनं संस्थापनम्, उपमेये बुधे गुणदोषयोर्ग्रहणं ज्ञानं

---

तुल्यादिपदोत्तरतृतीयादिसङ्गतिः ? उत्तादेरुद्धरणक्रियां प्रत्यकरणत्वात्, इवार्थे सादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वाभावाच्च, द्योतकत्वे तूल्यादिपदस्योत्सदृशतयोत्सदृशैः शरैरिति शरविशेषणत्वेन तृतीयादिसङ्गतिरिति वैयाकरणमतं तु नादरणीयम् । उपास्यते गुरुरित्यादौ धात्वर्थासनक्रियाया अकर्मकतया कर्मलकारानुपपत्तिरूपबाधकस्योपसर्गवाचकतायामिवेवादिवाचकतायामभावेन दृष्टान्तवैषम्यस्य स्फुटत्वात् । विशेषणविशेष्ययोः समानविभक्तिकतायां 'विशेष्येण सहैकार्थं भवेद्यत्र विशेषणम् । तत्र लिङ्गादयः प्रायो विशेष्यस्था विशेषणे ॥' इत्यनुशासनस्येवोपमानोपमेययोरपि तस्यां 'लिङ्गसंख्याविभेदेऽपि ह्युपमानोपमेयता । विभक्तिः पुनरेकैव उपमानोपमेययोः ॥' इत्यनुशासनस्य सत्त्वेनोपमानपदोत्तरतृतीयादेः साधुत्वार्थतयोपपत्तेश्च । तस्माद्वाचकत्वमेवेवादीनाम् । युक्तं चैतत् । अन्यथा सकलालंकारिकसंमतस्येवशब्दप्रयोगे श्रौतीत्यस्य दत्तजलाञ्जलित्वापत्तेः । रूढिप्रयोजनयोरन्यतरस्याभावेन चन्द्रादिपदेन चन्द्रसदृशलक्षणायां निषिद्धलाक्षणिकत्वरूपनेयार्थत्वरूपदोषापत्तेश्च । अपि च इवादेर्द्योतकत्वनये चन्द्रादेरुपमानस्य पदार्थैकदेशतया तत्र साधारणधर्मान्वयानुपपत्तिरिति दिक् ॥—**उपमानेत्यादि ।** उपमानत्वं चोपमानिरूपकत्वेन विवक्षितत्वं, तदाश्रयत्वेन विवक्षितत्वं चोपमेयत्वम् । साधारणत्वं च धर्मस्वारसिकमौपचारिकं बिम्बप्रतिबिम्बभावकृतं श्लेषकृतं वस्तुप्रतिवस्तुभावेन समासभेदाश्रयणेनेत्यनेकधा चित्रमीमांसायां प्रपञ्चितम् । तत्र स्वर्गङ्गावगाहनस्य तथात्वमौपचारिकं कीर्तौ तस्य स्वारसिकत्वाभावात् । उपादानादिति वाचकस्योपादाननिर्देशः । इतरेषां तु शब्देन प्रतिपादनं तदिति चिन्तनीयम् ॥ साधारण्यप्रकारविशेषोपदर्शनायोदाहरणान्तरमाह—**यथा वेति । गुणदोषाविति ।** गुणदोषावर्थात्परस्य गृह्णन् जानन् बुधः पण्डितः पूर्वं पूर्वनिर्दिष्टं गुणं शिरसा श्लाघते आन्दोलितेन शिरसाभिनन्दति । परं परतो निर्दिष्टं दोषं कण्ठे नियच्छति निरुणद्धि । वाचा कण्ठाद्बहिर्नोद्घाटयतीत्यर्थः । क इव? इन्दुक्ष्वेडौ चन्द्रगरले गृह्णन्नुपाददान ईश्वरो हर इव । सोऽपि पूर्वं चन्द्रं शिरसा श्लाघते तत्पूर्वकं धारयति । परं च गरलं कण्ठे नियच्छति स्थापयतीति । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः ॥ शङ्कते—**अत्र यद्यपीति ।** साधारणत्वत्वेनाभिमतो धर्मः 'गृह्णन् शिरसा श्लाघते पूर्वम्' इत्यादिनोक्तो यद्यपि नैको न साधारण इति योजना । गृह्णन्नित्यादिनोक्त एकोऽपि धर्मः साधारणो नेति वा । यथाश्रुते साधारणस्य

तयोर्मध्ये पूर्वस्य गुणस्य शिरसा श्लाघनं शिरःकम्पेनाभिनन्दनमुत्तरस्य दोषस्य कण्ठे नियमनं कण्ठादुपरि वाचानुद्धाटनमिति भेदात् । तथापि चन्द्रगरलयोर्गुणदोषयोश्च बिम्बप्रतिबिम्बभावेनाभेदादुपादानज्ञानादीनां गृह्णन्नित्येकशब्दोपादानेनाभेदाध्यवसायाच्च साधारणधर्मतेति पूर्वस्माद्विशेषः । वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव इत्यालंकारिकसमयः ॥ ६ ॥

**वर्ण्योपमानधर्माणामुपमावाचकस्य च ।**
**एकद्वित्र्यनुपादानैर्भिन्ना[1] लुप्तोपमाष्टधा ॥ ७ ॥**

---

साधारणत्वाभावोक्तेरसङ्गतत्वापत्तेः । साधारण्याभावे हेतुरुपमान इत्यारभ्य इति भेदादित्यन्तेनोक्तः । समाधत्ते–**तथापीति** । वस्तुगत्या साधारण्याभावेऽपीत्यर्थः । **चन्द्रगरलयोरित्यादि** । यथाक्रमं चन्द्रगुणयोर्गरलदोषयोश्चेत्यर्थः । बिम्बप्रतिबिम्बभावेन प्रतीयमानसादृश्ययोरुपमानोपमेयधर्मयोर्भिन्नशब्दोपात्तत्वरूपेणाभेदादभेदाध्यवसायात् । एतच्च साधारणधर्मतेत्यग्रेतनेनान्वितम्, ज्ञानादीत्यादिना शिरसा वहनाभिनन्दनयोः कण्ठस्थापनतद्बहिरनुद्धाटनयोश्च संग्रहः । गृह्णन्नित्यादिना च शिरसा श्लाघते, कण्ठे नियच्छतीत्यनयोः संग्रहः । **अभेदाध्यवसायादिति** । अभेदस्याध्यवसायादाहार्यनिश्चयादित्यर्थः ॥ **साधारणधर्मतेतीति** । साधारणधर्मत्वाभिमानविषयतेतीत्यर्थः । पूर्वस्मात् पूर्वोदाहरणादिति विशेष इत्यन्वयः । न चैवं साधर्म्यप्रतीत्युपपादनेऽपि वस्तुतस्तदभावात्कथमुपमालक्षणसमन्वय इति वाच्यम् । चमत्कारविशेषप्रयोजकसाधारणत्वाध्यवसायविषयधर्मत्वस्यैवोपमालक्षणत्वमित्यभिप्रायादिति । लोके बिम्बप्रतिबिम्बभावव्यपदेशस्य गगनजलाशयादिगतचन्द्रादिविषयतया प्रसिद्धेः,कथं प्रकृते तद्व्यपदेश इत्याशङ्कायामाह—**वस्तुत इत्यादि** । अभिन्नयोस्तथाध्यवसितयोः । **पृथगिति** । भिन्नशब्देनेत्यर्थः । **बिम्बप्रतिबिम्बभाव इति** । बिम्बप्रतिबिम्बभावपदवाच्यमित्यर्थः । **समय इति** । सङ्केत इत्यर्थः ॥ ६ ॥ पूर्णायामुपमानादिसमग्रतानियमप्रसिद्धेस्तद्विपरीतायां लुप्तोपमायां सर्वलोपनियमाशङ्कानिरासाय लक्षणपूर्वकं तां विभजते—**वर्ण्येत्यादिना** । चकारो वाशब्दार्थे । तदनन्तरं च लोपे इत्यध्याहार्यम् । एवं चेतरेतरयोगाविवक्षया, वर्ण्यस्योपमानस्य धर्मस्योपमावाचकस्य वा लोपेऽन्यतमानुपादाने लुप्तोपमा । सा च एकद्वित्र्यनुपादानैरष्टधा भिन्नेति पूर्वापराभ्यामुक्तं भवति । तद्भिदित्याद्युदाहरणान्यर्थतो व्याचष्टे—**उपमेयादीनामिति** । वस्तुतो लाघवात्पूर्णभिन्नत्वं लक्षणं बोध्यम् । लक्षणवाक्यगतं क्रममुपेक्ष्योदाहरणक्रमानुसारेण विभागं दर्शयति—**यथेत्यादि । वाचकलुप्तेति** । वाचकत्वं चात्रानुपूर्वीविशेषवत्तयोपमाबोधने निरूढत्वम् । तच्च शक्त्या निरूढलक्षणया वा । तत्राद्यमिवादेर्द्वितीयं तु सुहृत्पदादेरिति । तदभावात्तड़िद्गौरीत्यादौ वाचकलोपः । समासानु-

---

पाठा०—१ 'दानाद्भिन्ना'.

तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥ ८ ॥
यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः ।
तदेतत्काकतालीयमवितर्कितसंभवम् ॥ ९ ॥

उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणां वा प्रतिपादकशब्दाभावेन लुप्तोपमेत्युच्यते । सा चाष्टधा । यथा—वाचकलुप्ता १, धर्मलुप्ता २, धर्मवाचकलुप्ता ३, वाचकोपमेयलुप्ता ४, उपमानलुप्ता ५, वाचकोपमानलुप्ता ६, धर्मोपमानलुप्ता ७, धर्मोपमानवाचकलुप्ता च ८ इति । तत्रोपमानलोपरहिताश्चत्वारो भेदाः 'तडिद्गौरी-' इत्यादिश्लोकेन प्रदर्शिताः । तद्वन्तो भेदा उत्तरश्लोकेन दर्शिताः । तत्र 'तडिद्गौरी' इत्यत्र वाचकलोपस्तडिदिव गौरीत्यर्थे 'उपमानानि सामान्यवचनैः' ( २।१।५५ ) इति समासविधायकशास्त्रकृतः । 'इन्दुतुल्यास्या' इत्यत्र धर्मलोपः, स स्वैच्छिको न शास्त्रकृतः । कान्त्या इन्दुतुल्यास्येत्यपि वक्तुं शक्यत्वात् । 'कर्पूरन्ती' इत्यत्र धर्मवाचकलोपः । कर्पूरमिवाचरन्तीत्यर्थे विहितस्य कर्पूरवदानन्दात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् । अत्र धर्मलोप ऐच्छिकः । नयनयोरानन्दात्मकतया कर्पूरन्तीति

---

शासनेन निरूढलक्षणावगमेऽप्यानुपूर्वीविशेषवत्तया शब्दविशेषस्य तदबोधनात् ॥ **शास्त्रकृत इति** । शास्त्रप्रयुक्त इत्यर्थः ॥ **कर्पूरन्तीत्यत्रेति** । अत्र 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' (वा. १७२२) इत्यनेन विहितः क्विप् लुप्तोऽपि स्मर्यमाणो धर्ममात्ररूपमाचारं बोधयति । कर्पूरपदं च लक्षणया कर्पूरसादृश्यम् । तस्य चातिरिक्तत्वे पूर्ववत्प्रयोजकतासंसर्गेणाचारेऽन्वयो धर्मरूपत्वे त्वभेदेन । वस्तुतस्तु क्विब्लोपाप्रतिसन्धानेऽपि तथाबोधात् कर्पूरादिशब्दा एव कर्पूरादिसादृश्यप्रयोजकाभिन्नं तत्सादृश्याभिन्नं वाचारं लक्षयन्तीति युक्तम् । ननु वाचकस्येवादेरनुपादानाल्लोपो युक्तः, साधारणधर्मस्य त्वाचाररूपस्य क्विबुपात्ततया कथं लोपस्तत्राह— **कर्पूरवदानन्दात्मकाचारार्थकस्य क्विप इति** । कर्पूरस्येवेतीवार्थे वतिः । आनन्दात्मको जनकतासंबन्धेन । वस्तुगत्या आनन्दस्वरूपो य आचारस्तद्बोधकस्येत्यर्थः । ननु क्विब्लोपाज्ञानेऽप्याचारप्रतीतेः कर्पूरादिपदानामेव तद्बोधकत्वपक्षे कथं धर्मलोपः संगमनीय इति चेत् । अत्र प्राञ्चः—एवमपि तद्वाचकतया विहितस्य क्विपो लोपात्तल्लोपव्यपदेशः । अत एवात्र समानार्थकः क्यच् नोपात्तस्तस्यालुप्तत्वादित्याहुः । नव्यास्तु—धर्ममात्ररूपस्याचारस्योपादानेऽप्यानन्दत्वादिना विशेषरूपेणानुपादानाद्धर्मलोपो युक्त एव । अन्यथा इन्दुतुल्यास्येत्यादेर्धर्मलुप्तोदाहरणस्यासङ्गतत्वापत्तेः । न चैवं क्यजादावपि धर्मलुप्ता स्यादिति वाच्यम्, इष्टापत्तेरित्याहुः ॥

---

पाठा०–१ 'तद्रते'.

तदुपादानस्यापि संभवादिति। 'कान्त्या स्मरवधूयन्ती' इत्यत्र वाचकोपमेयलोपः। अत्र कान्त्येति विशेषणसामर्थ्यात्स्वात्मानं कामवधूमिवाचरन्तीत्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपादानात्स स्वैच्छिकः। स्वात्मानं स्मरवधूयन्तीत्युपमेयोपादानस्यापि संभवात्। 'काकतालीयम्' इत्यत्र काक-तालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ, तेन काकागमनमिव तालपतनमिव काकतालमितीवार्थे 'समालाच तद्विषयात्' (५।३।१०६) इति ज्ञापकात्समासः। उभयत्रोपमेयं स्वस्य क्वचिद्गमनं तत्रैव रहसि तन्व्या अवस्थानं च। तेन स्वस्य तस्याश्च समागमः काकतालसमागमसदृश इति फलति। ततः 'काकतालमिव काकतालीयम्' इति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' (५।३।१०६) इति सूत्रेण 'इवे प्रतिकृतौ' (५।३।९६) इत्यधिकारस्थेन छप्रत्ययः। तथा च पतनदलितं तालफलं यथा काकेनोपभुक्तम्, एवं रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति तदर्थः। ततश्चात्र काकागमनतालपतनसमागमरूपस्य काककृततालफलोपभोगरूपस्य चोपमानस्यानुपादानात्प्रत्यया-

---

**स्मरवधूयन्तीत्यत्रेति**। ननु 'उपमानादाचारे' (३।१।१०) इति कर्मभूतादुपमानादाचारे क्यचो विधानात् स्मरवधूं रतिमिवाचरन्तीत्यवगमेऽप्यात्मानमन्यां वेति कथं निर्णयस्तत्राह—**विशेषणेति**। रत्यनुरूपाचरणस्य कान्तिकरणकत्वरूपविशेषणसामर्थ्यादित्यर्थः। कान्तेः स्वरसतः स्वीयत्वावगमादिति भावः। न चात्मन उपमेयस्य तन्वीपदेनोपादानात्कथं लोप इति वाच्यम्। तस्याऽद्वितीयान्ततया कर्मभूतोपमेयाऽसमर्पकत्वादात्मानमित्यध्याहृतेनैव तद्बोधात्। अत्र च 'स्मरवधू' पदेन स्मरवधूसादृश्यं लक्ष्यते। तस्य च प्रयोजकत्वसंसर्गेणाभेदेन वाचारेऽन्वयः। तथा च स्मरवधूसादृश्याभिन्न आत्मकर्मको य आचारस्तदाश्रयस्तन्वीति बोधः॥ **काकतालीयेति**। वृत्तिविषये समासविषये॥ **ज्ञापकादिति**। इवार्थे समासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोऽनुपपन्नस्तज्ज्ञापक इत्यर्थः। **उभयत्र** काकागमन–तालपतनयोः। उपमेयमित्यनन्तरं क्रमेणेति शेषः॥ **तेनेति**। काकतालसमवेतक्रियापरयोः काक-तालपदयोरिवार्थे समासेनेत्यर्थः॥ **काकतालसमागमेति**। अयं भावः—काकागमन-तालपतनयोरुपमानत्वे तदुपमेययोः स्वीयगमनतन्व्यवस्थानयोः पृथगनुपात्तत्वेनोपमेयतयान्वयायोगात्काकतालसमागम एवोपमानम्। इत्थं च काकतालसमागमसदृशः काकतालपदार्थस्तस्य चाभेदेन स्वीयतन्वीसमागमरूप उपमेयेऽन्वय इति॥ **तत इति**। तादृशसमासोत्तरमित्यर्थः॥ **इति तदर्थ इति**। काकतालपदलक्षितस्य काककृततालफलोपभोगसदृशस्याभेदेन तन्वीरतिलाभरूपेणोपमेयेनान्वयादिति भावः। अत्र पतनदलितमिति रहोदर्शनक्षुभितहृदयेति च बिम्बप्रतिबिम्बभावापन्नधर्मस्वरूपकथनं नत्वेवमन्वयाकार इति बोध्यम्। न च सकृदुच्चारिताभ्यां काक-तालपदाभ्यां कथमुपमानद्वयावगम इति वाच्यम्। अनुभवानुसार्यनुशासनेन व्युत्पत्तिवैचित्र्यस्य स्फुटं प्रतिपत्तेरिति॥ एवं दुरूहत्वात्पद्यं व्याख्याय तत्रोपमानलुप्तादींश्चतुरोऽपि भेदान्प्रदर्शयितुमाह—**ततश्चेति**। **काकागमनेत्यादि**। काकागमनतालपतनरूपो यः समागमस्तद्रूप-

र्थोपमायामुपमानलोपः, समासार्थोपमायां वाचकोपमानलोपः । सर्वोऽप्ययं लोपश्छप्रत्ययविधायकशास्त्रकृतः, अवितर्कितसंभवमिति साधारणधर्मस्यानुपादाने प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोप इति सूक्ष्मया दृष्ट्यावधारितव्यम् । एतेषामुदाहरणान्तराणि विस्तरभयान्न लिख्यन्ते ॥ ७–९ ॥

---

## अनन्वयालंकारः २

**उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।**
**इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥ १० ॥**

एकस्यैव वस्तुन उपमानोपमेयत्ववर्णनमनन्वयः । वर्ण्यमानमपि स्वस्य

---

स्येत्यर्थः । इदं च 'काकागमनमिव तालपतनमिव' इति महाभाष्यगतविग्रहवाक्यविरोधशङ्कापरिहारायोक्तम् । समागमस्य तादृशक्रियाद्वयाभिन्नत्वेनोक्तयुक्त्या तस्योक्तार्थ एव पर्यवसानात्, विशिष्टोपमायां विशेषणोपमावगतिवत्समागमोपमायामपि तदवयवक्रिययोर्यथायोगं गम्यमानामुपमामभिप्रेत्य महाभाष्यकर्ता तादृशविग्रहवाक्यप्रणयनमित्याशयः । **धर्मस्यानुपादान इति** । तत्स्थाने **'अभवत् किं ब्रवीमि ते'** इति पाठ इति भावः ॥ ७–९ ॥

इति श्रीमत्तत्सदुपाख्यरामभट्टसूरिवरात्मजवैद्यनाथविरचितायामलंकारचन्द्रिकाख्यायां कुवलयानन्दव्याख्यायामुपमालङ्कारप्रकरणं संपूर्णम् ॥ १ ॥

---

यद्यप्युपमाननिरूपणानन्तरं तन्मूलालंकारेषु संभवत्सादृश्योपमेयोपमैव प्रथमं निरूपयितुमुचिता, न त्वारोपितसादृश्यनिबन्धनोऽनन्वयस्तथापि तं द्वितीयसदृशव्यवच्छेदफलकतया तृतीयसदृशव्यवच्छेदफलिकामुपमेयोपमामपेक्ष्य शीघ्रोपस्थितिकमभिप्रेत्य प्रथमं निरूपयति—**उपमानोपमेयत्वमिति** । उपमानत्वमुपमेयत्वं चेत्यर्थः । द्वन्द्वान्ते श्रूयमाणत्वात् । विवक्ष्यत इति च शेषः । एवं चैकस्यैव वस्तुनो यदुपमानत्वमुपमेयत्वं च विवक्ष्यते तदनन्वय इत्यन्वयः । असंभवशङ्कानिरासाय मध्ये उदाहरणोक्तिः । ननूक्तलक्षणस्य 'भणितिरिव मतिर्मतिरिव चेष्टा' इत्यादिरशनोपमायामतिव्याप्तिः । तत्र मत्यादेरेकस्यैव वस्तुन उपमानत्वस्योपमेयत्वस्य च वर्णनात् । अथैकस्य वस्तुनो यदेकनिरूपितमुपमानत्वमुपमेयत्वं चेति विवक्षितमेकपदस्यावृत्तिकल्पनात् । इत्थं च रशनोपमायां मत्यादेश्चेष्टादिनिरूपितमुपमानत्वं भणितीत्यादिनिरूपितं तूपमेयत्वमित्येकनिरूपितोपमानोपमेयत्वविरहान्नातिव्याप्तिरित्युच्यते, तदा 'खमिव जलं जलमिव खम्' इत्युपमेयोपमायामतिव्याप्तिः । तत्रैकस्यैव वस्तुनो गगनस्यैकजलनिरूपितस्योपमानत्वस्योपमेयत्वस्य च वर्णनादिति चेत्–मैवम्; एकस्यैवेति विरोधद्योतकैवकारबलेन स्वाश्रयनिरूपितयोरुपमानोपमेयत्वयोर्लाभेन क्वाप्यतिप्रसङ्गाभावात् । अस्ति हि 'इन्दुरिन्दुरिव' इत्यनन्वये उपमानत्वमुपमेयत्वं च स्वाश्रयेन्दुनिरूपितं नतु रशनोपमायामुपमेयोपमायां वेति संक्षेपः । अनन्वयपदप्रवृत्तिनिमित्तमाह—**वर्ण्यमानमपीति** ।

स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः। अनन्वयिनोऽप्यर्थस्याभिधानं सदृशान्तरव्यवच्छेदेनानुपमत्वद्योतनाय। 'इन्दुरिन्दुरिव श्रीमान्' इत्युक्ते श्रीमत्त्वेन चन्द्रस्य नान्यः सदृशोऽस्तीति सदृशान्तरव्यवच्छेदो लक्ष्यते। ततश्च स्वस्य स्वेनापि सादृश्यासंभवादनुपमेयत्वे पर्यवसानम्॥ यथा वा,—

गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव॥

पूर्वोदाहरणे श्रीमत्त्वस्य धर्मस्योपादानमस्ति। इह तु गगनादिषु वैपुल्यादेर्धर्मस्य तन्नास्तीति विशेषः॥ १०॥

---

## उपमेयोपमालंकारः ३

**पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता।**
**धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि॥ ११॥**

---

**नान्वेतीति**। न संबध्यत इत्यर्थः। साधर्म्यस्य भेदघटितत्वादिति भावः। नन्वेवं सत्यसंबद्धप्रलापत्वापत्तिरित्यत आह—**अनन्वयिनोऽपीति**। बाधितस्यापीत्यर्थः। अर्थस्य साधर्म्यस्य। अभिधानमाहार्यारोपरूपतया प्रतिपादनम्। सदृशान्तरव्यवच्छेदेन सदृशान्तरव्यावृत्तिबोधद्वारेण। एतदेव विशदयति—**इन्दुरित्यादिना**। इत्थं च सदृशान्तरव्यावृत्तिसूचनद्वारानुपमत्वद्योतनरूपप्रयोजनवत्त्वादापाततो रुद्ररोदनार्थवादवद्वारमात्रतया सादृश्यप्रतिपादनेऽपि नासंबद्धप्रलापतापत्तिरिति भावः। उदाहरणान्तरमाह—**यथा वेति**। गगनाकारं गगनसदृशम्। इवेत्यतः प्राक् 'युद्धम्'इत्यध्याहार्यम्। उदाहरणान्तरप्रदर्शने बीजमाह—**पूर्वोदाहरणेति**। वैपुल्यादेरित्यादिपदाद्गाम्भीर्यदारुणत्वयोः संग्रहः॥ १०॥

इत्यलंकारचन्द्रिकायामनन्वयालंकारप्रकरणम्॥ २॥

अथोपमेयोपमां लक्षयति—**पर्यायेणेति**। अयौगपद्येनेत्यर्थः। वाक्यभेदेनेति यावत्। तत् उपमानोपमेयत्वम्; विवक्ष्यत इति शेषोऽत्रापि बोध्यः। उपमेयोपमेति लक्ष्यनिर्देशः। उपमेयेनोपमेति व्युत्पत्तेः। धर्मोऽर्थ इवेत्युदाहरणम्। अर्थो धनम्। पूर्णश्रीः पूर्णसमृद्धिः। अत्र च धर्मार्थयोर्द्वयोर्वाक्यभेदेनोपमानत्वमुपमेयत्वं च वर्णितम्। तत्राद्यवाक्येऽर्थस्योपमानत्वं धर्मस्योपमेयत्वम्। द्वितीये तु तद्विपर्यासेन धर्मस्योपमानत्वमर्थस्योपमेयत्वमिति लक्षणसमन्वयः। उपमानोपमेयत्वमात्रोक्तावनन्वयेऽतिव्याप्तेर्द्वयोरित्युक्तम्। एवमिति 'समत्वं शरदि प्रापुरह्रो कुमुदतारकाः' इत्युभयविश्रान्तसादृश्यादुपमायामतिव्याप्तिः। तत्र द्वयोः कुमुदतारकयोः सादृश्याश्रयत्वरूपोपमेयत्वस्येव तत्प्रतियोगित्वरूपस्योपमानत्वस्याप्यर्थतः प्रतीतेः, अतः पर्यायेणेत्युक्तम्। ननु 'भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव च कीर्तिरतिविमला' इति रशनोपमायामतिव्याप्तिः। तत्र द्वयोर्मतिचेष्टयोर्वाक्यभेदेनोपमानोपमेयत्ववर्णनादिति चेन्न। द्वयोरित्यनेन परस्परमुपमानोपमेयत्वस्य विवक्षितत्वात्। अन्यथा 'पर्याय'पदेनैवानन्वयवारणे तद्वैयर्थ्यापत्तेरिति संक्षेपः॥

द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थम् । धर्मार्थयोर्हि कस्यचित्केनचित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदं फलति ॥

यथा वा,—

खमिव जलं जलमिव खं
हंस इव चन्द्रश्चन्द्र इव हंसः ।
कुमुदाकारास्तारा-
स्ताराकाराणि कुमुदानि ॥

पूर्वत्र पूर्णश्रीरिति धर्म उपात्तः । इह निर्मलत्वादिधर्मो नोपात्त इति भेदः । उदाहरणद्वयेऽपि प्रकृतयोरेवोपमानोपमेयत्वकल्पनम् । राज्ञि धर्मार्थसमृद्धेः शरदि गगनसलिलादिनैर्मल्यस्य च वर्णनीयत्वात् प्रकृताप्रकृतयोरप्येषा संभवति ।

यथा वा,—

गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥ ११ ॥

---

## प्रतीपालंकारः ४

**प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।**
**त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥ १२ ॥**

प्रसिद्धोपमानोपमेयभावः प्रातिलोम्यात्प्रतीपम् ।

---

ननूपमाप्रतीपोभयरूपाया उपमाद्वयरूपाया वा उपमेयोपमाया अलंकारान्तरत्वे किं बीजमित्यत आह—**द्वयोरिति** । तथा चार्थविशेषद्योतकतया चमत्कृतिवैलक्षण्यमेव तत्र बीजमिति भावः । कथं तृतीयसदृशव्यवच्छेदलाभस्तत्राह—**धर्मार्थयोरिति** । धर्मार्थयोर्मध्य इत्यर्थः । मुखतः शब्देन । तथा च 'प्राप्तस्य पुनर्वचनं तदितरपरिसंख्यार्थम्' इति न्यायादिहापि तृतीयसदृशव्यावृत्तिलाभ इति भावः ॥ **खमिवेति** । शरद्वर्णनमिदम् । खमाकाशमिव जलं कालुष्यापगमेन निर्मलत्वातिशयात् । शेषं स्पष्टम् । निर्मलत्वादीत्यादिपदेन शैत्यातिशयपरिग्रहः ॥ **गिरिरिवेति** । अत्र गजः प्रकृतः । अयमिति प्रकृतपरामर्शिसर्वनामनिर्दिष्टत्वात् । अत एवोपक्रमादग्रेऽप्यस्य मदधारेत्यन्वयो बोध्यः । अत्र पूर्वार्धे उच्चकैर्विभातीति समानधर्म उपात्तः । उत्तरार्धे च स्रवतीति स उक्त इति दिक् ॥११॥

इत्यलंकारचन्द्रिकायामुपमेयोपमालंकारप्रकरणम् ॥ ३ ॥

**प्रतीपमिति** । प्रतीपमिति लक्ष्यनिर्देशः । ननूपमानोपमेयभावस्य वैवक्षिकतया मुखादेरप्युपमानत्वसंभवाच्चन्द्र इव मुखमित्युपमायामतिव्याप्तिरित्यत आह—**प्रसिद्धेति** । प्रसिद्धोपमानस्योपमेयभाव उपमेयत्वं प्रतीपं प्रतीपपदवाच्यम् । कुतः? प्रातिलोम्यात् प्रसिद्धोपमानप्रतिकूलत्वात् । **'उपमेयभावप्रातिलोम्यात्'** इत्यविसर्गपाठेऽपि प्रसिद्धोपमानस्य य उपमेयभावस्तस्य प्रातिलोम्यादुपमानप्रतिकूलत्वा-

---

पाठा०—१ '°मानस्याप्युपमेयत्व°'.

यथा वा,—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १२ ॥

**अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत्।**
**अलं गर्वेण ते वक्त्र! कान्त्या चन्द्रोऽपि तादृशः ॥१३॥**

अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयं किंचित्प्रदर्श्य तावता तस्य तिरस्कारो द्वितीयं प्रतीपं पूर्वस्मादपि विच्छित्तिविशेषशालि।

यथा वा,—

गर्वमसंवाह्यमिमं लोचनयुगुलेन किं वहसि भद्रे!।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥ १३ ॥

---

दुपमानस्योपमेयत्वकल्पनं प्रतीपमित्युच्यत इति व्याख्येयम्। न तु प्रसिद्धस्योपमानोपमेयभावस्य वैपरीत्यादिति यथाश्रुतरीत्यैवंविधप्रातिलोम्यस्य तृतीयपञ्चमप्रतीपभेदाव्यापित्वेन प्रतीपपदप्रवृत्तिनिमित्तत्वायोगादिति। एवं चोक्तप्रकारेणोपमानप्रातिकूल्यस्य प्रतीपपदप्रवृत्तिनिमित्तत्वकथनेन प्रसिद्धोपमानप्रतिकूलधर्मः। **प्रतीपमिति**। प्रतीपपञ्चकसाधारणं सामान्यलक्षणमिति सूचितम्। अत एव पञ्चमप्रतीपव्याख्यानावसरे वक्ष्यति—'उपमानप्रातिलोम्यात्'इति। प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वम्। एतस्य च सकलप्रतीपभेदसाधारण्यं तत्र तत्र स्फुटीकरिष्यते— **यथा वेति**। प्रोषितस्य प्रियां प्रति वियोगवेदनानिवेदनमिदम्। अयि प्रिये! त्वदीयसादृश्येन विनोदनं विनोदो विरहयापनं तन्मात्रमपि मम दैवेन न क्षम्यते॥ एतदेव दर्शयति—**यदित्यादिना**। त्वन्नेत्रयोः समाना साधारणी कान्तिः शोभा यस्य तथाविधं यदिन्दीवरं तत्सलिले मग्नम्। वर्षर्तुना जलवृद्धेः। तव मुखस्य च्छायया कान्त्या अनुकारी सदृशः शशी मेघैरन्तरितस्तिरोहितः। येऽपीत्यपिर्भिन्नक्रमः। त्वद्गमनसदृशगतयो ये राजहंसास्तेऽपि गता इति। अत्र कान्तीत्यादिधर्मोपादानात् पूर्वोदाहरणवैलक्षण्यं बोध्यम्। ननूपमानादुपमेयस्याधिक्यवर्णनारूपाद्व्यतिरेकालंकारादस्य को भेदः? उच्यते—तत्र वैधर्म्यप्रयुक्तमुपमेयस्याधिक्यं विवक्षितम्, इह तूपमानतामात्रप्रयुक्तत्वात् साधर्म्यप्रयुक्तमिति ॥ १२ ॥ प्रतीपान्तरमाह—**अन्योपमेयेति**। अन्यदवर्ण्यमुपमानं तद्रूपं यदुपमेयं तस्य लाभेन वर्णनीयस्य मुखादेरनादरो गर्वपरिहारोऽपि। तत् प्रतीपमित्यर्थः। तस्य गर्वप्रसक्तिपूर्वकत्वेनोपमेयताया अपि पूर्वमप्राप्त्योपमानतिरस्कृतिविशेषप्रयोजकत्वादिति भावः। अत एव लाभेनेत्युक्तं न तु सत्त्वेनेति। अप्राप्तप्राप्तेर्लाभशब्दार्थत्वात्॥ **विच्छित्तिविशेषेति**। चमत्कारोत्कर्ष इत्यर्थः। उत्कृष्टस्योपमानतिरस्कारातिशयप्रतीतेरिति भावः॥ **गर्वमिति**। असंवाह्यं संवाहनायोग्यम्। अपरिमितमिति यावत्। भद्रे शोभने इति संबोधनम्। नन्विति

---

पाठा०—१ 'वर्णस्य'. २ 'चन्द्रो भवादृशः'.

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ।
कः क्रौर्यदर्पस्ते मृत्यो ! त्वत्तुल्याः सन्ति हि स्त्रियः ॥१४॥

अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्योपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् ॥ यथा वा,—

अहमेव गुरुः सुदारुणानामिति हालाहल ! तात ! मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १४ ॥

वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ।
मुधापवादो मुग्धाक्षि ! त्वन्मुखाभं किलाम्बुजम् ॥ १५ ॥

अवर्ण्ये वर्ण्योपमित्यनिष्पत्तिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थं प्रतीपम् । उदाहरणे मुधापवादत्वोक्त्योपमित्यनिष्पत्तिरुद्घाटिता । यथा वा,—

आकर्णय सरोजाक्षि ! वचनीयमिदं भुवि ।
शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥ १५ ॥

प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १६ ॥

उपमेयस्यैवोपमानप्रयोजनधूर्वहत्वेनोपमानकैमर्थ्यमुपमानप्रातिलोम्यात् पञ्चमं प्रतीपम् ।

---

हेत्वर्थे । अव्ययानामनेकार्थत्वात् । पूर्वोदाहरणे 'कान्त्या' इति समानधर्मोपादानम्, इह तु नेति भेदः ॥१३॥ **वर्ण्योपमेयेति** । अन्यस्य=अवर्ण्यस्य । अनादरोऽपि तथा । प्रतीपमित्यर्थः ॥ **अहमेवेति** । सुदारुणानामतितीव्राणाम् । गुरुः श्रेष्ठः । तातेति सानुकम्पसंबोधने । **मा स्म दृप्य इति** । दर्पं मा कृथा इत्यर्थः ॥१४॥ **वर्ण्येनान्यस्येति** । निरूपितत्वं तृतीयार्थः । वर्ण्यनिरूपिता याऽन्यस्यावर्ण्यस्योपमा तस्या इत्यर्थः । अनिष्पत्तिवचः उच्यमाना अनिष्पत्तिः । 'कृदभिहिते' इति न्यायात् । तत्=प्रतीपम् ॥ **मुधेति** । किलेति वार्तायाम् । 'त्वन्मुखाभमम्बुजम्' इति वार्ता मुधा निष्प्रयोजनोऽपवादः । अलीकार्थकत्वेनापवादस्य निष्प्रयोजनत्वम् ॥ **उत्कर्षेति** । उपमानतिरस्कारातिशयप्रयोजकत्वरूपेत्यर्थः ॥ **मुधापवादत्वोक्त्येति** । उक्तार्थमेतत् ॥ **आकर्णयेति** । वचनीयमलीकतया निन्दितम् । अत एव भुवीत्युक्तम् । लोकान्तरे मुखासंनिधानेन विशेषादर्शनादलीकत्वग्रहायोगात् । संनिधानेऽपि विशेषाग्रहणात् पामरैरित्युक्तम् । अत्र वचनीयं पामरैरित्येताभ्यामुपमितेरनिष्पत्तिः प्रकाश्यते ॥ १५ ॥ **प्रतीपमिति** । कः अर्थः प्रयोजनं यस्य तत्तथा । अनर्थकमिति यावत् । तस्य भावः कैमर्थ्यम् । तदपि प्रतीपं मन्वते । आलंकारिका इति शेषः । ननूपमानस्य पद्मचन्द्रादेराह्लादविशेषरूपप्रयोजनसत्त्वात्कथमनर्थकत्वमत आह—**उपमेयस्यैवेति** । उपमानधूर्वहत्वेनोपमान-

---

**टिप्प०**—1 प्रतिगच्छन्त्यापो यस्मिन्निति प्रतीपं=निम्नोन्नतस्थलम्; तत्सादृश्यादत्र लक्षणा ।

---

**पाठा०**—१ 'वर्ण्योपमानोप०'. २ 'मिथ्यावादो हि मुग्धाक्षि'. ३ 'मन्यते'. ३ कृतक०

यथा वा,— ( नै० १।१४ )

तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥

केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तदन्तर्भावं मन्यन्ते । अन्ये तु पञ्चमं प्रतीपप्रकारमुपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुः ॥ १६ ॥

---

कार्यकारित्वेन । अयं चोपमानकैमर्थ्ये हेतुः । अतश्चोपमानकैमर्थ्यमित्यध्याहार्यम् । आह्लादविशेषादेरन्यलभ्यत्वेन प्रयोजनत्वासंभवात् कैमर्थ्यमिति भावः । **'उपमानप्रयोजकधूर्वहत्वेन'** इति पाठे उपमानं प्रयोजकं यस्या इति बहुव्रीहिः । ननु 'उपमानकैमर्थ्यस्योपमानाक्षेपश्चाक्षेपः' ( काव्या. सू. ४।३।२७ ) इति वामनसूत्रेणाक्षेपालंकारत्वेनोक्तत्वात्कथं प्रतीपत्वमत आह—**उपमानप्रातिलोम्यादिति** । उपमानप्रतिकूलत्वादित्यर्थः । प्रतिकूलत्वं च तिरस्कारप्रयोजकत्वमित्युक्तम् । तथा च प्रतीपसामान्यलक्षणाक्रान्तत्वात् प्रतीपान्तर्भाव एवोचित इति भावः ॥ **तदोजस इति** । नैषधीये नैषधवर्णनमिदम् । विधिर्ब्रह्मा तस्य नलस्यौजसः प्रतापस्य तद्यशसश्च स्थितौ सत्यामिमौ सूर्यचन्द्रौ वृथा, प्रतापज्योत्स्नादेः कार्यस्य ताभ्या[1]मेवोपपत्तेर्निरर्थकाविति चित्ते यदा यदा कुरुते तदा भानोर्विधोश्च परिवेषस्य परिधेः कैतवाच्छलात्कुण्डलनां वैयर्थ्यसूचिकां रेखावेष्टनां करोतीत्यन्वयः । अत्र च नायं परिवेषः, किंतु कुण्डलनेत्यपह्नुतौ कैमर्थ्यरूपप्रतीपस्याङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः संकरः । यद्यत्पापमित्यादिवच्च तत्पदे वीप्साया अकरणं न दोष इति बोध्यम् । केचित्–दण्डिप्रभृतयः ॥ **अनन्वयोपमेयोपमाप्रतीपानामिति** । प्रतीपपदेन चात्राद्यभेदत्रयमेव गृह्यते, नत्वन्त्यभेदद्वयमपि । तत्रोपमितिक्रियानिष्पत्तेरभावेनोपमान्तर्भावस्यासंभवात् । वस्तुतस्त्वाद्यभेदत्रयस्यापि नोपमान्तर्गतिर्युक्ता । चमत्कारं प्रति साधर्म्यस्य प्राधान्येनाप्रयोजकत्वात् । सामर्थ्यनिबन्धन उपमानतिरस्कार एव हि तत्र चमत्कृतिप्रयोजकतया विवक्षितः, न तु साधर्म्यमेव मुखतश्चमत्कारितया विवक्षितमिति सहृदयसाक्षिकम् । एवमनन्वयोपमेयोपमयोरपि न सादृश्यस्य चमत्कारितया प्राधान्येन विवक्षा, किंतु द्वितीयतृतीयसदृशव्यवच्छेदोपायतयेति न तयोरप्युपमान्तर्गतिर्युज्यते । अन्यथा सादृश्यवर्णनमात्रेणोपमान्तर्भावे 'धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥' इति व्यतिरेकालंकारस्याप्युपमान्तर्गतिः स्यात् । तत्र साधर्म्यसमानाधिकरणं वैधर्म्यमेव चमत्कारे प्रधानं, न तु साधर्म्यमिति चेत्तुल्यमिदं प्रतीपादिष्वपीति सहृदयैराकलनीयम् । एतावदेवास्वरसबीजमभिसंधायोक्तं केचिदिति । अन्ये–वामनादयः । अत्र चास्वरसबीजं प्रागेवावेदितम् ॥ १६ ॥

इत्यलंकारचन्द्रिकायां प्रतीपालंकारप्रकरणम् ॥ ४ ॥

---

टिप्प०—1 ताभ्यां=ओजोयशोभ्याम्.

---

पाठा०—१ 'सामर्थ्य'.

## रूपकालंकारः ५

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ १७ ॥
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।
अयमास्ते विना शम्भुस्तार्तीयीकं विलोचनम् ॥ १८ ॥

रूपकं लक्षयति—**विषय्यभेदेति** । रूप्यते इतरव्यावृत्ततया ज्ञाप्यते धर्मो अनेनेति रूपं, तद्रूपमस्यासौ तद्रूपस्तस्य भावस्ताद्रूप्यं चन्द्रकार्यकारित्वादि विषयिण उपमानस्याभेदताद्रूप्याभ्यां विषयस्योपमेयस्य यद्रञ्जनमिव रञ्जनम् । स्वोपरक्तबुद्धिविषयीकरणमिति यावत्; तद्रूपकमित्यर्थः । **'रूपकं तत्'** इत्येव पाठः । **'रूपकं तु'** इति पाठे तु तदित्यध्याहार्यम् । 'उपात्तबिम्बाविशिष्टविषयधर्मिकाहार्यारोपनिश्चयविषयीभूतमुपमानाभेदताद्रूप्यान्यतरद्रूपकम्' इति तु निष्कर्षः । 'मुखं चन्द्र' इत्यादौ नामार्थयोरभेदान्वयव्युत्पत्तिवशादाहार्यचन्द्राभेदनिश्चयाल्लक्षणसमन्वयः । 'मुखमपरश्चन्द्र' इत्यत्र तु न चन्द्राभेदो विषयः । अपर इति भेदस्य विवक्षितत्वात्; अपि तु चन्द्रकार्यकारित्वरूपं ताद्रूप्यमिति तत्रापि लक्षणसंगतिः । न च तस्य मुखे सत्त्वात्कथमारोप इति वाच्यम् । चन्द्रकार्यसजातीयकारित्वस्यैव मुखे सत्त्वादिति । यद्यपि नामार्थयोरभेदान्वयानुरोधादिहापि चन्द्रपदलक्षितस्य तत्कार्यकारिणोऽभेदसंसर्गेणैव मुखेऽन्वयादभेदरूपकमेव, तथाप्युपमानतावच्छेदकरूपेणाभेदभाने एवाभेदरूपकत्वं, कार्यकारित्वादिरूपेणाभेदभाने तु ताद्रूप्यरूपकत्वमिति तात्पर्यम् । अत्र 'कमलमनम्भसि[1] कमले च कुवलये तानि कनकलतिकायाम्' इत्याद्यतिशयोक्तिवारणाय–उपात्तेति विषयविशेषणम् । आरोपश्च निषेधानङ्गकत्वेन विशेषणीयः । तेनापह्नुतौ नातिव्याप्तिः । भ्रान्तिवारणाय–आहार्येति । 'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥' इति । निदर्शनावारणाय—बिम्बाविशिष्टेति । संशयोत्प्रेक्षयोर्निरासाय निश्चयेत्युक्तमिति संक्षेपः ॥ **आधिक्येत्यादि** । आधिक्यमुपमानस्य स्वाभाविकीमवस्थामपेक्ष्योपमेयतादात्म्यावस्थायां बोध्यम् । एवं न्यूनत्वमपि । अनुभयमाधिक्यन्यूनत्वोभयरहितमभेदताद्रूप्यान्यतरमात्रम् ॥ **अयं हीत्यादि** । अयं वर्ण्यमानो राजा । येन हेतुना, पुरो नगर्यः । शिवस्यापि त्रिपुरदग्धृत्वात्स एवायमिति भावः । तार्तीयीकमिति । तृतीयमेव तार्तीयीकम् 'तीयादीकक्स्वार्थे वा वाच्यः' (वा० २६९१)

**टिप्प०—1** 'सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम्' इति तस्योत्तरार्धम्; वारिविरले देशे दयिताननरूपं कमलं, तस्मिन् कमले कुवलये च नयनद्वयरूपं नीलोत्पलद्वयम्; एवमेतानि कमल-कुवलयद्वयरूपाणि त्रीण्यपि कान्तातनुरूपायां कनकलतिकायां; सा चेयं सुकुमारतनूरुत्पातपरंपरा मनोरमा का? इति प्रियतमां दृष्ट्वा तत्सखीं प्रतीयं नायकोक्तिः ।

**पाठा०—१** 'ताद्रूप्यं'.

शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥ १९ ॥
साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥ २० ॥

विषय्युपमानभूतं पद्मादि । विषयस्तदुपमेयभूतं वर्णनीयं मुखादि । विषयिणो रूपेण विषयस्य रञ्जनं रूपकम् । अन्यरूपेण रूपवत्त्वकरणात् । तच्च क्वचित्प्रसिद्धविषय्यभेदे पर्यवसितं, क्वचिद्भेदे प्रतीयमान एव तदीयधर्मारोपमात्रे पर्यवसितम् । ततश्च रूपकं तावद्द्विविधम्—अभेदरूपकं, ताद्रूप्यरूपकं चेति । द्विविधमपि प्रत्येकं त्रिविधम् । प्रसिद्धविषय्याधिक्यवर्णनेन तन्न्यूनत्ववर्णनेनानुभयोक्त्या चैवं रूपकं षड्विधम् । 'अयं हि' इत्यादिसार्धश्लोकेनाभेदरूपकाणि, 'अस्या मुखेन्दुना' इत्यादिसार्धश्लोकेन ताद्रूप्यरूपकाणि, आधिक्यन्यूनत्वानु-

---

इति वार्तिकानुसारात् । विलोचनं विनेत्यन्वयः ॥ **शम्भुरिति** । अत्राप्ययमित्यनुषञ्जनीयम् । अन्यथातिशयोक्त्यापत्त्या रूपकोदाहरणत्वासङ्गतेः । अथ राजभावावस्थायां समदृष्टितां समसंख्यलोचनतामेकरूपलोचनवत्तां च ॥ **मुखेन्दुनेति** । अत्रेन्दुपदमिन्दुकार्यकारिपरम् । **किमिन्दुनेति** । प्रसिद्धचन्द्राद्भेदविवक्षणात् । अतश्चन्द्रताद्रूप्यरूपकमिदम् । न चात्रोत्तरपदार्थप्राधान्यादिन्दुकार्यकारिणि मुखाभेदभानान्मुखाभेदरूपकं स्यान्न तु चन्द्रताद्रूप्यरूपकमिति वाच्यम् । व्युत्पत्तिवैचित्र्येण मुखस्य स्वनिष्ठाभेदप्रतियोगित्वसंसर्गेणान्वयाभ्युपगमात्, विशेषणानुयोगिकस्यापि विशेषणसंबन्धतायाः स्वामित्वस्य षष्ठ्यर्थत्ववादिभिः प्राचीनैश्चैत्रस्य धनमित्यादावङ्गीकारात् । एवं च मुखनिष्ठाभेदप्रतियोगी चन्द्रस्तत्कार्यकारी वेति बोधान्न मुखाभेदरूपकापत्तिर्मुखप्रतियोगिकाभेदस्याभानादिति एवमन्यत्राप्यूह्यम् ॥ **असुधेति** । सुधासागरादुदितोत्पन्ना प्रसिद्धा लक्ष्मीः, इयं तु न तथेति न्यूनत्वोक्तिः ॥ **अतिरिच्यत इति** । निष्कलङ्कतया अधिको भवतीत्यर्थः ॥ लक्षणश्लोकं व्याचष्टे—**विषय्युपमानेत्यादि** । विषयिणो 'अभेदेन रूपेण च' इति पाठः । रूपेण आह्लादकत्वादिना ताद्रूप्येण । क्वचित् 'ताद्रूप्येण च' इत्येव पाठः । परमार्थतस्तु प्रामाणिकपुस्तकेषु '**विषयिणो रूपेण विषयस्य रञ्जनम्**' इति युक्ततरः पाठः । तेन तच्चेत्यादेर्न पौनरुक्त्यमिति ध्येयम् । हरिद्रादिना पटादिरञ्जने प्रयुक्तस्य रञ्जनशब्दस्येह प्रवृत्तौ बीजमाह—**अन्यरूपेणेति** । रूपं रक्तपीतादिकम् । अभेदताद्रूप्ये च, तथा चान्यदीयधर्मेणान्यस्य तद्वत्तासंपादनत्वसामान्यादिह गौणरञ्जनशब्दप्रयोग इति भावः । **तच्चेति** । रञ्जनं चेत्यर्थः ॥ **प्रसिद्धेति** । कविसंप्रदायप्रसिद्धोपमानाभेदेन लब्धात्मकमित्यर्थः । रूपपदस्याभेदताद्रूप्योभयसाधारणत्वादिति भावः । '**अभेदेन रूपेण च**' इति पाठे तु तच्चेत्यत्र चशब्दो हेत्वर्थकः । तेन पूर्वोक्तस्यैव समर्थनमिति न पौनरुक्त्यम् ।

---

पाठा०—१ 'सागरोत्थिता'.

भयोत्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानि । 'येन दग्धा' इति विशेषणेन वर्णनीये राज्ञि प्रसिद्धशिवाभेदानुरञ्जनाच्छिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यम् । तृतीयलोचनप्रहाणोक्त्या पूर्वावस्थातो न्यूनताप्रदर्शनान्न्यूनाभेदरूपकं द्वितीयम् । न्यूनत्ववर्णनमप्यभेददार्ढ्यापादकत्वाच्चमत्कारि । विषमदृष्टित्वपरित्यागेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायामुत्कर्षविभावनादधिकाभेदरूपकं तृतीयम् । एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणानुभयन्यूनाधिकभावा उन्नेयाः । अनेनैव क्रमेणोदाहरणान्तराणि—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिञ्छरय्वा
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको वक्ति प्रथमनिहतं कैटभं, कंसमन्य-
स्तत्त्वं स त्वं कथय भगवन्! को हतस्तत्र पूर्वम् ॥

अत्र 'स त्वम्' इत्यनेन यः कंस-कैटभयोर्हन्ता गरुडध्वजस्तत्तादात्म्यं वर्णनीयस्य राज्ञः प्रतिपाद्य तं प्रति कंस-कैटभवधयोः पौर्वापर्यप्रश्नव्याजेन तत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थात उत्कर्षापकर्षयोरविभावनाच्चानुभयाभेदरूपकम् ।

वेधा द्वेधाभ्रमं चक्रे कान्तासु कनकेषु च ।
तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

---

तावद्विधान्तरोक्तेः प्रागुद्देशक्रमप्रातिलोम्येनेति । निर्देशक्रमवैपरीत्येनेत्यर्थः । एतदेव विशदयति—**येनेत्यादि** । विशेषणेनेति हेतौ तृतीया । पुरदग्धृत्वविशेषणहेतुकशिवाभेदानुरञ्जनादित्यर्थः । ननु न्यूनत्ववर्णने भेदापकर्षयोः प्रतीतेः कथं चमत्कारितेत्यत आह—**अभेददार्ढ्यापादकत्वादिति** । विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकतया निषिद्धव्यतिरिक्तसकलगुणशालिताप्रतीतौ 'एकदेशविकृतमनन्यवद्भवति' इति न्यायेनाभेदनिश्चयसंपादकत्वादित्यर्थः । विभावनात्=प्रकाशनात् ॥ **चन्द्रज्योत्स्नेति** । राजानं प्रति कस्यचिदुक्तिः । हे भगवन्! चन्द्रज्योत्स्नावद्विशदं श्वेतं पुलिनं यस्य तथाभूतेऽस्मिन् शरय्वाः शरयूनामकनद्याः सैकते सिकतामयदेशे कयोश्चित्सिद्धतरुणयोश्चिरतरमतिचिरकालं वादरूपं द्यूतमभूत् । कीदृक्तत्राह—एकः सिद्धयुवा कैटभं दैत्यविशेषं प्रथमं निहतं वक्ति वदति, अन्यः कंसं प्रथमं निहतं वक्ति, स कंस-कैटभयोर्हन्ता त्वं तत्र तयोर्मध्ये पूर्वं को हत इति तत्त्वं कथयेत्यन्वयः । यद्यपि मुनिप्रभृतावेव भगवन्नित्यामन्त्रणमुचितं न राजादौ तथापि राज्ञो भगवत्तादात्म्यवर्णनादनौचित्यं परिहरणीयम् । क्वचित्तु **'भवता'** इति पाठः । अत्र 'ज्योत्स्ना'पदेनैव चन्द्रिकालाभेऽपि 'चन्द्र'पदं शारदपूर्णचन्द्रपरतया नापुष्टार्थम् । पुष्पमालेत्यत्र पुष्पपदमिवोत्कृष्टपुष्पपरतयेति बोध्यम् । वादयोग्यतासूचनाय यूनोरित्युक्तम् । 'अयं हि' इत्युदाहरणेऽभेदारोपहेतुभूतं पुरदाहकत्वरूपं साधर्म्यमुपात्तं, इह तु जगद्रक्षकत्वादिकं तद्गम्यमानमिति भेदः ॥ **वेधा इति** । द्वेधा कान्ताधर्मिकत्व-कनकधर्मिकत्वरूपविधाद्वययुक्तं भ्रमं बलवदनिष्टाननुबन्धिसुखसाधनत्वभ्रमम् । सर्वेषामपि भ्रमाणां वेधसा निर्माणेऽपि

अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिवतादात्म्यमुपदर्श्य नराकृतिरिति दिव्यमूर्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकम् ।

त्वय्यागते किमिति वेपत एष सिन्धु-
स्त्वं सेतुमन्थकृदतः किमसौ बिभेति ।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य
त्वां राजपुङ्गव ! निषेवत एव लक्ष्मीः ॥

अत्र 'त्वं सेतुमन्थकृत्' इति सेतोर्मन्थनस्य च कर्त्रा पुरुषोत्तमेन सह वर्णनीयस्य तादात्म्यमुक्त्वा तथापि त्वदागमनं सेतुबन्धाय वा मन्थनाय वेति समुद्रेण न भेतव्यम् । द्वीपान्तराणामपि त्वद्वशंवदत्वेन पूर्ववद्द्वीपान्तरे जेतव्याभावात् प्राप्तलक्ष्मीकत्वेन मन्थनप्रसक्त्यभावाच्चेति पूर्वावस्थात उत्कर्षविभावनादधिकाभेदरूपकम् ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्र 'अपरः शीतांशुः' इत्यनेन वक्त्रेन्दोः प्रसिद्धचन्द्राद्भेदमाविष्कृत्य तस्य च प्रसिद्धचन्द्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनादनुभयताद्रूप्यरूपकम् ।

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शंभुर्भगवान्बादरायणः ॥

---

प्राधान्यविवक्षयेत्थमभिधानम् । अयमास्त इत्युदाहरणे शंभुसादृश्यं गम्यमानमिह त्वनासक्तिरूपं तदुपात्तमिति भेदः ॥ **त्वय्यागत इति** । राजानं प्रति कवेरुक्तिः । सेतुश्च मन्थश्चेति द्वन्द्वः । मन्थनं मन्थोऽमृतमन्थनम् । द्वीपान्तरेऽपीत्यपिना सुतरामेतद्द्वीपे नास्तीति सूच्यते । अद्य राजभावावस्थायां शंभुर्विश्वमित्यत्र विश्वसंरक्षकत्वं सादृश्यमुपात्तम्, इह तु नेति भेदः ॥ **किं पद्मस्येति** । दयितां प्रति नायकोक्तिः । तव वक्त्ररूपे इन्दुकार्यकारिणि सत्ययमपरः प्रसिद्धः शीतांशुश्चन्द्रो यदुज्जृम्भते उदितो भवति तस्मात्तव वक्त्रेन्दुः पद्मस्य रुचिं कान्तिं न हन्ति किम् । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात्प्रयोजनस्यान्यतः संभवे तदुज्जृम्भणस्यासङ्गतेरिति । किं न हन्ति इति काक्वा अपि तु हन्त्येवेति पर्यवसाने तदुज्जृम्भणं मुधेति प्रतीतिपर्यवसानम् । एवमग्रिमवाक्ययोरपि । झषो मकरः केतनं चिह्नमस्य तथाभूतस्य समुद्रस्य कामस्य च आलोकनमालोकः प्रकाशश्च तन्मात्रेण अमृतेन दर्पोऽभिमान उज्जृम्भणहेतुः स्याच्चेदयुक्तमेतत् । यत इह वक्त्रेन्दौ बिम्बाधरे तदप्यस्त्येवेति समुचितपदाध्याहारेण योजनीयम् । यच्छब्दस्योत्तरवाक्यगतत्वेन तच्छब्दाक्षेपक्षमत्वान्न तदनुपादानेऽपि न्यूनपदत्वदोषः । कार्यकारित्वमात्रेत्यनेनाभेदव्यावृत्तिः । 'अस्या मुखेन्दुना' इत्यत्र 'किमिन्दुना' इति पुनरुपादानमात्रं भेदविवक्षाज्ञापकम् । इह त्वपरशब्दस्याप्युपादानमिति विशेषः ॥ **अचतुर्वदन इति** । बादरायणो व्यासः । भाले लोचनं यस्येति

अत्र हर्यादौ 'अपर' इति विशेषणात्रिष्वपि ताद्रूप्यमात्रविवक्षा विभाविता, चतुर्वेदनत्वादिवैकल्यं चोक्तमिति न्यूनताद्रूप्यरूपकम् । इदं विशेषोक्त्युदाहरणमिति वामनमतम् । यदाह (काव्या० सू० ४।३।२३)—'एकगुणहानिकल्पनायां गुणसाम्यदार्ढ्यं विशेषोक्तिः' इति ।

किमसुभिर्ग्लपितैर्जड ! मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥ (नै०४।५२)

अत्र दमयन्तीकृतचन्द्रोपालम्भे प्रसिद्धचन्द्रो न निर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः, किंतु नलमुखचन्द्र एवेति ततोऽस्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकम् । रूपकस्य सावयवत्वनिरवयवत्वादिभेदप्रपञ्चनं तु चित्रमीमांसायां द्रष्टव्यम् ॥ १७–२० ॥

---

व्यधिकरणत्वेऽपि गमकत्वाद्बहुव्रीहिः । ननु हरावपर इति विशेषणात्तदंशे एव ताद्रूप्यरूपकं स्यादितरांशे त्वभेदरूपकमेवेत्याशङ्क्याह—**अत्रेति । त्रिष्वपीति** । एकत्रानेकारोपरूपायां रूपकमालायामवैरूप्याय तात्पर्यग्राहकस्यैकत्र स्थितस्यापि साधारण्यमेवोचितमिति भावः । अयमेव च साध्वीत्यादिपूर्वोदाहरणाद्विशेषः । न्यूनरूपकस्य चमत्कारित्वं पूर्वमुक्तं वृद्धसंमत्या द्रढयति—**इदमिति** । यदाहेत्यनन्तरं स इति शेषः । एकगुणहानावभिहितायामिति शेषः । गुणसाम्यदार्ढ्यं शेषगुणप्रयुक्तसाम्यायोगव्यवच्छेदः । चतुर्वेदनत्वाद्येकगुणव्यतिरेकस्य प्रमाणान्तरसिद्धस्य पुनर्वचनं शेषगुणाभावपरिसंख्यार्थं पर्यवस्यतीति भावः । अत्र च रूपकप्रभेदत्वेनैव चमत्कारोपपत्तौ नालंकारान्तरत्वं न्यूनत्ववर्णनस्य युक्तम् । सामग्रीकालीनकार्याभावस्य त्वलंकारान्तरासंभिन्नस्य तद्वक्ष्यमाणं युक्तमित्यस्वरसो 'मतम्' इत्यनेन सूचितः ॥ **किमसुभिरिति** । जडेति मूर्ख-जलमयेति साधारणं चन्द्रसंबोधनम् । ग्लपितैर्नष्टैरसुभिर्निमित्तभूतैर्भीमसुताया दमयन्त्या मनो मयि निमज्जतु निलीयतामिति मन्यसे किमिति सोपहासकाकुः । तेन मैवं मंस्था इत्यर्थः । अत्र हेतुमाह—किल निश्चितम् । मम विबुधः पण्डितः स्मरः तदर्थिकां सः प्राणनिर्गमकालीनमनःप्रवेशोऽर्थो यस्यास्तां श्रुतिं नलमुखेन्दुपरां मनःप्रवेशाधिकरणत्वेन नलमुखचन्द्रतात्पर्यवतीमाहेति । अयं कलङ्किन इत्युदाहरणे दोषशून्यत्वप्रयुक्तं शाब्दमाधिक्यम्, इह तु गुणविशेषप्रयुक्तं गम्यमानं तदिति विशेषः ॥ **सावयवत्वनिरवयवत्वादीति** । आदिना समस्तवस्तुविषयत्वादिरूपैतत्प्रभेदानां परम्परितत्वरूपभेदान्तरस्य च परिग्रहः । तथा हि—सावयवं निरवयवं परम्परितं चेति त्रिविधं रूपकं प्रत्येकं क्रमेण द्विविधम् । समस्तवस्तुविषयमेकदेशविवर्ति च केवलं माला च श्लिष्टवाचकमश्लिष्टवाचकं चेति श्लिष्टाश्लिष्टभेदयोः केवलमालारूपत्वाभ्यामन्त्यं चतुर्विधमित्यष्टौ भेदाः । तत्र 'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् । द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्रां कपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥' इति पद्ये रात्रौ कापालिकीत्वारोपस्य प्रधान-

---

पाठा०—१ '°साम्याय योगः'.

## परिणामालंकारः ६

**परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।**
**प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ २१ ॥**

यत्रारोप्यमाणो विषयी किंचित्कार्योपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासंभवात्प्रकृतात्मना परिणतिमपेक्षते तत्र परिणामालंकारः । अत्रोदाहरणम्-प्रसन्नेनेति । अत्र हि अब्जस्य वीक्षणोपयोगित्वं निबध्यते, न तु दृशः । मयूरव्यंसकादिसमासेनोत्तरपदार्थप्राधान्यात् । न चोपमितसमासाश्रयणेन दृगब्जमिवेति पूर्वपदार्थप्राधान्यमस्तीति वाच्यम् । प्रसन्नेनेति सामान्यधर्मप्रयोगात् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२।१।५६) इति तद-

---

तयावयविनोऽवयवरूपाणि ज्योत्स्नाभस्मेत्यादिरूपकाणीति सावयवत्वं समस्तस्य वस्तुन आरोप्यमाणस्य शब्दविषयत्वं च द्रष्टव्यम् । 'प्रौढमौक्तिकरुचः पयोमुचां विन्दवः कुटजपुष्पबन्धवः । विद्युतां नभसि नाट्यमण्डले कुर्वते स्म कुसुमाञ्जलिश्रियम् ॥' इत्यत्र प्रधानस्य नभसि नाट्यमण्डलत्वारोपस्यावयवभूतं विद्युतां नर्तकीत्वरूपणमार्थं न शाब्दमित्येकदेशे विशेषेण शाब्दतया वर्तनादेकदेशविवर्तित्वम् । 'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् । अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥' इत्यत्र प्रेमलतिकामित्यमालारूपं निरवयवम् । 'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥' इत्यत्र च मालारूपं निरवयवं बोध्यम् । एवम् 'अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥' इत्यत्र वेणुकुलयोः श्लिष्टेन वंशपदेन कुले वेणुत्वारोपपूर्वक एव राज्ञि मुक्तारत्नत्वारोप इति श्लिष्टवाचकं केवलपरम्परितरूपकं विद्वन्मानसेत्यादावेतदेव मालारूपम् । चतुर्दशलोकवल्लिकन्द इत्यत्राश्लिष्टवाचकं केवलपरम्परितम् । 'पर्यङ्को राजलक्ष्म्याः' इत्यादौ 'आलानं जयकुञ्जरस्य' इत्यादौ चाश्लिष्टवाचकं मालापरम्परितं च द्रष्टव्यम् । विस्तरभयान्नेह प्रपञ्च्यते ॥ १७-२० ॥

इत्यलंकारचन्द्रिकायां रूपकप्रकरणम् ॥ ५ ॥

परिणामं लक्षयति—**परिणाम इति** । विषयिनिष्ठायाः प्रकृतकार्योपयोगितायाः अवच्छेदिका विषयतात्मना परिणतिः परिणामः । सा च विषयतादात्म्याध्यवसायविषयता । एवं च विषयाभेदस्यैव विषयिणि विवक्षणाद्दृगभिन्नेनाब्जेनेति

---

**टिप्प०**—1 शेखरकारास्तु–उपमानप्रतियोगिकाभेदो रूपकम्; उपमेयप्रतियोगिकाभेदः परिणामः । प्रतीपवत्तत्राभेदे उपमेयप्रतियोगिकत्वतात्पर्यग्राहकं प्रकृतकार्योपयोगः । न तु तच्छरीरेऽस्य प्रवेशः । इत्थं च परिणामो विशेषणसमासायत्तः' इत्याहुः ।
2 'अत्र प्रेममात्रे लतिकात्वमात्रारोपः, न तु तदुपपातकत्वेन क्वचिदप्यान्यारोपः' इति प्रदीपोद्द्योतयोरुक्तम् ।

प्रयोग एवोपमितसमासानुशासनात् । अब्जस्य वीक्षणोपयोगित्वं न स्वात्मना संभवति । अतस्तस्य प्रकृतदृगात्मना परिणत्यपेक्षणात् परिणामालंकारः ॥

यथा वा (मुरा. ना.),—

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥

अत्रारोप्यमाण आतरः सौमित्रिमैत्रीरूपतापत्त्या गुहोपकारलक्षणकार्योपयोगी न स्वात्मना, गुहस्य रघुनाथप्रसादैकार्थित्वेन वेदनार्थित्वाभावात् ॥

---

## उल्लेखालंकारः ७

**बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।**
**स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥२२॥**

यत्र नानाविधधर्मयोग्येकं वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदेनानेकेन ग्रहीत्रानेकधोल्लिख्यते तत्रोल्लेखः[1] । अनेकधोल्लेखने रुच्यर्थित्वभयादिकं

---

स्वारसिक एव बोधो न तु रूपक इव दृङ्निष्ठाभेदप्रतियोगिनाब्जेनेत्यनुयोगित्वमुख इति रूपकाद्भेदो बोध्यः । असमासेऽप्युदाहरति—**तीर्त्वेति** । मुरारिनाटकगतमेतत्पद्यम् । आत्मना तृतीयः । सीतालक्ष्मणसहित इति यावत् । असौ प्रक्रान्तो रामः भूतेशस्य शंभोर्मौलिमालारूपाममरनदीं गङ्गां तीर्त्वा तस्मै नाविकाय गुहसंज्ञाय निषादपतये सौमित्रेर्लक्ष्मणस्य मैत्रीरूपमातरं तरणमूल्यमुपकृतवान् उपकाररूपतया दत्तवान् । अथो अनन्तरं चित्रकूटं प्रति प्रतस्थे प्रस्थितवान् । कीदृशः ? व्यामेन तिर्यक्प्रसारितभुजद्वयान्तरालेन ग्राह्यौ तावत्परिणाहौ स्तनौ यासां तथाभूताभिः शबराणां व्याधानां युवतिभिः कौतुकेनोदञ्चन्ति विकसन्त्यक्षीणि यत्र क्रियायां यथा तथा कृच्छ्रात्क्लेशात् अत एव क्षणमन्वीयमानः । अनुगम्यमान इत्यर्थः ॥ २१ ॥

इत्यलंकारचन्द्रिकायां परिणामालंकारप्रकरणम् ॥ ६ ॥

अथोल्लेखालंकारं लक्षयति—**बहुभिरिति** । एकस्य बहुधोल्लेखादित्यन्वयः । उल्लेखनं विषयीकरणमुल्लेखः । हेतौ पञ्चमी । तथा चैवंविधोल्लेखाद्धेतोरुल्लेख इष्यते । उल्लेख इति व्यवह्रियत इत्यर्थः । व्यवहारं प्रति लक्षणस्य प्रयोजकत्वात् ॥ **स्त्रीभिरिति** । स्वर्द्रुः स्वर्गसंबन्धी द्रुमः कल्पतरुः । कालो यमः । स प्रकृतो राजा । श्लोकं व्याचष्टे—**यत्रेति** । नानाविधेति सौन्दर्यदातृत्वशूरत्वादिरूपे इत्यर्थः । **तत्तद्धर्मेति** । रुच्यर्थित्वभयादिरूपेत्यर्थः । एतच्च स्वरूपकथनं न तु लक्षणान्तर्गतम् । ननु द्वाभ्यां ग्रहीतृभ्यां निमित्तद्वयवशात् प्रकारद्वयेनोल्लेखेऽव्याप्तिरत आह—**अनेकेत्यादि** । तथा च लक्षणे बहुपदमनेकपरमिति भावः । एवं च ग्रहीतृविषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानानेकप्रकारत्वमुल्लेख इति लक्षणं बोध्यम् । 'सौन्दर्यस्य तरङ्गिणी'त्यादिमालारूपकवारणायायं विशेष-

---

टिप्प०—1 स्वरूप-फल-हेत्वादिभेदैः षोढोल्लेखालंकार उक्तः साहित्यसारे ।

यथार्हं प्रयोजकम्। रुचिरभिरतिः। अर्थित्वं लिप्सा। 'स्त्रीभिः' इत्याद्युदाहरणम्। अत्रैक एव राजा सौन्दर्यवितरणपराक्रमशालीति कृत्वा स्त्रीभिरर्थिभिः प्रत्यर्थिभिश्च रुच्यर्थित्वभयैः कामकल्पतरुकालरूपो दृष्टः। यथा वा,—

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम्॥

अत्र यस्तथा भीतं भक्तं गजं त्वरया त्रायते स्म सोऽयमादिपुरुषोत्तम इति वृद्धाभिः संसारभीत्या तदभयार्थिनीभिः कृष्णोऽयं मथुरापुरं प्रविशन् दृष्टः। यस्तथा चञ्चलत्वेन प्रसिद्धायाः श्रियोऽपि कामोपचारवैदग्ध्येन नित्यं वल्लभः सोऽयं दिव्ययुवेति युवतिसमूहैः सोत्कण्ठैर्दृष्टः। बालाभिस्तु तद्वाह्यगतरूपवेषालंकारदर्शनमात्रलालसाभिर्यथास्थितवेषादियुक्तो दृष्ट इति बहुधोल्लेखः। पूर्वः कामत्वाद्यारोपरूपकसंकीर्णः। अयं तु शुद्ध इति भेदः॥ २२॥

---

णम्। तत्र ग्रहीतृभेदप्रयुक्तं नानेकप्रकारत्वमिति नातिव्याप्तिः। वक्ष्यमाणोल्लेखप्रभेदसाधारण्यायान्यतमत्वप्रवेशः। तद्विवेचनं तद्व्याख्यानावसरे करिष्यामः। अन्यतमानेकत्वप्रयुक्तमेकस्योल्लिख्यमानत्वमित्येतावदुक्तौ तु 'विद्याविक्रमसौन्दर्यतपसां निधिमागतम्। पश्यन्ति विबुधाः शूराः स्त्रियो वृद्धाश्च कौतुकात्॥' इत्यत्रातिव्याप्तिरतोऽनेकप्रकारत्वमित्युक्तम्। न चोल्लिख्यमानप्रकारत्वमित्येवास्तु। उक्तोदाहरणे प्रकारस्य कस्याप्यनुल्लेखादेवानतिप्रसङ्गादिति वाच्यम्। एवमपि 'नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते। विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रन्दन्ति शोकानलविकलतया किंच नन्दन्त्युलूकाः॥' इत्यत्र धूलिजालरूपस्यैकस्य वस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वेन प्रकारेणोल्लेखनादतिव्याप्तेर्वारणाय प्रकारेऽनेकत्वोपादानस्यावश्यकत्वात्। 'सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः। तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैरित्थं चोलेन्द्रसिंह! त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्॥' इत्यनेकभ्रान्तिपरम्परायामतिप्रसङ्गवारणार्थमेकस्येत्युक्तमिति संक्षेपः। **यथार्हमिति**। स्त्रीभिः कामत्वोल्लेखे तासां रुचिरनुरागः प्रयोजकः। अर्थिभिः कल्पतरुत्वोल्लेखे तेषां लिप्सा प्रयोजिका। शत्रुभिर्यमत्वोल्लेखे तेषां भयं प्रयोजकमित्येवं यथायोग्यमित्यर्थः। उदाहरणान्तरमाह— **यथा वेति। गजत्रातेति**। श्रीकृष्णस्य मथुराप्रवेशवर्णनम्। शौरिः श्रीकृष्णः वृद्धाभिर्गजत्रातेति दृष्ट इत्याद्यन्वयः। सकौतुकं सोत्कण्ठमिति दर्शनक्रियाविशेषणं सर्वत्र संबध्यते। श्लोकं व्याचष्टे—**य इति**। तथा महाग्राहग्रहणेन। युवतिसमूहैस्तरुणीसमूहैः॥ **पूर्व इति**। उदाहृत इति शेषः। उल्लेख इत्यनुषज्यते। **'आरोपरूपकसंकीर्ण'** इति पाठे आरोपस्वरूपं यद्रूपकं तत्संकीर्ण इत्यर्थः। **'आरोपरूपरूपक'** इति पाठस्तु स्पष्टार्थ एव॥ २२॥

---

पाठा०—१ 'पूर्वं'.

एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ॥ २३ ॥

ग्रहीतृभेदाभावेऽपि विषयभेदाद्बहुधोल्लेखनादसावुल्लेखः। उदाहरणं श्लेषसंकीर्णम्। वचोविषये महान्पटुरित्यादिवद्बृहस्पतिरित्याद्यर्थान्तरस्यापि क्रोडीकरणात्।

शुद्धो यथा,—

अकृशं कुचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् ॥ २३ ॥

---

स्मृति-भ्रान्ति-संदेहालंकाराः ८–१०

स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम्।
पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः ॥ २४ ॥

---

उल्लेखप्रभेदान्तरमाह—**एकेनेति**। व्याचष्टे—**ग्रहीत्रिति**। विषयभेदादित्यनन्तरमेकस्येति शेषः। विषयपदमाश्रयसंबन्धिनोरुपलक्षणम्। अत एव लक्षणे ग्रहीतृविषयादीत्यादिपदेन तत्संग्रहः कृतः। तत्र विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते। अधिकरणसप्तमीनिर्दिष्टस्त्वाश्रयः। षष्ठ्यादिनिर्दिष्टः संबन्धीति विवेकः। गुरुरित्यस्यार्थकथनं महानिति। 'गुरुर्महति वाच्यवत्' इति विश्वकोशात्। पटुरिति तु तात्पर्यपर्यवसितार्थकथनम्। पटुर्दक्ष इत्यादीत्यादिना कीर्तिविषये 'अर्जुनो धवल' इतिवत् पार्थ इत्यर्थान्तरस्य धनुर्विषये, 'भीष्मो भीषण' इतिवद्गाङ्गेय इत्यर्थान्तरस्य च संग्रहः। 'भीष्मस्तु भीषणे रुद्रे गाङ्गेये च निशाचरे' इति विश्वः। क्रोडीकरणादेकवृन्तगतफलद्वयन्यायेन संग्रहात्॥ **अकृशमिति**। कपालिनो हरस्य भागधेयं भाग्यं तत्त्वेनाध्यवसितं पार्वतीस्वरूपं चित्ते आविरस्तु प्रकटीभवत्विति संबन्धः। किंभूतम्? कुचयोः कुचविषये अकृशं स्थूलम्। एवमग्रेऽपि। विलग्नो मध्यः। 'विलग्नो मध्यलग्नयोः' इति विश्वः। विपुलमायतम्। अधरे अधरोष्ठे। अरुणमारक्तम्। **'अरुणाधरम्'** इति पाठस्तु प्रक्रमभङ्गादयुक्तः। चित्ते इति करुणाशालीत्यत्रापि मध्यमणिन्यायेन संबध्यते। एवम् 'तुषारास्तापसव्रातै तापसेषु च तापिनः। दृगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये॥' इत्यादावधिकरणानेकत्वप्रयुक्तः 'यमः प्रतिमहीभृतां हुतवहोऽसि तन्वीभृतां सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम्। गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः॥' इत्यादौ संबन्धिभेदप्रयुक्तश्चोल्लेखो द्रष्टव्य इति दिक्॥२३॥

इत्यलंकारचन्द्रिकायामुल्लेखालंकारप्रकरणम्॥ ७॥

अथ ज्ञानप्राधान्यसाम्यात्स्मृत्यादीनलंकारान् लक्षयति—**स्यादिति**। स्मृतिभ्रान्तिसंदेहैर्व्यवहर्तव्यतया हेतुभूतैस्तदङ्कं तेषामङ्कस्तदङ्कः, तदङ्को विद्यते यस्मिंस्तथाभूतम्। मत्वर्थीयाच्प्रत्ययात्। अङ्कश्चिह्नं संज्ञेति यावत्। तेन तत्संज्ञासंज्ञित-

अयं प्रमत्तमधुपस्त्वन्मुखं वेत्ति पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ २५ ॥

स्मृतिभ्रान्तिसंदेहैः सादृश्यान्निबध्यमानैः स्मृतिभ्रान्तिमान्संदेह इति स्मृत्यादिपदाङ्कितमलंकारत्रयं भवति । तच्च क्रमेणोदाहृतम् ॥

यथा वा (माघ. ८।६४),—

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥

पूर्वत्र स्मृतिमदुदाहरणे सदृशस्यैव स्मृतिरत्र सदृशलक्ष्मीस्मृतिपूर्वकं तत्संबन्धिनो जलनिधिमन्थनस्यापि स्मृतिरिति भेदः ।

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

---

मित्यर्थः । अलंकृतित्रयं व्यवहारविषयः स्यादिति योजना । एवं च स्मृतित्व-भ्रान्तित्व-संदेहत्वानि त्रीणि लक्षणानि । तत्र स्मृतित्वं तावत् 'स्मरामि' इत्यनुभवसाक्षिको जातिविशेषः । भ्रान्तित्वं विशेष्यावृत्तिप्रकारकज्ञानत्वम् । संदेहत्वं तु निश्चयभिन्नत्वे सति संभावनाभिन्नज्ञानत्वं पारिभाषिकम् । स्मृतिभ्रान्त्यादिवारणाय—सत्यन्तम् । उत्प्रेक्षावारणाय–संभावनाभिन्नेति । चमत्कारित्वं पुनरखिलालंकारसाधारणं लक्षणत्रयेऽपि निवेशनीयम् । तेन 'स घट' इति स्मृतौ, 'इदं रजतम्' इति भ्रान्तौ, 'अयं स्थाणुः पुरुषो वा' इति संशये नातिप्रसङ्ग इति ध्येयम् । गाहते आकलयति । स्मरतीति यावत् । सादृश्यान्निबध्यमानैरिति चमत्कारित्वोपलक्षकम् । न त्वेतस्यापि स्वातन्त्र्येण लक्षणे प्रवेशः । सादृश्यामूलकानामपि स्मृत्यादीनां चमत्कारित्वेऽलंकारताया अनिवार्यत्वात्, चमत्कारितैकजीवातुत्वात्तस्याः । अचमत्कारित्वे तु तेनैव वारणमिति व्यर्थं सादृश्यहेतुकत्वविशेषणम् । न चैतदेवोपादीयतां न तु चमत्कारित्वविशेषणमिति वाच्यम् । उदाहृतेषु सादृश्यमूलकस्मृत्यादिष्वतिप्रसङ्गवारणार्थं तस्यावश्यकत्वादिति संक्षेपः ॥ **दिव्यानामिति** । माघे जलक्रीडावर्णनप्रस्तावे पद्यमिदम् । शौरिः श्रीकृष्णोऽम्भस्तो जलादुत्तरन्तीं निर्गच्छन्तीं श्रियमिव श्रीसदृशीं कांचित्पुरस्तादग्रे उद्वीक्ष्य जलनिधिमन्थनस्य अस्मार्षीत्स्मृतवान् । 'अधीगर्थ—' (२।३।५२) इति कर्मणि षष्ठी । किंभूताम् ? दिवि भवा दिव्यास्तेषां देवानामपि सौन्दर्यातिशयेन कृताश्चर्याम् । तथा स्फुरता अरविन्देन कमलेन चारू रमणीयो हस्तो यस्यास्तथाभूताम् । तथा चैवंविधनायिकासदृशलक्ष्मीस्मरणात्तत्संबन्धिजलनिधिमन्थनस्मरणमिति भावः । अत्र 'श्रियमिव' इत्युपमायाः स्मृत्यङ्गत्वात्तयोरङ्गाङ्गित्वलक्षणः संकरः ॥ **पलाशेति** । वक्रिमलौहित्यरूपसादृश्याद्भ्रान्तिः ।

---

पाठा०—१ 'प्रमत्तो मधुपः'. २ '°कुसुमभ्रान्त्या'.

अत्रान्योन्यविषयभ्रान्तिनिबन्धनः पूर्वोदाहरणाद्विशेषः ।

जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः ।

किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः ॥

पूर्वोदाहृतसंदेहः [1]प्रसिद्धकोटिकः, अयं तु कल्पितकोटिक इति भेदः २४-२५

---

## अपह्नुत्यलंकारः ११

**[1]शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।**
**नायं सुधांशुः, किं तर्हि ? व्योमगङ्गासरोरुहम् ॥ २६ ॥**

---

अलिर्भ्रमरः । सोऽपि शुकोऽपि ॥ **भ्रान्तिनिबन्धन इति** । भ्रान्तिप्रयुक्त इत्यर्थः ॥ **जीवनेति** । जीवनं जलं प्राणसंयोगश्च । अथवा जीवन्त्यनेनेति जीवनं धनम् । नम्रा अधोमुखा विनीताश्च । उन्नता ऊर्ध्वमुखा उद्धताश्च । घटीयन्त्रमेकरज्जुसंबद्धघटमालारूपम् । भाषायां 'रहाट' इति प्रसिद्धम् ॥ **कल्पितेति** । घटीयन्त्रसंबन्धिनोर्ज्येष्ठकनिष्ठयोः कोट्योरप्रसिद्धेरिति भावः ॥२४-२५॥

इत्यलंकारचन्द्रिकायां स्मृति-भ्रान्ति-संदेहालंकारप्रकरणम् ॥ ८-१० ॥

**अथापह्नुतिः** । तत्र तावदभेदप्रतिपत्तिनिरूपिताङ्गाङ्गित्वान्यतरवान्निषेधोऽपह्नुतिरित्यपह्नुतिसामान्यलक्षणम् । निषेधश्च नञादिसत्त्वे वाच्यः । क्वचित्तु तदभावात्कैतवादिपदैः परमतत्वोपन्यासादिभिश्च व्यङ्ग्यः । तथा क्वचिदभेदप्रतिपत्तिसमानाधिकरणः, क्वचित्तु तद्व्यधिकरण इति विवेकः । एवमभेदः क्वचिदारोप्यमाणः, क्वचित्तु स्वाभाविकः । एवं तत्प्रतिपत्तिरपि क्वचिद्व्यञ्जनया प्रायशस्तु वाच्यवृत्त्येति बोध्यम् । निषेधोऽपह्नुतिरित्येतावदुक्तौ 'न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः' इति प्रसिद्धनिषेधानुवादरूपे प्रतिषेधालंकारेऽतिव्याप्तिरतोऽभेदप्रतिपत्तिनिरूपितेत्यादिविशेषणमुपात्तम् । तत्र हि युद्धप्रवृत्तं कितवं प्रति युद्धे द्यूतत्वाभावो निर्ज्ञातोऽपि कीर्त्यमानो द्यूत एव तव प्रागल्भ्यं न तु युद्धे इत्युपहासार्थो न तु युद्धाभेदप्रतिपत्त्यङ्गम्, तस्यास्तदुपन्यासं विनापि सिद्धत्वात् । नाप्यङ्गीभूतः । निर्ज्ञातत्वेन तदुपायानपेक्षणादिति तद्वारणम् । अभेदप्रतिपत्तिनिरूपिताङ्गित्वमात्रोक्तौ शुद्धापह्नुति-हेत्वपह्नुति-पर्यस्तापह्नुति-कैतवापह्नुतिष्वव्याप्तिः । तत्र सर्वत्र 'नायं सुधांशुः' इत्यादेर्निषेधस्य व्योमगङ्गासरोरुहाद्यभेदप्रतिपत्त्यर्थत्वेन तदङ्गतयाङ्गित्वाभावात् । अभेदप्रतिपत्तिनिरूपिताङ्गत्वमात्रोक्तौ च भ्रान्तापह्नुतिच्छेकापह्नुत्योरव्याप्तिः । तयोर्भ्रान्तिशङ्कानिवारणरूपनिषेधस्य प्राधान्येनाभेदप्रतिपत्त्यङ्गत्वाभावात् । अतस्तदन्यतरवत्त्वनिवेशः । तदाहुः—'साम्यायापह्नवो यत्र

---

**टिप्प०**—1 दण्डी च 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थदर्शनम् । न पञ्चेषुः सरस्तस्य सहस्रं पत्रिणां यतः' इति तल्लक्षणं सोदाहरणमाह । मम्मटस्तु—'प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः' इति लक्षणमभिधाय शाब्दी चार्थी चेति तस्या द्वैविध्यमाख्यातवान् ।

---

**पाठा०**—१ 'अप्रसिद्धकोटिकः'.

३ कुवल०

वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः शुद्धापह्नुतिः[1]। यथा चन्द्रे वियन्नदीपुण्डरीकत्वारोपफलकस्तदीयधर्मस्य चन्द्रत्वस्यापह्नवः ॥

यथा वा,—

अङ्कं केऽपि शशङ्किरे, जलनिधेः पङ्कं परे मेनिरे,
सारङ्गं कतिचिच्च संजगदिरे, भूच्छायमैच्छन्परे ।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

अत्रौत्प्रेक्षिकधर्माणामप्यपह्नवः परपक्षत्वोपन्यासादर्थसिद्धः ॥ २६ ॥

**स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।**
**नेन्दुस्तीव्रो न निश्यर्कः, सिन्धोरौर्वोऽयमुत्थितः ॥२७॥**

---

सा विज्ञेया त्वपह्नुतिः । अपह्नवाय सादृश्यं यस्मिन्नेषाप्यपह्नुतिः ॥' इति । सर्वं चैतत्तदुदाहरणव्याख्यानावसरे व्यक्तीभविष्यतीति न प्रपञ्चितम् । एवं सामान्यलक्षणं मनसि निधाय शुद्धापह्नुत्यादींस्तद्भेदान्वक्तुमुपक्रमते—**शुद्धापह्नुतिरिति ।** लक्षणं व्याचष्टे—**वर्णनीय इति ।** कविमतेर्विकासः स्फूर्तिशालिता । तथा चोपमेये उपमानारोपफलक उपमेयधर्मत्वाभिमतनिषेधः शुद्धापह्नुतिरिति लक्षणमिति भावः । अत्र चानुक्तनिमित्तत्वं कैतवादिपदाव्यङ्ग्यत्वं च निषेधविशेषणं बोध्यम् । तेन हेत्वपह्नुतौ कैतवापह्नुतौ च नातिप्रसङ्गः । 'कान्तः किं ? नहि, नूपुरः' इति छेकापह्नुतावुपमेयधर्मस्य कान्तत्वस्य निषेधसत्त्वादतिप्रसङ्गवारणायाद्यं विशेषणम् । तत्र हि न कान्तत्वनिषेधो नूपुरारोपार्थः, अपि तु नूपुरारोप एव शङ्कितकान्तत्वनिषेधार्थं इति तद्व्यावृत्तिः । पर्यस्तापह्नुतिवारणायोपमेयधर्मेत्युक्तम्, तत्रोपमानधर्मस्यैव सुधांशुत्वादेर्निषेध इति नातिव्याप्तिरिति सर्वं सुस्थम् ॥ **पुण्डरीकेति ।** 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । एवं च 'सरोरुह'पदं विशेष्यपरमिति भावः ॥ **अङ्कमिति ।** इन्दौ दलितस्य स्फुटितस्येन्द्रनीलमणेः शकलवच्छयामं यद्दरीदृश्यते तत्केऽपि कवयोऽङ्कं कलङ्कं शशङ्किरे शङ्कितवन्तः, परेऽन्ये जलनिधेः पङ्कं मेनिरे, कतिचित्पुनः सारङ्गं संजगदिरे अब्रुवन्, परे इतरे भुवो भूमेश्छाया भूच्छायं ऐच्छन् । 'विभाषा सेनासुराच्छाया—' ( २।४।२५ ) इत्यादिना क्लीबत्वम् । वयं तु सान्द्रं घनं निशि रात्रौ पीतम्, अत एव कुक्षिस्थमन्धतमसं गाढध्वान्तमाचक्ष्महे ब्रूमह इत्यन्वयः । औत्प्रेक्षिका उत्प्रेक्षामात्रविषयाः कलङ्कादयः । अपिना स्वाभाविकस्य भूच्छायत्वस्य समुच्चयोऽर्थसिद्ध इति । 'नायं सुधांशुः' इत्यत्र नेतिशब्दोपात्तत्वाच्छाब्दः । इह तु परमतत्वोत्कीर्तनेन स्वानभिमतत्वसूचनादर्थगम्य इत्यर्थः । एकत्रानेकापह्नवरूपतयाप्यत्र वैचित्र्यं बोध्यम् ॥ २६ ॥ हेत्वपह्नुतिमाह—**स एवेति ।** शुद्धापह्नव एवेत्यर्थः ॥ **युक्तिपूर्व इति ।**

---

**टिप्प०**—1 अपह्नवो नाम सत्त्वेन ज्ञातस्यापि वस्तुनोऽसत्त्वेन कथनम् ।

---

**पाठा०**—१ 'मन्येऽहं परिपीतमन्धतमसं'.

अत्र चन्द्र एव तीव्रत्व-नैशत्वयुक्तिभ्यां चन्द्रत्वसूर्यत्वापह्नवो वडवानलत्वारोपार्थः ॥ यथा वा,—

मन्थानभूमिधरमूलशिलासहस्र-
संघट्टनव्रणकिणः स्फुरतीन्दुमध्ये ।
छायामृगः शशक इत्यतिपामरोक्ति-
स्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥

अत्र चन्द्रमध्ये मन्थनकालिकमन्दरशिलासंघट्टनव्रणकिणस्यैव छायादीनां संभवो नास्तीति छायात्वाद्यपह्नवः पामरवचनत्वोपन्यासेनाविष्कृतः ॥ २७ ॥

**[1]अन्यत्र तस्यारोपार्थः पर्यस्ताप[2]ह्नुतिस्तु सः ।**
**नायं सुधांशुः, किं तर्हि ? सुधांशुः प्रेयसीमुखम् ॥२८॥**

यत्र क्वचिद्वस्तुनि तदीयधर्मनिह्नवः, अन्यत्र वर्णनीये वस्तुनि तस्य धर्म-

---

योज्यते साध्यमनेनेति युक्तिर्हेतुस्तत्पूर्वः । तत्सहित इत्यर्थः । तथा च शुद्धापह्नवलक्षण एवानुक्तनिमित्त इत्यस्य स्थाने उक्तनिमित्त इत्युक्तौ हेत्वपह्नुतिलक्षणं संपद्यत इति भावः । नेन्दुरित्यादि विरहाकुलोक्तिः । तीव्रो दारुणो यतोऽतो नेन्दुः । निशि रात्रौ सत्त्वान्नार्कः । 'और्वस्तु वाडवो वडवानलः' इत्यमरः ॥ **नैशत्वेति** । निशि भवो नैशस्तत्त्वमित्यर्थः । अत्रापि चन्द्रत्वं स्वाभाविको धर्मः, सूर्यत्वं त्वौत्प्रेक्षिकमिति बोध्यम् ॥ **मन्थानेति** । मन्थानो मन्थनदण्डः, स चासौ भूमिधरः पर्वतो मन्दरस्तस्य मूलाधारो यच्छिलासहस्रं तेन संघट्टनाद्यो व्रणस्तस्य किणश्चिह्नमिन्दुमध्ये स्फुरति प्रकाशते । छाया भूमेः । मृगो हरिणः । शशकः शशः इत्येषा अतिपामराणां मूर्खतमानामुक्तिः । हि यस्मात्तेषां छायादीनां तत्रेन्दुमध्यभागे कथंचिदपि केनापि प्रकारेण प्रसक्तिर्नास्तीत्यन्वयः । 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इत्यमरः ॥ **नास्तीतीति** । इति हेतोरित्यर्थः ॥ २७ ॥ पर्यस्तापह्नुतिमाह—**अन्यत्रेति** । सः अपह्नवः । तथा च तदारोपार्थस्तस्यापह्नव इति लक्षणम् । निषेधस्य च न स्वाधिकरणे प्रतियोग्यारोपार्थत्वसंभवो न वा स्वाधिकरणे स्वारोप इत्यर्थसिद्धमेवारोपस्यान्याधिकरणत्वं 'अन्यत्र' इत्यनेनोक्तम् । अत एव पर्यस्तापह्नुतिरित्युच्यते । पर्यस्ता आरोपविपरीता आरोपव्यधिकरणेति तदर्थात् । न च चन्द्रे चन्द्रत्वनिषेधस्य कथं मुखे तदारोपार्थत्वमिति वाच्यम् । आरोपदार्ढ्यसंपादकत्वेन निषेधस्य तदर्थताया अनुभवसिद्धत्वात् । अत एव दृढारोपरूपकमेवेदम्, नापह्नुतिरिति [2]प्राचां सिद्धान्तस्तदनुसारेणैव

---

**टिप्प०**—1 'नायमपह्नुतेर्भेदो वक्तुं युक्तः, अपह्नुतिसामान्यलक्षणाक्रान्तत्वात्, 'उपमेयमसत्यं कृत्वा उपमानं यत् सत्यतया स्थाप्यते साऽपह्नुतिः' इति **मम्मटलक्षणबहिर्भावोऽपि स्फुट'** इति **रसगङ्गाधरकृतः** । 2 अत्र 'नायं सुधांशुः' इत्यनेन दृढारोपं रूपकमेव, नत्वपह्नुतिः, 'उपमेयतोपमानतावच्छेदकयोः सामानाधिकरण्यस्य निष्प्रत्यूहं भावात्' इति **जगन्नाथपण्डितः**.

---

**पाठा०**—१ 'संघट्टजव्रणकिणः'. २ 'अपह्नुतिश्च सा'.

स्यारोपार्थः स पर्यस्तापह्नुतिः । यथा चन्द्रे चन्द्रत्वनिह्नवो वर्णनीये मुखे तदारोपार्थः ॥

यथा वा,—

हालाहलो नैव विषं, विषं रमा,
जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्ति सुखेन तं शिवः,
स्पृशन्निमां मुह्यति निद्रया हरिः ॥

पूर्वोदाहरणे हेतूक्तिर्नास्ति, अत्र तु सास्तीति विशेषः । ततश्च पूर्वापह्नुतिवदत्रापि द्वैविध्यमपि द्रष्टव्यम् ॥ २८ ॥

**भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।**
**तापं करोति सोत्कम्पं, ज्वरः किं? न, सखि! स्मरः॥२९॥**

अत्र तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्यादृजुबुद्ध्या सख्या 'ज्वरः किम्' इति पृष्टे, 'न, सखि स्मरः' इति तत्त्वोक्त्या भ्रान्तिवारणं कृतम् ।

यथा वा,—

नागरिक! समधिकोन्नतिरिह महिषः कोऽयमुभयतःपुच्छः ।
नहि नहि करिकलभोऽयं शुण्डादण्डोऽयमस्य न तु पुच्छम् ॥

---

च चित्रमीमांसायां 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इत्यपह्नुतिलक्षणमुक्तम् । इह त्वलंकाररत्नाकराद्यनुसारेणायं प्रभेद उपदर्शितसामान्यलक्षणाभिप्रायेणापह्नुतित्वेनोक्त इति निरवद्यम् ॥ **हालाहल इति** । हालाहलो विषं नैव भवति, किंतु रमा लक्ष्मीर्विषम् । जनाः परं केवलमत्रास्मिन्विषये व्यत्ययं वैपरीत्यं मन्वतेऽभ्युपगच्छन्ति । कुतस्तत्राह—यस्माच्छिवस्तं हालाहलं निपीय सुखेन जागर्ति । हरिस्तु इमां रमां स्पृशन्सन् निद्रया मुह्यति । **'स्मरन्'** इति पाठे स्मरन्नपि मुह्यति, किमु स्पृशन्नित्यर्थः । तथा च रमाया विषरूपत्वे मोहजनकत्वं हेतुः, हालाहलस्य तत्त्वापह्नवे च जागरसुखप्रयोजकत्वमिति बोध्यम् । 'हालाहलो विषे' इति विश्वः । अत्र स्पृशन् मुह्यतीति कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिरलंकारः । सा हेतूक्तिः ॥ **ततश्चेति** । हेतूक्तितदनुक्तिरूपभेदादित्यर्थः ॥२८॥ पूर्वापह्नुतिवच्छुद्धापह्नुतिवत् द्वैविध्यं शुद्धपर्यस्तापह्नुति-हेतुपर्यस्तापह्नुतिरित्येवं द्विप्रकारत्वम् ॥ **भ्रान्तापह्नुतिरिति** । अन्यस्य प्रकृतस्य भ्रान्तिवारणे । वार्यतेऽनेनेति वारणम्; तथा च भ्रान्तिवारके तत्त्वाख्याने सतीत्यर्थः । भ्रान्तं भ्रमः । भावे क्तः । भ्रान्त्यपह्नुतिरित्यर्थः । एवं च तत्त्वकथनहेतुकभ्रान्तिविषयनिषेधो भ्रान्तापह्नुतिरिति लक्षणं बोध्यम् । तस्य तापकारित्वरूपस्मरवृत्तान्तस्य ॥ **नागरिकेति** । नगरे भवो नागरिकस्तं प्रति ग्रामीणस्य प्रश्नः । सम-

इदं संभवद्भ्रान्तिपूर्विकायां भ्रान्तापह्नुतावुदाहरणम् ॥

कल्पितभ्रान्तिपूर्वा यथा—

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥

अत्र कल्पितभ्रान्तिः 'जटा नेयम्' इत्यादिनिषेधमात्रोन्नेया, पूर्ववत्प्रश्नाभावात् । दण्डी त्वत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने । यदाह—

'न पद्मं मुखमेवेदं, न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा' ॥ २९ ॥ इति ॥

**छेकापह्नुतिरन्यस्य[1] शङ्कातस्तथ्यनिह्नवे[2] ।**
**प्रजल्पन्मत्पदे लग्नः, कान्तः किं? नहि, नूपुरः ॥३०॥**

कस्यचित्कंचित्प्रति रहस्योक्तावन्येन श्रुतायां स्वोक्तेस्तात्पर्यान्तरवर्णनेन

---

धिका पश्वन्तरेभ्य उन्नतिरुचता यस्यैवंभूत उभयतो मुखपृष्ठभागयोः पुच्छं यस्यैवंभूतश्च कोऽयं महिषः? इति । 'नहि नहि' इत्युत्तरम् । 'महिष' इत्यनुषज्यते । अयं करिकलभः करिशावकः । 'कलभः करिशावकः' इति कोशात् कलभ इत्येतावतैव सिद्धे करिपदमुत्कृष्टकरिबोधार्थम् । अयमस्य शुण्डादण्डः, न तु पुच्छमिति । 'पुच्छ' इति पाठोऽप्यर्धर्चादित्वात्साधुरेव । अप्रयुक्तत्वं तु तत्र परं विचार्यमिति पूर्वोदाहरणे संदेहरूपभ्रान्तिविषयज्वरत्वापह्नवः । 'ज्वरः किम्?' इति प्रश्नेन तद्विषयसंदेहावगमात् । इह तु महिषत्वनिश्चयरूपभ्रान्तिविषयस्य महिषत्वस्येति ततो भेदः ॥ **जटेति** । विरहिण्या इयमुक्तिः । हे कुसुमशर ! पुरारातेर्हरस्य भ्रान्त्या मां किं कुतः प्रहरसि पीडयसि? यतो नेयं जटा, किंतु वेणीकृतः अवेणी वेणी संपद्यते तथा कृतः कचानां कलापः; तथा गले गरलं नैतत्, अपि त्वियं कस्तूरी; एवं शिरसि नैषा शशिलेखा, किंतु कुसुमम्; तथा इयमङ्गे भूतिर्भस्म न भवति, परंतु प्रियविरहाज्जन्म यस्यैवंभूतो धवलिमा पाण्डिमेति । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' (काव्या. सू. ५।२।१९) इति वामनसूत्राद्व्यधिकरणोऽपि बहुव्रीहिर्न दुष्टः ॥ **कल्पितेति** । कुसुमशरे उत्प्रेक्षितेत्यर्थः ॥ **निषेधमात्रोन्नेयेति** । निषेधस्य प्रसक्तिपूर्वकत्वादिति भावः । मेने इत्यस्वरसोद्भावनम् । तद्बीजं तूपमाबोधकस्येवादेरसत्त्वेऽपि तदुपगमे रूपकस्याप्युपमात्वं स्यादिति स्पष्टमेव ॥ २९ ॥ **छेकापह्नुतिरिति** । छेको विदग्धः, तत्कृतापह्नुतिश्छेकापह्नुतिरिति लक्ष्यनिर्देशो वाक्यान्यथायोजनहेतुकः शङ्किततात्त्विकवस्तुनिषेध इति लक्षणम् । अन्यस्य शङ्कात इत्यन्यशङ्काया निवर्तनीयत्वेन हेतुतया व्यपदेशः । 'संतापात् स्नाति' इतिवत् । अत्र च शुद्धापह्नुतिवारणायायं विशेषणम् । 'मम किल श्रुतिमाह तदर्थिकाम्'

---

टिप्प०—1 अन्ये त्वियं व्याजोक्तिरिति प्राहुः.

---

पाठा०—१ 'पूर्वप्रश्नाभावात्'. २ 'तस्य निह्नवे'.

तथ्यनिह्नवे छेकापह्नुतिः। यथा नायिकया नर्मसखीं प्रति 'प्रजल्पन्मत्पदे लग्नः' इति स्वनायकवृत्तान्ते निगद्यमाने तदाकर्ण्य 'कान्तः किम्' इति शङ्कितवतीमन्यां प्रति 'नहि, नूपुरः' इति निह्नवः।

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किं मिलितो? नहि नहि, सखि! हैमनः पवनः॥

इदमर्थयोजनया तथ्यनिह्नवे उदाहरणम्।

शब्दयोजनया यथा—

पद्मे! त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः।

---

इत्यधिकताद्रूप्यरूपकवारणाय—शङ्कितेति। न चानेनैव शुद्धापह्नुतिवारणाद्वाक्येत्यादि व्यर्थमिति वाच्यम्। 'कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे। सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाधुना॥' इति व्याजोक्तावतिप्रसङ्गवारकत्वेन तत्सार्थक्यात्। यद्वक्ष्यति—छेकापह्नुतेरस्याश्चायं विशेषो यत्तस्या वचनस्यान्यथानयनेनापह्नवः। अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति। **तथ्यनिह्नवे इति।** तात्त्विकनिषेधे इत्यर्थः। नूपुरो मञ्जीरः। 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। नर्मसखी क्रीडासखी। अत्र कान्तपरायाः 'प्रजल्पन्मत्पदे लग्नः' इत्युक्तेर्नूपुरतात्पर्यकत्ववर्णनेन कान्तत्वापह्नवो मुख्यः, नूपुराभेदप्रतिपत्तिस्तु तदङ्गमिति बोध्यम्॥ **सीत्कारमिति।** सीत्कारं तदनुकारिमुखध्वनिं शिक्षयति, अधरमधरोष्ठं व्रणयति; व्रणोऽस्यास्तीति व्रणी, व्रणिनं करोतीत्यर्थे 'तत्करोति तदाचष्टे' (ग० सू० २०४) इति णिच्। तथा रोमाञ्चं तनोति विस्तारयतीति वाक्यत्रयं नागरिकाभिप्रायेण प्रियसखीं प्रति कयाप्युक्तं तदाकर्ण्य नागरिकः 'किं मिलितः' इति शङ्कितवतीमन्यां प्रति तच्छङ्कानिवृत्तये 'नहि' इत्यादिना हैमन्तिकपवनपरत्ववर्णनेन तात्त्विकस्य नागरिकस्यापह्नवः। सीत्कारशिक्षादिकर्तृत्वस्य नागरिक इव पवनेऽपि सत्त्वात्। तदाह—**अर्थयोजनयेति।** विवक्षिताविवक्षितसाधारणस्यार्थस्याविवक्षितार्थसंबन्धित्ववर्णनयेत्यर्थः। इदमित्युदाहरणमिति च जात्यभिप्रायेणैकवचनम्। हेमन्तशब्दात् 'तत्र भवः' (४।३।५३) इत्यर्थे 'सर्वत्राण् च तलोपश्च' (४।३।२२) इत्यणि तलोपे च हैमन इति रूपसिद्धिः। प्रजल्पन्नित्युदाहरणे एकस्य वाक्यस्यान्यथा योजनमिह त्वनेकेषामिति भेदः॥ **शब्दयोजनयेति।** अर्थभेदेऽपि शब्दश्लेषमात्रेणेत्यर्थः॥ **पद्मे इति।** क्रीडाया विटो भोक्ता कृष्णो वो युष्मान् पातु रक्षत्विति संबन्धः। कीदृशः? इत्युत्स्वप्नवचः स्वप्ने उद्गतमुत्स्वप्नं वचनमर्थात्कृष्णस्य अनुभाष्यानूद्य राधया निर्भर्त्सितः संस्तद्वचनं तत्परमेव राधापरमेव व्यपदिशन्कथयन्। इति किम्—हे पद्मे रमे! त्वन्नयने सततं स्मरामि, नीले भवत्याः कुन्तले केशपाशे मम भावोऽन्तःकरणवृत्तिरूपः मुह्यति मोहं प्राप्नोति। ननु चित्तासङ्गो निवर्त्यतां तत्राह—किं करोमि अकिंचित्करोऽस्मि। यतस्ते तव महितैः पूज्यैर्विभ्रमैर्विलासैः क्रीतोऽस्मि मूल्येन गृहीतोऽस्मीति। **'किंकरोऽस्मि'** इति क्वचित्पाठः, स युक्ततरः। तत्र चासीत्यहमर्थ-

इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥

सर्वमिदं विषयान्तरयोजने उदाहरणम् । विषयैक्येऽप्यवस्थाभेदेन योजने यथा,—

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुद्ध्वा, 'सखि! ततः प्रबुद्धास्मी'त्यपूरयत् ॥ ३० ॥

**कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः ।**
**निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ ३१ ॥**

अत्रासत्यत्वाभिधायिना 'कैतव'पदेन 'नेमे कान्ताकटाक्षाः, किंतु स्मरनाराचाः' इत्यपह्नवः प्रतीयते ॥

यथा वा,—

रिक्तेषु वारिकथया विपिनोदरेषु
मध्याह्नजृम्भितमहातपतापतप्ताः ।

---

कमव्ययम् । अहं किंकरो दासः, क्रीतोऽस्मीत्यर्थः । राधापरत्वे तु—हे राधे! इत्यर्थात्संबोधनम् । पद्मे पद्मरूपे त्वन्नयने स्मरामीति विशेषः । शेषं पूर्ववत् । अत्र रमासंबोध्यकत्वन्नयनस्मरणरूपो न वाक्यार्थः, अपि तु त्वत्संबोध्यकः पद्मरूपत्वन्नयनस्मरणरूप इत्यपह्नवस्तत्परमेव तद्व्यपदिशन्नित्यनेन प्रकाश्यते । न चात्रार्थस्य रमा-राधासाधारणत्वमपि तु पद्मे इति लिङ्गवचनश्लिष्टशब्दयोजनैवेति ॥ **विषयान्तरेति** । विवक्षितविषयभिन्नेत्यर्थः । अवस्था जाग्रत्स्वप्नादिरूपा ॥ **वदन्तीति** । पत्यौ भर्तरि सखीधिया सखीभ्रमेण जारवृत्तान्तं स्वकामुकवार्ता वदन्ती धूर्ता काचित्पतिं बुद्ध्वा सखीत्यादिवाक्यशेषमपूरयत्पूरितवती । सखीति पुनः संबोधनमप्रतार्यतासूचनाय । तत उक्तवृत्तान्तानन्तरं प्रबुद्धा जागरणवती । अत्र नासौ जाग्रदवस्थावृत्तान्तः किंतु स्वाप्निक इत्यवस्थाभेदयोजनयापह्नवः सखीत्यादिवाक्यशेषेण प्रकाश्यते ॥ ३० ॥ कैतवापह्नुतिरिति लक्ष्यनिर्देशः । व्याजाद्यैः पदैर्निह्नुतेर्व्यक्तौ अभिव्यक्तौ सत्यां कैतवापह्नुतिरिति व्यवहर्तव्यमित्यर्थः । कैतवेनापह्नुतिरिति व्युत्पत्तेः । 'व्याजाद्यैः' इत्यनेन मिषकपटच्छलच्छद्मकैतवादयो गृह्यन्ते । एवं च कैतवादिपदव्यङ्ग्यापह्नुतित्वं लक्षणं बोध्यम् । नाराचा बाणाः । दृक्पाताः कटाक्षाः । अपह्नवो निषेधः ॥ **प्रतीयत इति** । असत्यत्वस्य विषयबाधाधीनत्वादिति भावः ॥ **रिक्तेष्विति** । ग्रीष्मवर्णनम् । तरवो वृक्षाः वारिणो जलस्य कथया वार्तयापि रिक्तेषु शून्येषु विपिनस्यारण्यस्योदरेषु मध्यप्रदेशेषु जलमर्थयन्ते प्रार्थयन्ते । कीदृशाः? मध्याह्ने जृम्भितः प्रवृद्धो यो महानातप

---

पाठा०—१ 'व्यक्ते व्याजाद्यैर्निह्नवे'.

स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन
जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ ३१ ॥

---

## उत्प्रेक्षालंकारः १२

संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना[1] ।
उक्तानुक्तास्पदाद्यात्र[2] सिद्धाऽसिद्धास्पदे परे ॥ ३२ ॥
धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्[3] ।
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ॥ ३३ ॥
रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ।
त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते[4] शशी ॥ ३४ ॥

---

उष्णं तस्य तापस्तपनं तेन तप्ताः संतप्ताः । किं कृत्वा ? स्कन्धान्तरात्प्रकाण्डाभ्यन्तरादुत्थितो यो दवाग्निर्दावानलस्तस्य या शिखा ज्वाला तस्याश्छलेन । **जिह्वां प्रसार्येति** । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः । अत्र नेयं दवाग्निशिखा, अपि तु जिह्वेति च्छलपदात्प्रतीयते । अत्र चानभिहितवाच्यतादोषनिरासाय कथयापि वनोदरेष्विति पठनीयम् ॥ ३१ ॥

इत्यलंकारचन्द्रिकायामपह्नुत्यलंकारप्रकरणम् ॥ ११ ॥

उत्प्रेक्षां लक्षयति—**संभावनेति** । अत्रोत्प्रेक्षेत्यनन्तरं सा च त्रिधेत्यध्याहार्यम् । तथा च संभावना उत्प्रेक्षापदवाच्या स्यात्, सा च वस्तु-हेतु-फलरूपेण त्रिधेत्यर्थः । वस्तु हेतु-फलानां च संभावनाधर्मत्वं स्वविधेयकत्वसंबन्धेन । तेन वस्तु-हेतु-फलविधेयकत्वेनेति पर्यवसितार्थः । वस्तुत्वं च हेतुत्वेन फलत्वेन वा विवक्षितं यत्तद्भिन्नत्वम् । नातो वस्तुत्वस्य केवलान्वयितया विभागसंगतिः ॥ **उक्तेत्यादि** । अत्र आसामुत्प्रेक्षाणां मध्ये । आद्या वस्तूत्प्रेक्षा । उक्तं चानुक्तं चोक्तानुक्ते आस्पदे यस्या इति विग्रहः । आस्पदं चोत्प्रेक्षाया धर्मिरूपो विषयः । सिद्धासिद्धेत्यत्र विग्रहः पूर्ववत् ॥ **धूमेति** । तमः कोकीविरहशुष्मणां धूमस्तोमं शङ्के इत्यन्वयः । कोकस्य चक्रवाकस्य स्त्री कोकी । तस्या विरहरूपाणां शुष्मणामग्नीनां संबन्धिनं धूमसमूहमित्यर्थः ॥ **लिम्पतीवेति** । अत्र तम इति, नभ इति च कर्तृपदम् । रक्ताविल्यादि दयितां प्रति नायकस्योक्तिः । तव मृदुलौ सुकुमारावङ्घ्री चरणौ ध्रुवं भुवि विक्षेपणाद्धेतोः रक्तवर्णाविति ॥ **त्वन्मुखेति** । पद्मगतायास्त्व-

---

**टिप्प०**—1 'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा' इत्युत्प्रेक्षां लक्षयित्वा 'मध्यंदिनार्कसंतप्तः सरसीं गाहते गजः । मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः । स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् । तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते' इति दण्डी ह्युदाजहार ।

---

**पाठा०**—१ 'फलात्मता'. २ 'पदार्थाश्च'. ३ 'विरहसोष्मणाम्'. ४ 'पद्मे वैरायते'.

मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ।
प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति ॥ ३५ ॥

अन्यधर्मसंबन्धनिमित्तेनान्यस्यान्यतादात्म्यसंभावनमुत्प्रेक्षा। सा च वस्तु-हेतु-फलात्मतागोचरत्वेन त्रिविधा । अत्र वस्तुनः कस्यचिद्वस्त्वन्तरतादात्म्य-संभावना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते । अहेतोर्हेतुभावेनाफलस्य फलत्वेनो-त्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते । अत्र आद्या स्वरूपोत्प्रेक्षा उक्त-विषयाऽनुक्तविषया चेति द्विविधा । परे हेतुफलोत्प्रेक्षे सिद्धविषयाऽसिद्ध-विषया चेति प्रत्येकं द्विविधे । एवं षण्णामुत्प्रेक्षाणां धूमस्तोममित्यादीनि क्रमेणोदाहरणानि । रजनीमुखे सर्वत्र विसृत्वरस्य तमसो नैल्यदृष्टिप्रतिरोध-कत्वादिधर्मसंबन्धेन गम्यमानेन निमित्तेन सद्यः प्रियविघटितसर्वदेशस्थितको-काङ्गनाहृदुपगतप्रज्वलिष्यद्विरहानलधूमस्तोमतादात्म्यसंभावनास्वरूपोत्प्रेक्षा तमसो विषयस्योपादानादुक्तविषया । तमोव्यापनस्य नभःप्रभृतिभूपर्यन्त-सकलवस्तुसान्द्रमलिनीकरणेन निमित्तेन तमःकर्तृकलेपनतादात्म्योत्प्रेक्षा,

---

न्मुखकान्तेरिच्छया । हेतुनेत्यर्थः ॥ **वैरायत इति** । वैरं करोतीत्यर्थे 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' ( ३।१।१७ ) इति क्यङ् ॥ **मध्य इति** । मध्यभागः कुचयोर्धृत्यै धारणार्थं कनकस्य दामभी रज्जुभिरिति निगीर्याध्यवसानरूपातिशयोक्त्या वलिभिर्बद्धः किमित्यर्थः ॥ **प्राय इति** । अब्जं कर्तृ । प्रायो बहुधा त्वच्चरणेन सहैक्यं प्राप्तुं तोये जले तपस्यति । तपश्चरतीत्यर्थः । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' ( ३।१।१५ ) इति क्यङ् । 'तपसः परस्मैपदं च' ( वा० १७३३ ) इति परस्मैपदम् । लक्षणं परिष्कुरुते—**अन्यधर्मेति** । अन्यस्य विषयिणो यो धर्मस्तत्संबन्धरूपेण निमित्ते-नान्यस्यान्यविषयकमन्यस्य विषयिणस्तादात्म्येन संभावनमित्यर्थः । अन्यस्येति षष्ठ्यर्थो विषयता धर्मितारूपा । विषयिण इति षष्ठ्यर्थस्तु विशेषणतारूपा विष-यता । अन्यत्वेनोत्कीर्तनं च संभावनाया आहार्यतासूचनाय । तथा च विषयि-निष्ठधर्मसंबन्धप्रयुक्तं विषयधर्मिकं तादात्म्यसंसर्गेण विषयिविधेयकमाहार्यसंभा-वनमुत्प्रेक्षेति पर्यवसितम् । तन्निष्ठधर्मसंबन्धप्रयुक्तमाहार्यतत्संभावनमिति तु निष्कर्षः । इतरांशस्याव्यावर्तकतया स्वरूपकथनमात्रपरत्वात् । 'मुखं चन्द्रं मन्ये' इत्युत्प्रेक्षायां चन्द्रनिष्ठाह्लादकत्वादिधर्मसंबन्धप्रयुक्तं मुखे चन्द्रसंभावनमाहार्य-मस्तीति लक्षणसमन्वयः । बाधाद्यभावदशायां तु जायमाना मुखादौ चन्द्रादि-संभावनोत्प्रेक्षेति तद्वारणाय–आहार्येति । एतेन 'विरक्तसन्ध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते । शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥'

---

**टिप्प०**—1 'तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्ति-तत्समानाधिकरणान्यतरतद्धर्मसंबन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा संभावनमुत्प्रेक्षा । सा द्विविधा–वाच्या, प्रतीयमाना चेति । पुनः प्रत्येकं त्रिधा–स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा, फलो-त्प्रेक्षा च' इति **रसगङ्गाधरकारः** ।

---

**पाठा०**—१ 'इतरांशस्य व्यावर्तकतया'.

नभःकर्तृताञ्जनवर्षणतादात्म्योत्प्रेक्षा चानुक्तविषया स्वरूपोत्प्रेक्षा, उभयत्रापि विषयभूततमोव्यापनस्यानुपादानात् ॥ नन्वत्र तमसो व्यापनेन निमित्तेन लेपनकर्तृतादात्म्योत्प्रेक्षा, नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तेनाञ्जनवर्षणकर्तृतादात्म्योत्प्रेक्षा, चेत्युत्प्रेक्षाद्वयमुक्तविषयमेवास्तु । मैवम् ; लिम्पति–वर्षतीत्याख्यातयोः कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यातम्' इति स्मृतेर्धात्वर्थक्रियाया एव प्राधान्येन तदुपसर्जनत्वेनान्वितस्य कर्तुरुत्प्रेक्षणीयतया अन्यत्रान्वयासंभवात्[1] । अत एव [आख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेव]अस्योपमायामुपमानतयान्वयोऽपि दण्डिना निराकृतः–

'कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥' (काव्यादर्शे २।२३०) इति ।

---

इत्यत्र रजोभरोद्गमनरूपससैन्यप्रत्युद्गन्तृधर्मसंबन्धप्रयुक्तायां भरते तत्संभावनायामपि नातिव्याप्तिः; तस्या अनाहार्यत्वात् । 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति वक्ष्यमाणसंभावनालंकारविषये 'यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव' इत्यादावतिव्याप्तिवारणाय प्रयुक्तान्तम् । 'सर्वातिशायिसौन्दर्यं शङ्के सत्यवतो मुखम् । येन सा मृगशावाक्षी सावित्री तरलीकृता ॥' इत्यादावतिप्रसङ्गवारणाय तन्निष्ठेति संभाव्यमानवृत्तित्वं धर्मविशेषणम् । तत्र सावित्रीतरलीकारकत्वरूपो धर्मो मुखवृत्तिर्न तु संभाव्यमानवृत्तिरिति नातिप्रसङ्ग इति दिक् । वस्तुहेतुफलात्मता वस्तुहेतुफलतादात्म्यम् । ननु संबन्धान्तरेणोत्प्रेक्षायाः असंग्रह इति चेन्न । सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राचीनमतानुसारेणेत्थमभिधानात् एतत्सूचनायैव लक्षणेऽत्र च तादात्म्योपादानमिति ॥ नन्वलंकारसर्वस्वकारादिभिः स्वरूपोत्प्रेक्षेति व्यवहृतायास्तुरीयाया अपि सत्त्वात्त्रिविधेत्ययुक्तमित्याशङ्क्याह—**अत्रेति** । आसां मध्ये या प्रथमा वस्तूत्प्रेक्षा सैव स्वरूपोत्प्रेक्षेत्युच्यत इत्यर्थः ॥ **विसृत्वरस्येति** । प्रसरणशीलस्येत्यर्थः । तमस इति संभावनेत्यनेनान्वेति । षष्ठ्यर्थो विषयता । तमोविषयेत्यर्थः । प्रतिरोधकत्वादीत्यादिपदात्प्रसरणशीलत्वस्य संग्रहः । प्रियैः पतिभिर्विघटिता वियुक्ताः । व्यापनस्येति षष्ठ्यन्तस्य पूर्ववदुत्प्रेक्षापदेनान्वयः । एवमग्रेतनस्य तमस इत्यस्यापि ॥ **अनुपादानादिति** । विषयिवाचकाभ्यां लिम्पति-वर्षतिभ्यामन्येनानुपादानादित्यर्थः । यथाश्रुते ताभ्यामेव साध्यवसानलक्षणयोपादानादसंगतेः ॥ **उक्तविषयमेवेति** । सकृदुच्चारिताभ्यां लिम्पति-वर्षतिभ्यां शक्त्या लेपन-वर्षणयोः साध्यावसानलक्षणया च साधारणधर्मपुरस्कारेण व्यापनस्य चोपस्थापनस्य युगपद्वृत्तिद्वयविरोधेनासंभवादित्याशयः । स्मृतेर्निरुक्तस्मृतेः । उत्प्रेक्षणीयतया उत्प्रेक्षाविषयतया । अन्यत्र उत्प्रेक्षायाम् ॥ **अन्वयासंभवादिति** । निराकाङ्क्षत्वादिति भावः । अत एवाख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेनान्यत्रान्वयासंभवादेव । क्वचिदत एवेत्युत्तरमयमेव व्याख्यानग्रन्थः प्रमादलिखितो दृश्यते ॥ **न्यग्भूत इति** । गुणभूत इत्यर्थः ॥ **स्वक्रियेति** । क्रियां प्रति साधनत्वेनान्वित इत्यर्थः । व्यपे-

---

**टिप्प०**—1 'एकविशेषणं नापरत्र स्वार्थं प्रत्याययति' इति न्यायेन एकत्र विशेषणत्वेन गृहीतशक्तिकस्य ज्ञातस्य वा परत्र विशेषणत्वायोगः इत्याशयः । **मञ्जूषायां** नागेशभट्टाश्चापि–'राज्ञः पुरुषोऽश्वश्च इतिवत्–राजपुरुषोऽश्वश्च इति न' इत्युदाजहुः ।

केचित्तु—तमो-नभसोर्विषययोस्तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः । तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यं द्रष्टव्यम् । चरणयोः स्वतःसिद्धे रक्तिमनि वस्तुतो विक्षेपणं न हेतुरित्यहेतोस्तस्य हेतुत्वेन संभावना हेतूत्प्रेक्षा विक्षेपणस्य विषयस्य सत्त्वात्सिद्धविषया । चन्द्रपद्मविरोधे स्वाभाविके नायिकावदनकान्तिप्रेप्सा न हेतुरिति तत्र तद्धेतुत्वसंभावना हेतूत्प्रेक्षा वस्तुतस्तदिच्छाया अभावादसिद्धविषया । मध्यः स्वयमेव कुचौ धरति न तु कनकदामबन्धत्वेनाध्यवसिताया वलित्रयशालिताया बलादिति मध्यकर्तृककुचधृतेस्तत्फलत्वेनोत्प्रेक्षा सिद्धविषया फलोत्प्रेक्षा । जलजस्य जलावस्थितेरुदवासतपस्त्वेनाध्यवसितायाः कामिनीचरणसायुज्यप्राप्तिर्न फलमिति तस्या गगनकुसुमायमानायास्तपःफलत्वेनोत्प्रेक्षणादसिद्धविषया

---

क्षितुमाकाङ्क्षितुम् । नालं न समर्थः । तथा च निराकाङ्क्षत्वादुपमानत्वेनान्वयो न संभवतीति भावः । एतेन 'तमसि लेपनकर्तृत्वमुत्प्रेक्ष्यम्' इत्यलंकारसर्वस्वकारमतमपास्तम् । तस्यापि कर्तृविशेषणत्वाद्विवक्षितविवेकेन लेपनस्यैवोत्प्रेक्ष्यत्वाच्च । एवं च प्रधानभूतलेपनक्रियागोचरा भावनैव निगीर्णव्यापनविषयेति सिद्धम् । न च युगपद्वृत्तिद्वयविरोधः शङ्क्यस्तदनभ्युपगमात् । केचिदिति तम ( तन्मते? ) इति चास्वरसोद्भावनम् । तद्बीजं तु तमोनभसोः कर्तृत्वेन विषयत्वेन च वारद्वयमन्वयक्लेशः । तथा धर्म्युत्प्रेक्षा सा धर्मप्रयुक्ता । धर्मोत्प्रेक्षा तु तत्सहचरितधर्मसंबन्धप्रयुक्तेति लक्षणानुगमः । न च तन्निष्ठतत्समानाधिकरणान्यतरत्वेन धर्मनिवेशान्नानुगम इति वाच्यम् । सर्वत्र सादृश्यनिमित्ताया एवोत्प्रेक्षायाः संभवेनान्यतरत्वादिनिवेशप्रयुक्तगौरवस्यानुपादेयत्वादिति ॥ **हेतुत्वेनेति** । हेतुरूपतयेत्यर्थः । हेतुत्वसंभावना हेतुरूपतासंभावना । फलत्वेन फलरूपतया । एवमग्रेऽपि बोध्यम् ॥ अथोदाहृतासूत्प्रेक्षासु बोधप्रकारः प्रदर्श्यते । 'तत्र धूमस्तोमम्' इत्यादौ कोकाङ्गनाविरहानलसंबन्धिधूमस्तोमाभिन्नतमोविषया संभावनेति बोधः । नामार्थयोरभेदान्वयात् । एवं 'मुखं चन्द्रं मन्ये' इत्यादावपि । 'नूनं मुखं चन्द्र' इत्यादौ तु चन्द्रप्रकारकसंभावनाविषयो मुखमिति बोधः । मुखविषया चन्द्रप्रकारिका च संभावना तादात्म्यसंसर्गिकैव, तथानुभवाचमत्कारप्रयोजकस्य संसर्गान्तरस्याभावाच्च । न चैवं चन्द्रत्वप्रकारिका, तस्य चन्द्रोपसर्जनत्वात् । एवं ध्रुवेवादिशब्दसमभिव्याहारेऽपि बोध्यम् । 'लिम्पतीव–' इत्यनुक्तविषयोत्प्रेक्षोदाहरणे तु लिम्पतिना साध्यवसानलक्षणया लेपनव्यापनोभयसाधारणेन सान्द्रमलिनीकारकतत्वादिना रूपेणोपस्थापिते तमोव्यापने लेपनसंभावनान्वयात्सान्द्रमलिनीकारकतमःकर्तृकाङ्गकर्मकलेपनप्रकारकसंभावनाविषय इति बोधः । व्यञ्जनयोपस्थिते व्यापने तादृशसंभावनान्वय इति प्रदीपकृतः । एवं वर्षतीत्यादावपि बोध्यम् । 'विक्षेपणाद् ध्रुवम्' इत्यादिहेतूत्प्रेक्षोदाहरणे हेतुः पञ्चम्यर्थः । तत्र चाभेदेन प्रकृत्यर्थान्वयः । हेतोश्च स्वप्रयोज्याश्रयत्वसंबन्धेन रक्तत्वविशिष्टे, तस्य प्रकारतासंबन्धेन संभावनायां, तस्याश्च विषयतया चरणयोरन्वयः । तथा च भूम्यधिकरणकविक्षेपणाभिन्न-

फलोत्प्रेक्षा। अनेनैव क्रमेणोदाहरणान्तराणि,—

बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥

अत्र पलाशकुसुमानां वक्रत्वलोहितत्वेन संबन्धेन निमित्तेन सद्यःकृतनखक्षततादात्म्यसंभावनादुक्तविषया स्वरूपोत्प्रेक्षा॥

पूर्वोदाहरणे निमित्तभूतधर्मसंबन्धो गम्यः, इह तूपात्त इति भेदः। नन्विवशब्दस्य सादृश्यपरत्वेन प्रसिद्धतरत्वादुपमैवास्तु। 'लिम्पतीव' इत्युदाहरणे लेपनकर्तुरुपमानत्वार्हस्य क्रियोपसर्जनत्ववदिह नखक्षतानामन्योपसर्जनत्वस्योपमाबाधकस्याभावादिति चेत्। उच्यते,—उपमाया यत्र क्वचित्स्थितैरपि नखक्षतैः सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसंबन्धित्वस्य

---

हेतुकरक्तप्रकारकसंभावनाविषयावङ्गी इति बोधः। न च तादात्म्यसंबन्धेन हेतुविधेयकत्वाभावान्नेयं हेतूत्प्रेक्षा स्यात्किंतु तादात्म्येन तथाविधरक्तस्वरूपोत्प्रेक्षैवेति वाच्यम्। विवक्षितविवेकेन विक्षेपणे हेत्वभेदस्योत्प्रेक्षणीयतया विक्षेपणं प्रति विशेष्यभूतस्यापि हेतोर्विधेयत्वोपगमात्। 'मुखं चन्द्रः' इत्यादिरूपक इवानुयोगित्वमुखस्याभेदस्य विक्षेपणसंसर्गत्वाभ्युपगमेन च विक्षेपणे हेत्वभेदभानसंभवात्। हेतुविशिष्टस्वरूपोत्प्रेक्षाया मुखतः प्रतीतावपि विवक्षावशेन हेतूत्प्रेक्षात्वेनैव व्यपदेशः। यथा 'दध्ना जुहोति' इत्यत्र मुखतो दधिविशिष्टहोमप्रतीतावपि विवक्षितविवेकेन होमे दधिविधित्वव्यपदेश इति बोध्यम्। न च स्वप्रयोज्यत्वसंबन्धेन स्वप्रयोज्याश्रयत्वसंबन्धेन वा हेतुरूपधर्मोत्प्रेक्षैव रक्तादौ स्वीक्रियतां कृतमीदृशकल्पनाक्लेशेनेति वाच्यम्। धर्मोत्प्रेक्षाङ्गीकारे दूषणस्य प्रागेवावेदितत्वात्। अत एव 'हर्षाल्लग्ना (न्मन्ये) ललिततनु! ते पादयोः पद्मलक्ष्मीः' इति हेतूत्प्रेक्षामुदाहृतवतः प्रकाशकृतोऽपि तत्र हर्षहेतुकलगनतादात्म्यसंभावनमेव स्वाभाविके लगनेऽभिमतम्। अस्मदुक्तरीत्या तु लक्ष्मीरूपे विषये यथोक्तहर्षहेतुकलगनतादात्म्यसंभावनमुचितम्। लगनस्य धर्म्युपसर्जनत्वेन संभावनायामन्वयायोगादिति ध्येयम्। एवं 'त्वन्मुखाभेच्छया' इत्यसिद्धविषयहेतूत्प्रेक्षायामपि बोध्यम्। विषयसिद्धत्वासिद्धत्वाभ्यां बोधे विशेषाभावात्। मध्यः किमित्यादिफलोत्प्रेक्षास्थले फलं चतुर्थ्यर्थः। तत्र चाभेदेन प्रकृत्यर्थान्वयः पूर्ववत्। फलस्य च प्रयोजकत्वसंसर्गेण बद्धत्वे तद्द्वारकेण तेनैव बद्धे वान्वयस्तत्तादात्म्यसंसर्गकसंभावनाया मध्ये विषयतया। एवं च कुचधारणाभिन्नफलककनकदामकारणकबद्धत्वाश्रयसंभावनाविषयो मध्य इति बोधः। एवं 'प्रायोऽञ्जम्' इत्यादावपि फलं तुमुनोऽर्थ इति पूर्ववदेव बोधः। फलोत्प्रेक्षात्वं चोपदर्शितरीत्योपपादनीयमिति बहुवक्तव्येऽपि विस्तरभयादुपरम्यते॥ **बालेन्दुवक्राणीति**। न विद्यते विकासो येषां तान्यविकासानि तेषां भावाद्विकासरहितत्वाद्धेतोर्बालेन्दुवत् द्वितीयाचन्द्रवद्वक्राणि तथाऽतिशयेन लोहितान्यारक्तानि पलाशानि पलाशकुसुमानि वसन्तेन नायकेन समागमं प्राप्तानां वनस्थलीनामङ्गनानां सद्यस्तत्कालसंभूतानि नखक्षतानीव बभुः शुशुभिरे इत्यन्वयः॥ **पूर्वेति**। धूमस्तोममित्यत्रे-

विशेषणस्यानपेक्षितत्वादिह तदुपादानं पलाशकुसुमानां नखक्षततादात्म्यसंभावनायामिवशब्दमवस्थापयति । तथात्व एव तद्विशेषणसाफल्यात् । अस्ति च संभावनायां 'इव'शब्दः 'दूरे तिष्ठन्देवदत्त इवाभाति' इति ॥

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

अत्र तरङ्गाग्रैः फेनचन्दनस्य प्रेरणं पेषणतयोत्प्रेक्ष्यते । समुद्रादुत्थितस्य चन्द्रस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं च समुद्रोपान्तफेनचन्दनकृतलेपनत्वेनोत्प्रेक्ष्यते । उभयत्र क्रमेण समुद्रप्रान्तगतफेनचन्दनपुञ्जीभवनं दिशां धवलीकरणं च निमित्तमिति फेनचन्दनप्रेरण-किरणव्यापनयोर्विषययोरनुपादानादनुक्तविषये स्वरूपोत्प्रेक्षे । येषां तूपात्तयोः समुद्र-चन्द्रयोरेव तत्कर्तृकपेषणलेपनरूपधर्मोत्प्रेक्षेति मतं, तेषां मते पूर्वोदाहरणे धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षा । इह तु धर्मिणि धर्मसंसर्गोत्प्रेक्षेति भेदोऽवगन्तव्यः ॥

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः ।
भूमौ प्रतापयशसी सृष्टवान् सततोदिते ॥

रात्रौ रवेर्दिवा चन्द्रस्याभावः सन्नपि प्रताप-यशसोः सर्गे न हेतुरिति तस्य तद्धेतुत्वसंभावना सिद्धविषया हेतूत्प्रेक्षा ॥

विवस्वताऽनायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥

अत्र विवस्वता कृतं स्वकिरणैः सह जनलोचनानां नयनमसदेव रात्रावान्ध्यं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्यसिद्धविषया हेतूत्प्रेक्षा ।

---

त्यर्थः । ननु लोके संभावनायामिवशब्दो न दृष्ट इत्यत आह—**अस्ति चेति** । **पिनष्टीवेति** । समुद्रस्तरङ्गाणामग्रभागैः फेनरूपं चन्दनं पिनष्टीव । इन्दुस्तत्फेनचन्दनमादाय करैः किरणैः दिग्रूपा अङ्गना लिम्पतीव । अनुलिम्पतीवेत्यर्थः ॥ **समुद्रोपान्तेति** । समुद्रस्योपान्ते तटे यत्फेनचन्दनं तत्कृतं यत्तासां दिशां लेपनं तत्त्वेनेत्यर्थः । उभयत्र उभयोरुत्प्रेक्षयोः । येषामलंकारसर्वस्वकारादीनाम् ॥ **रात्राविति** । स प्रक्रान्तः प्रभुर्भूपतिः भूमौ रात्रौ रवेरभावाद्धेतोरिव दिवा चेन्दोरभावाद्धेतोरिव सततं निरन्तरमुदिते प्रतापयशसी सृष्टवान् । निर्मितवानित्यर्थः । 'रक्तौ' इत्युदाहरणे भावरूपो हेतुः, इह त्वभावरूप इति भेदः ॥ **विवस्वतेति** । विवस्वता सूर्येण स्वस्य गोसहस्रेण किरणसहस्रेण समं मिश्रा मिश्रिता जनानां नेत्रापरनामधेया गावोऽप्यनायिषतेव नीता इव यथा गोपालेन परकीयाभिर्गोभिर्मिश्राः स्वीया गावो नीयन्ते तथा गोपदवाच्यत्वसाजात्येन मिश्रिता विवस्वतापि नीता इवेत्यर्थः । 'खलु' संभावनायाम् । तेन नयनेन हेतुना इदमान्ध्यम्, न त्वन्धकारैरित्यन्वयः । 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्रीसौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥' इति मेदिनी ।

पूरं विधुर्वर्धयितुं पयोधेः शङ्केऽयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगे सशोककोकीनयने कियन्ति ॥

अत्र चन्द्रेण कृतं समुद्रस्य बृंहणं सदेव तदा तेन कृतस्य चन्द्रकान्त-द्रावणस्य कोकाङ्गनाबाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविषया फलोत्प्रेक्षा ।

रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥

अत्रोत्तरायणस्याश्वपरिवर्तनमसदेव फलत्वेनोत्प्रेक्ष्यत इत्यसिद्धविषया फलोत्प्रेक्षा । एता एवोत्प्रेक्षाः

'मन्ये-शङ्के-ध्रुवं-प्रायो-नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥'

इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानां प्रयोगे वाच्याः । तेषामप्रयोगे गम्योत्प्रेक्षा ।

---

अत्र चानायिषतेवेति विषयोत्प्रेक्षणपूर्वकं तस्य हेतुत्वेनोत्प्रेक्षणमिति पूर्वस्माद्भेदः । एवं पूर्वत्र इच्छयेति गुणरूपो हेतुः, इह तु क्रियारूप इत्यपि द्रष्टव्यम् । अत्र चोत्प्रेक्षाद्वयसत्त्वेऽपि हेतूत्प्रेक्षायाः प्राधान्यात्तत्त्वेनैव व्यपदेशो न तु स्वरूपोत्प्रेक्षात्वेन, तस्या अङ्गत्वात् । एवमन्यत्रापि वोध्यम् ॥ **पूरमिति** । अयं विधुश्चन्द्रः पयोधेः पूरं वर्धयितुमेणाङ्कमणिं चन्द्रकान्तं कियन्ति लोकोक्त्या अपरिमितानि पयांसि दोग्धीति शङ्के । तथा प्रियैः पतिभिर्विप्रयोगे वियोगे सति सशोकानां कोकाङ्गनानां नयने कर्मभूते । कियन्ति पयांसि दोग्धीति शङ्के इत्यन्वयः । दुहेर्द्विकर्मकत्वादेणाङ्कमणिमिति द्वितीया । एवं नयने इत्यत्रापि । मध्यः किमित्यत्रैकस्य वद्धस्य फलत्वेन कुचधृतेरुत्प्रेक्षणमिह तु द्रावण-स्रावणयोर्द्वयोः फलत्वेन पूर्ववर्धनस्य तदिति भेदः । बृंहणं वर्धनम् । तदा वर्धनकाले । तेन चन्द्रेण ॥ **रथस्थितानामिति** । रविः रथे स्थितानां नियुक्तानां पुरातनानां वाहनानामश्वानां परिवर्तनायेव तुरगोत्तमानामुत्पत्तिभूमावुत्तरस्यां दिशि प्रतस्थ इत्यन्वयः । 'प्रायोऽव्जम्' इत्यत्रैक्यस्य गुणस्य फलत्वेनोत्प्रेक्षणमिह तु परिवर्तनक्रियाया इति भेदः । नन्वलंकारसर्वस्वकारादिभिरन्येषामपि जात्यादिभेदानामुक्तत्वात्कुतस्ते न प्रदर्शिता इत्याशङ्क्याह—**एता एवेति** । उक्तभेदा एवेत्यर्थः । उत्प्रेक्षा इत्यनन्तरं चमत्कारविशेषप्रयोजिका इति शेषः । तथा च जात्यादिभेदानां चमत्कारिविशेषानाधायकत्वादप्रदर्शनमिति भावः ॥ **इत्युत्प्रेक्षेति** ।

---

**टिप्प०**—1 कश्चित्तु 'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्' इत्यादौ 'मन्ये'शब्दप्रयोगे सत्यपि लक्षणोक्तरूपायाः संभावनाया अप्रतीतेर्वितर्कमात्रम्, नापह्नवोत्प्रेक्षा ।

यथा,—

त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम् ॥ ३३-३५ ॥

---

## अतिशयोक्त्यलंकारः १३

**रूपकातिशयोक्तिः[1] स्यान्निगीर्याध्यवसानतः ।**
**पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥ ३६ ॥**

विषयस्य स्वशब्देनोल्लेखनं विनापि विषयिवाचकेनैव शब्देन ग्रहणं विषयनिगरणं तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानमाहार्यनिश्चयस्तस्मिन्सति रूपकातिशयोक्तिः । यथा नीलोत्पल-शरशब्दाभ्यां लोचनयोः कटाक्षाणां च ग्रहणपूर्वकं तद्रूपताध्यवसानम् ।

---

इत्यनेनोत्प्रेक्षाबोधकत्वेनेत्यर्थः ॥ **त्वत्कीर्तिरिति** । अत्रानुपात्तस्वर्गगमनविषया स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षा, विशेषणीभूतभ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षा वा प्रतीयत इति बोध्यम् ॥ ३३-३५ ॥

इत्यलंकारचन्द्रिकायामुत्प्रेक्षालंकारप्रकरणम् ॥ १२ ॥

अतिशयोक्तिं लक्षयति—**रूपकातिशयोक्तिरिति** । ग्रहणमुपस्थापनम् ॥ **विषयिरूपतयेति** । विषयिणो रूपमस्य तस्य भावस्तत्ता तयेत्यर्थः । रूपं चाभेदताद्रूप्यान्यतरत् ॥ **अस्मिन्सतीति** । सप्तमीसमर्थात्तसिरित्यभिप्रायेण । एवं चानुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूतं विषय्यभेदताद्रूप्यान्यतरद्रूपकातिशयोक्तिरिति लक्षणं बोध्यम् । अत्र रूपकवारणाय—अनुपात्तेति । अयमेव च रूपकादस्या विशेषोऽतिशय इत्युच्यते । भ्रान्तिवारणाय—आहार्येति । उत्प्रेक्षावारणाय—निश्चयेति ॥ **नीलोत्पलेति** । अत्र नीलोत्पलपदात्साध्यवसानलक्षणया शक्यलक्ष्योभयानुगतकान्तिविशेषादिपुरस्कारेणोपस्थिते कामिनीनयने शक्त्युपस्थितस्य नीलोत्पलत्वविशिष्टस्याभेदसंसर्गेणान्वयः । शक्त्युपस्थितयोः कृतीष्टसाधनतयोरिव शक्तिलक्षणाभ्यामुपस्थितयोरप्येकपदार्थयोस्तात्पर्यवशेनान्वयाङ्गीकारे बाधकाभावात् । एवं च नीलोत्पलाभिन्नकान्तिविशेषवद्द्वन्द्वादिति बोधादियमभेदातिशयोक्तिरित्युच्यते । नचैवं सति रूपकादवैलक्षण्यमिति वाच्यम् । रूपके विषयिभेदव्याप्यस्य विषयतावच्छेदकस्य भानेन वैलक्षण्यस्य स्फुटत्वात् । यदा त्वभेदभाने

---

**टिप्प०**—1 'विषयिणा विषयस्य निगरणमतिशयस्तस्योक्तिरतिशयोक्तिः' इति **रसगङ्गाधरः** । दण्डी तु—'विवक्षा या विशेषस्य लोकसीमातिवर्तिनी । असावतिशयोक्तिः स्यादलंकारोत्तमा यथा ॥' इत्याह । **मम्मटश्च**—'निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् । प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ कार्यकारणयोश्चैव पौर्वापर्यविपर्ययः । विज्ञेयाऽतिशयोक्तिः सा' इति भिन्नस्वरूपां चतुर्विधामतिशयोक्तिमाह । **वामनस्तु**—'संभाव्यधर्मतदुत्कर्षकल्पनाऽतिशयोक्तिः' इति वर्णयति । अर्वाचीनास्तु प्रायः सर्वेऽपि काव्यप्रकाशकृतां सरणिमनुसरन्ति ।

यथा वा,—

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या
सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।
अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ
तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः ॥

अत्र वाप्यादिशब्दैर्नाभिप्रभृतयो निगीर्णाः । अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामिहापि संभवोऽस्तीत्यतिदेशेन प्रदर्शनार्थम् । तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यम् । तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसंधेयम् ॥

---

न तात्पर्यं किंतु भेदमाने तदा कान्तिविशेषादिरूपताद्रूप्यस्यैव बोधात्ताद्रूप्यातिशयोक्तिर्वक्ष्यतीति बोध्यम् ॥ **वापीति** । मध्यभागमारभ्य मुखपर्यन्तं नायिकाङ्गवर्णनमिदम् । गगने सूक्ष्मतया तद्वद्दुर्लक्ष्ये मध्ये काप्यनिर्वचनीयशोभा वापी तद्वद्गम्भीरा नाभिः स्फुरति शोभते । तत्परं तदूर्ध्वभागे ऐन्द्रनीली इन्द्रनीलघटिता सूक्ष्मपद्या सरणिस्तद्वच्छ्यामा रोमावलिः स्फुरतीत्यनुषज्यते । किंभूता ? काञ्चननिर्मितां सोपानपङ्क्तिं तत्सदृशीं त्रिवलीमधिगतवती प्राप्तवती ॥ तथा अग्रे तदूर्ध्वदेशे शैलौ तद्वत्तुङ्गविशालौ कुचौ स्फुरत इति विभक्तिविपरिणामेन संबध्यते । कीदृशौ ? सुकृतिनां पुण्यकृतां सुगमौ सुलभगमनौ सुलभौ च । पुनः कीदृशौ ? चन्दनतरुभिः चन्दनपङ्केन चाच्छन्नो व्याप्तो देशो ययोस्तथाभूतौ । तत्रत्यानां तदाश्लिष्टानां च सुधांशोस्तद्वदाह्लादकस्य मुखस्य संनिधानादमृतं तद्वदास्वाद्यमधरमाधुर्यं सुलभमित्यन्वयः । विधानां भेदानाम् । इतीत्यस्य प्रदर्शनार्थमित्यनेनान्वयः । **अतिदेशेनेति** । सादृश्येनेत्यर्थः । मुख्यरूपकाभेदस्यातिशयोक्तावभावाद्रूपकपदं रूपकसादृश्यपरम् । 'षण्मासमग्निहोत्रं जुह्वति' इत्यत्राग्निहोत्रपदवद्धर्मातिदेशकमित्याशयः । आधिक्यन्यूनतेत्यत्रानुभयोक्तेरुक्तोदाहरणेषु प्रसिद्धतरत्वादनुपादानं बोध्यम् । यत्त्वत्र कैश्चिदुक्तं विषयिवाचकपदस्य विषये साध्यवसानलक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधकत्वं कार्यतावच्छेदकम् । एवं च निगरणे सर्वत्र विषयतावच्छेदकधर्मरूपेणैव विषयस्य भानं न विषय्यभिन्नत्वेनेति स्थितेऽभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यमयुक्तमिति, तत्प्रौढिविलसितम् । शक्यतावच्छेदकस्य लक्ष्ये पूर्वमप्रतीतत्वेन तद्विशिष्टतया लक्षणाया असंभवात्, यद्धर्मविशिष्टे शक्यसंबन्धग्रहस्तद्धर्मप्रकारकलक्ष्योपस्थितेः समानप्रकारकशाब्दबोधे हेतुत्वाल्लक्षणाऽपरिहार्या, अनुपपत्तेस्तदवस्थत्वाच्च । एवमपि तात्पर्यवशात्तादृशबोधाङ्गीकारे तद्वशादेव शक्याभेदप्रकारकबोधेऽपि बाधकाभावान्मात्रपदेन विषयतावच्छेदकस्यैव व्यावर्तनादिति

---

पाठा०—१ 'काञ्चनीमैन्द्रनीलीं.'

यथा वा ( विद्ध. भं. ),—

सुधावद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥

इत्यत्र 'कोऽयं गलितहरिणः शीतकिरण' इत्युक्त्या प्रसिद्धचन्द्राद्भेदस्तत उत्कर्षश्च गर्भितः । एवमन्यत्राप्यूहनीयम् ॥ ३६ ॥

---

दिक् ॥ **सुधाबद्धेति** । विद्धशालभञ्जिकाख्यायां नाटिकायां स्फटिकप्राकारशिखरगतां मृगाङ्कावलीमालोकयतो राज्ञो विदूषकं प्रत्युक्तिरियम् । उपप्राकाराग्रं प्राकाराग्रसमीपे नयने प्रहिणु प्रेरय । मनाक् ईषत्तर्कय । अनाकाशे अनन्तरिक्षे कोऽयं शीतकिरणश्चन्द्र इति मुखे चन्द्रगताह्लादकारित्वरूपताद्रूप्याध्यवसानम् । कीदृशः ? गलितश्च्युतो हरिणो यस्मात्तथाभूतस्तेन निष्कलङ्कतयोत्कर्षाभिव्यक्तिः । पुनः कीदृक् ? सुधायां बद्धो ग्रासस्तदभिलाषो यैस्तैरुपवनसंबन्धिभिश्चकोरैरनुसृतां लवल्याः फलपाकस्य प्रणयिनीं सदृशीमच्छां स्वच्छां ज्योत्स्नां तत्त्वेनाध्यवसितां कान्तिप्रभां किरन् । प्रसारयन्नित्यर्थः । लवली लताविशेषः, 'हरफारेवडी' इति भाषायां प्रसिद्धः । 'प्राकारो वरणः सालः' इत्यमरः । 'समावद्धग्रासैः' इति क्वचित्पाठस्तत्राप्युक्त एवार्थः । 'नवलवलि' इति पाठे नवश्चासौ लवलिपाकश्चेत्यन्वयो बोध्यः। नन्विह्राभेदविवक्षैव किं न स्यादत आह—**अत्रेति** । कोऽयमित्यनेनानिर्ज्ञातत्वप्रकाशनात्प्रसिद्धस्य निर्ज्ञातत्वात्तद्वैलक्षण्यावगतिरिति भावः ॥ गर्भितो गलितेत्यादिविशेषणव्यङ्ग्यत्वेनाभिप्रेतः ॥ **अन्यत्रापीति** । 'अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केनाश्लिष्टो न खलु परिभूतो दिनकृता । कुहूभिर्नो लिप्तो न च युवतिवक्त्रेण विजितः कलानाथः कोऽयं कनकलतिकायामुदयते ॥' इत्यादावित्यर्थः । अथवाऽन्यत्रापि न्यूनतायामपीत्यर्थः । 'कोऽयं भूमिगतश्चन्द्र' इत्यादावदिव्यत्वरूपन्यूनताप्रकाशनमूहनीयमिति भावः । ननूक्तोदाहरणेष्वयमिति विषयस्योपादानात् कथमतिशयोक्तिरिति चेत्, अत्राहुः—इदन्त्वस्य विषयिविशेषणत्वेन विवक्षायामतिशयोक्तिरेव;यदा तु विषयविशेषणत्वविवक्षा तदा रूपकमिति व्यवस्था। अत एव प्रकाशकृता दशमे रूपकातिशयोक्त्यादिसंदेहसंकरे 'नयनानन्ददायी-

---

**टिप्प०**—1 अत्र स्वदयितामुखे हिमांशुमध्यास्य राज्ञो विदूषकं प्रति वचनम् । सा चेयं श्लोकपूर्वार्धेऽभिधीयमानतुल्यविशेषणा; उत्तरार्धे पुनराकाशातिरिक्तप्रदेशे कोऽयं त्यक्तलाञ्छनः शीतलकिरणः इति तुल्यविशेषणा समासोक्तिरेवानन्योक्तिः । एकस्यैव चाध्यासादिति केचित् प्रचक्षते ।

---

**पाठा०**—१ 'समाबद्ध'. २ 'नवलवलिपाकप्रणयिनीम्'.

यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता ।
त्वत्सूक्तिषु सुधा राजन्भ्रान्ताः पश्यन्ति तां विधौ ॥ ३७ ॥

अत्र 'त्वत्सूक्तिमाधुर्यमेवामृतम्' इत्यतिशयोक्तिश्चन्द्रमण्डलस्थममृतं न भवतीत्यपह्नुतिगर्भा ॥

यथा वा,—

मुक्ताविद्रुममन्तरा मधुरसः पुष्पं परं धूर्वहं
प्रालेयद्युतिमण्डले खलु तयोरेकासिका नार्णवे ।
तच्चोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे
तानीमानि विकल्पयन्ति त इमे येषां न सा दृक्पथे ॥

अत्राधररस एव मधुरस इत्याद्यतिशयोक्तिः पुष्परसो मधुरसो न भवतीत्यपह्नुतिगर्भा। अलंकारसर्वस्वकृता तु स्वरूपोत्प्रेक्षायां सापह्नवत्वमुदाहृतम्—

गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु ।
यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति शिप्रा ॥' इति ।

ततस्त्वियानत्र भेदः । एतत्तु शुद्धापह्नुतिगर्भम् । यत्र फेनततित्वमपह्नुतं

न्दोर्बिम्बमेतत्प्रसीदति' इत्युदाहृतमिति ॥ ३६ ॥ एनां विभजते—यद्यपह्नुतीति । अपह्नुतिगर्भत्वं पर्यस्तापह्नुतिगर्भत्वम् । सैव रूपकातिशयोक्तिरेव । तथा च सापह्नवत्वनिरपह्नवत्वभेदेन द्विविधाऽतिशयोक्तिरिति भावः ॥ मुक्तेति । तान्यनुभवैकवेद्यानीमानि वस्तूनि त इमे जनाः विकल्पयन्ति सदसद्वेति विकल्पविषयाणि कुर्वन्ति येषां जनानां सा प्रक्रान्ता सुन्दरी दृक्पथे लोचनमार्गे नास्तीत्यन्वयः । तादृशसुन्दरीदर्शनशालिनस्तु न विकल्पयन्तीति भावः । तानि कानि वस्तूनि तत्राह—मुक्ता मौक्तिकं विद्रुमं प्रवालं चान्तरा अनयोर्मध्ये मधुरसः । 'अन्तरान्तरेण युक्ते' (२।३।४) इति द्वितीया । पुष्पं परं केवलं धूर्वहं भारवाहकं न तु मधुरसयुक्तम् । तयोः मुक्ता-विद्रुमयोः खलु निश्चितं प्रालेयद्युतिमण्डले चन्द्रमण्डले एकासिका एकस्मिन्नासिका अवस्थितिः । ऐकाधिकरण्यमित्यर्थः । न त्वर्णवे समुद्रे । तच्च चन्द्रमण्डलं च शङ्खस्य मूर्ध्नि मस्तके उदञ्चत्युदयं प्राप्नोति, न पुनः पूर्वाचलस्योदयगिरेरभ्यन्तरे उदञ्चति । अत्र 'मुक्ताविद्रुममधुरसप्रालेयद्युतिमण्डलशङ्ख'शब्दैः क्रमेण दन्ताधरतन्माधुर्यमुखकण्ठा निगीर्णाः । पूर्वोदाहरणे भ्रान्तत्वोक्त्या स्पष्टोऽपह्नवः । इह तु 'परं धूर्वहम्' इत्युक्त्या गूढ इति भेदः । 'प्रालेयं मिहिका च' इत्यमरः । गतास्विति । पुरे भवाः पौर्यस्तासु विलासिनीषु तिमीनां मत्स्यानां संघट्टनेन ससंभ्रमं सभयं तीरं प्रति गतासु सतीषु यत्र नगर्यां शिप्रा नदी उल्लसन्तीनां फेनततीनां छलेन मुक्तः कृतोऽट्टहास उद्धतहास्यं यया तथाभूतेव विभातीत्यन्वयः ॥ इतीति । इत्यत्रेत्यर्थः । 'इन्दुमण्डलादौ'

पाठा०—१ 'यद्यपह्नुति'। २ 'यत्त्वत्र शुद्धापह्नुतिगर्भत्वम्'

तत्रैवाट्टहासत्वोत्प्रेक्षणात्, इह तु पर्यस्तापह्नुतिगर्भत्वमिन्दुमण्डलादावपह्नुतस्यामृतादेः सूक्त्यादिषु निवेशनात्। इदं च पर्यस्तापह्नुतिगर्भत्वमुत्प्रेक्षायामपि संभवति।

तत्र स्वरूपोत्प्रेक्षायां यथा (नै. ७।२९)—

जानेऽतिरागादिदमेव विम्बं विम्बस्य च व्यक्तमितोऽधरत्वम्।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम्॥

अत्र प्रसिद्धविम्बफले विम्बतामपह्नुत्यातिरागेण निमित्तेन दमयन्त्यधरे तदुत्प्रेक्षा पर्यस्तापह्नुतिगर्भा। हेतूत्प्रेक्षायां तद्गर्भत्वं प्राग्लिखिते हेतूत्प्रेक्षोदाहरण एव दृश्यते। तत्र चान्धकारेऽत्रान्ध्यहेतुत्वमपह्नुत्यान्यत्र तन्निवेशितम्।

फलोत्प्रेक्षायां यथा—

रवितप्तो गजः पद्मांस्तद्गृह्यान्बाधितुं ध्रुवम्।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम्॥

अत्र गजस्य सरःप्रवेशं प्रति फले स्नाने फलत्वमपह्नुत्य पद्मबाधने[1] तन्निवेशितम्। अलमनया प्रसक्तानुप्रसक्त्या; प्रकृतमनुसरामः॥ ३७॥

**भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम्[2][3]।**
**अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यं महीपतेः[4]॥ ३८॥**

अत्र लोकप्रसिद्धगाम्भीर्याद्यभेदेऽपि भेदो वर्णितः।

---

इत्यादिपदात् पुरुषरसादिपरिग्रहः॥ **सूक्त्यादिष्विति**। सूक्तिमाधुर्यादिष्वित्यर्थः। आदिना अधरमाधुर्यपरिग्रहः। निवेशनात् अभेदाध्यवसानात्॥ **जाने इति**। दमयन्तीं वर्णयतो नलस्योक्तिः। अतिशयितात्द्रागाल्लौहित्यादिदमधरस्वरूपमेव बिम्बमिति जाने, नतु बिम्बफलमित्येवकारार्थः। बिम्बस्य बिम्बफलस्यातोऽस्मादोष्ठादधरत्वं निकृष्टत्वं व्यक्तं स्फुटम्। कथं तर्हि विपरीता लोके प्रसिद्धिस्तत्राह—द्वयोरनयोर्विशेषस्य तारतम्यस्यावगमे बोधेऽक्षमाणामसमर्थानां जनानां नाम्नि भ्रमो विपर्यासोऽभूदिति॥ **अन्यत्रेति**। सूर्यकर्तृके नेत्रापरपर्यायगोनयन इत्यर्थः। निवेशितम् उत्प्रेक्षितम्॥ **रवीति**। रविणा संतप्तो गजस्तस्य रवेर्गृह्यान्पक्ष्यान्। बन्धूनिति यावत्। ध्रुवं प्रायो बाधितुं सरः प्रविशति, नतु स्नातुं स्नानार्थम्। हि यस्माद्गजस्य स्नानं निष्फलं निष्प्रयोजनमित्यन्वयः॥ **प्रसक्तानुप्रसक्त्येति**। अतिशयोक्तेः सापह्नवत्वकथनप्रसङ्गादलंकारसर्वस्वकृदुक्तं स्वरूपोत्प्रेक्षायाः शुद्धापह्नुतिगर्भत्वं दर्शितम्; तदनुप्रसक्त्या च त्रिविधास्वप्युत्प्रेक्षासु पर्यस्तापह्नुतिगर्भत्वमित्यर्थः॥ ३७॥ **भेदकेति**। तस्यैव तज्जातीयस्यैवान्यत्ववर्णनं तज्जातीयभिन्नत्वेन वर्णनं तच्चाहार्यं बोध्यम्। एवमग्रेऽपि। तेन भ्रान्तौ नातिव्याप्तिः। इदं च लोकोत्तरत्वप्रतिपत्त्यर्थम्॥ **अन्यदेवेति**। अस्य महीपतेर्गाम्भीर्यं अन्यदेव। प्रसिद्धगाम्भीर्यभिन्नमेवेत्यर्थः। **अन्येयमिति**।

---

पाठा०—१ 'पक्षिबाधने'. २ 'अतिशयोक्तिः स्यात्तस्यै'. ३ 'कल्पनम्'. ४ 'च भूपतेः'.

यथा वा,—

अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी ।
नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः ॥ ३८ ॥

**संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम् ।**
**सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥ ३९ ॥**

यथा वा,—

कतिपयदिवसैः क्षयं प्रयायात्कनकगिरिः कृतवासरावसानः ।
इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥

अत्र चक्रवाक्याः सूर्यास्तमयकारकमहामेरुक्षयसंभावनाप्रयुक्तसंतोषासंबन्धेऽपि तत्संबन्धो वर्णितः ॥ ३९ ॥

**योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरितीर्यते ।**
**त्वयि दातरि राजेन्द्र! स्वर्द्रुमान्नाद्रियामहे ॥ ४० ॥**

अत्र स्वर्द्रुमेष्वादरसंबन्धेऽपि तदसंबन्धो वर्णित इत्यसंबन्धातिशयोक्तिः ।

---

रूपं सौंदर्यं, वैदग्ध्यं चातुर्यं, धोरणी परिपाटी । एषा नलिनपत्राक्षी विधेः साधारणी सृष्टिर्नैवेत्यन्वयः । अत्रोत्तरार्धे नञ्भङ्ग्याऽन्यत्ववर्णनं विशेषः ॥ ३८ ॥ **संबन्धेति** । अयोगेऽसंबन्धे योगकल्पनं संबन्धवर्णनम् । संबन्धश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः । तेन रूपकातिशयोक्त्यादिप्रभेदेषु नातिव्याप्तिः ॥ **सौधेति** । 'सौधोऽस्त्री राजसदनम्' इत्यमरः । नन्वत्रैव 'स्पृशन्तीवेन्दुमण्डलम्' इति 'इव' पदप्रयोगे उत्प्रेक्षाप्रतीतेस्तदप्रयोगे गम्योत्प्रेक्षात्वमुचितम् । इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमात् । अन्यथा 'त्वत्कीर्तिर्भ्रमणश्रान्ता'इत्यादिपूर्वोदाहृते पद्येऽपि गम्योत्प्रेक्षन स्याद्विशेषाभावादिति चेत्,—मैवम्; उपदर्शितनियमस्यालंकारान्तराविषय एवाभ्युपगमात् । अन्यथा 'नूनं मुखं चन्द्र' इत्यादौ नूनमित्यप्रयोगे गम्योत्प्रेक्षापत्तेः । एवं च प्रकृतेऽसंबन्धे संबन्धवर्णनरूपातिशयोक्त्यलंकारविषये न गम्योत्प्रेक्षावसरः । 'त्वत्कीर्तिः' इत्युदाहरणे तु भ्रमणश्रान्तत्वरूपहेत्वंशे गम्योत्प्रेक्षाभिप्रेता, नतु स्वर्गङ्गाप्रवेशांश इति सर्वमवदातम् ॥ असंदिग्धमुदाहरणान्तरमाह— **यथा वेति । कतिपयेति** । वीररुद्रदेवाख्ये नृपे वितरणशालिनि दानशालिनि सति चक्रवाकी इति मुदं संतोषमुपयाति प्राप्नोति । इति किम्? कृतं वासरस्यावसानं नाशो येन स कनकगिरिः सुमेरुः कतिपयैरल्पैर्दिवसैः क्षयं प्रयायादिति । संभावनायां लिङ् ॥ ३९ ॥ **योगेऽपीति** । योगे सत्यप्ययोगवर्णनमित्यर्थः । स्वर्गस्था द्रुमाः कल्पवृक्षादयः । स्वर्द्रुमेष्विति विषयसप्तमी । स्वर्द्रुमविषये य आदरस्तस्य संबन्धेऽप्यर्थादर्थिषु । यद्वा,—अर्थिषु स्वर्द्रुमविषयादरसंबन्धा-

---

पाठा०—१ 'अयोगे.'

यथा वा,—

अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ ४० ॥

**अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः ।**
**आलिङ्गन्ति समं देव! ज्यां शराश्च पराश्च ते ॥ ४१ ॥**

अत्र मौर्व्यां यदा शरसंधानं कृतं तदानीमेव शत्रवः क्षितौ पतन्तीति हेतुकार्ययोः सहत्वं वर्णितम् ।

यथा वा,—

मुञ्चति मुञ्चति कोशं भजति च भजति प्रकम्पमरिवर्गः ।
हंमीरवीरखङ्गे त्यजति त्यजति क्षमामाशु ॥

अत्र खङ्गस्य कोशत्यागादिकाल एव रिपूणां धनगृहत्यागादि वर्णितम् ॥ ४१

**चपलातिशयोक्तिस्तु[१] कार्ये हेतुप्रसक्तिजे ।**
**यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥ ४२ ॥**

अत्र नायकप्रवासप्रसक्तिमात्रेण योषितोऽतिकार्श्यं कार्यमुखेन दर्शितम् ।

यथा वा,—

आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं
लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः ।

---

भावप्रतीतौ तत्समानवित्तिवेद्यतया स्वर्द्रुमेष्वल्पादरविषयत्वाभावावगमाद्यथाश्रुतमेव साधु ॥ **अनयोरिति** । अनवद्यानि निर्दुष्टान्यङ्गानि यस्यास्तथाभूते इति संबोधनम् । जृम्भमाणयोर्वर्धमानयोरनयोः स्तनयोस्तव बाहुलतयोरन्तरे मध्ये पर्याप्तोऽवकाशो नास्तीत्यन्वयः । अत्र बाहु-लतयोरन्तरे स्तनपर्याप्तावकाशसंबन्धेऽपि तदसंबन्ध उक्तः ॥ ४० ॥ **अक्रमेति** । क्रमः पौर्वापर्यं, तदभावोऽक्रमस्तद्रूपस्यातिशयोक्तिरित्यर्थः । सहत्वे समकालत्वे । आलिङ्गन्ति समं युगपज्ज्यां मौर्वीं पृथ्वीं च । पराः शत्रवः ॥ **मुञ्चतीति** । हंमीरसंज्ञकस्य वीरस्य खङ्गे कोशं पिधानं मुञ्चति सति अरीणां वर्गः समूहोऽपि कोशं भाण्डारं मुञ्चति, तथा खङ्गे प्रकम्पमुल्लासनं भजति सति स प्रकृष्टं कम्पं भजति । एवं खङ्गे क्षमां क्षान्तिं त्यजति सति सोऽपि क्षमां पृथ्वीं त्यजतीत्यर्थः । 'कोशोऽस्त्री कुड्मले खङ्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । अत्र शतृप्रत्ययभङ्ग्या यौगपद्यवर्णनं विशेषः ॥ **धनगृहेति** । धनसंबन्धिगृहेत्यर्थः ॥ ४१ ॥ **चपलेति** । हेतोः प्रसक्तिर्ज्ञानं तज्जन्ये कार्ये सतीत्यर्थः । यास्यामीति उदित उक्ते । प्रियेणेति शेषः । तन्व्या ऊर्मिका अङ्गुलीयकं वलयः कङ्कणमभवदित्यर्थः । 'ऊर्मिका त्वङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयोः' इति विश्वः ॥ **कार्यमुखेनेति** । अङ्गुलीयकस्य कङ्कणपदप्राप्तिरूपकार्यवर्णनद्वारेणेत्यर्थः ॥ **आदातुमिति** । सहजसौकुमार्यवत्या

---

पाठा०—१ 'चपलातिशयोक्तिः'. २ 'व्यतिक्रमे'.

यथा वा,—

अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी।
नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः ॥ ३८ ॥

**संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्।**
**सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥ ३९ ॥**

यथा वा,—

कतिपयदिवसैः क्षयं प्रयायात्कनकगिरिः कृतवासरावसानः।
इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥

अत्र चक्रवाक्याः सूर्यास्तमयकारकमहाद्रेरुक्षयसंभावनाप्रयुक्तसंतोषासंबन्धेऽपि तत्संबन्धो वर्णितः ॥ ३९ ॥

**योगेऽप्ययोगोऽसंबन्धातिशयोक्तिरितीर्यते।**
**त्वयि दातरि राजेन्द्र! स्वर्द्रुमान्नाद्रियामहे ॥ ४० ॥**

अत्र स्वर्द्रुमेष्वादरसंबन्धेऽपि तदसंबन्धो वर्णित इत्यसंबन्धातिशयोक्तिः।

---

रूपं सौंदर्यं, वैदग्ध्यं चातुर्यं, धोरणी परिपाटी। एषा नलिनपत्राक्षी विधेः साधारणी सृष्टिर्नैवेत्यन्वयः। अत्रोत्तरार्धे नञ्भङ्ग्याऽन्यत्ववर्णनं विशेषः ॥ ३८ ॥ **संबन्धेति**। अयोगेऽसंबन्धे योगकल्पनं संबन्धवर्णनम्। संबन्धश्चाभेदभिन्नत्वे सत्यन्यत्वाद्यनिरूपितो ग्राह्यः। तेन रूपकातिशयोक्त्यादिप्रभेदेषु नातिव्याप्तिः ॥ **सौधेति**। 'सौधोऽस्त्री राजसदनम्' इत्यमरः। नन्वत्रैव 'स्पृशन्तीवेन्दुमण्डलम्' इति 'इव' पदप्रयोगे उत्प्रेक्षाप्रतीतेस्तदप्रयोगे गम्योत्प्रेक्षात्वमुचितम्। इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमात्। अन्यथा 'त्वत्कीर्तिर्भ्रमणश्रान्ता'इत्यादिपूर्वोदाहृते पद्येऽपि गम्योत्प्रेक्षा न स्याद्विशेषाभावादिति चेत्,—मैवम्; उपदर्शितनियमस्यालंकारान्तराविषय एवाभ्युपगमात्। अन्यथा 'नूनं मुखं चन्द्र' इत्यादौ नूनमित्यप्रयोगे गम्योत्प्रेक्षापत्तेः। एवं च प्रकृतेऽसंबन्धे संबन्धवर्णनरूपातिशयोक्त्यलंकारविषये न गम्योत्प्रेक्षावसरः। 'त्वत्कीर्तिः' इत्युदाहरणे तु भ्रमणश्रान्तत्वरूपहेत्वंशे गम्योत्प्रेक्षाभिप्रेता, नतु स्वर्गङ्गाप्रवेशांश इति सर्वमवदातम् ॥ असंदिग्धमुदाहरणान्तरमाह— **यथा वेति। कतिपयेति।** वीररुद्रदेवाख्ये नृपे वितरणशालिनि दानशालिनि सति चक्रवाकी इति मुदं संतोषमुपयाति प्राप्नोति। इति किम्? कृतं वासरस्यावसानं नाशो येन स कनकगिरिः सुमेरुः कतिपयैरल्पैर्दिवसैः क्षयं प्रयायादिति। संभावनायां लिङ् ॥ ३९ ॥ **योगेऽपीति।** योगे सत्यप्ययोगवर्णनमित्यर्थः। स्वर्गस्था द्रुमाः कल्पवृक्षादयः। स्वर्द्रुमेष्विति विषयसप्तमी। स्वर्द्रुमविषये य आदरस्तस्य संबन्धेऽप्यर्थादर्थिषु। यद्वा,—अर्थिषु स्वर्द्रुमविषयादरसंबन्धा-

---

पाठा०—१ 'अयोगे.'

यथा वा,—

अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ ४० ॥

**अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः ।**
**आलिङ्गन्ति समं देव! ज्यां शराश्च पराश्च ते ॥ ४१ ॥**

अत्र मौर्व्यां यदा शरसंधानं कृतं तदानीमेव शत्रवः क्षितौ पतन्तीति हेतुकार्ययोः सहत्वं वर्णितम् ।

यथा वा,—

मुञ्चति मुञ्चति कोशं भजति च भजति प्रकम्पमरिवर्गः ।
हंमीरवीरखड्गे त्यजति त्यजति क्षमामाशु ॥

अत्र खड्गस्य कोशत्यागादिकाल एव रिपूणां धनगृहत्यागादि वर्णितम् ॥ ४१

**चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।**
**यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥ ४२ ॥**

अत्र नायकप्रवासप्रसक्तिमात्रेण योषितोऽतिकार्श्यं कार्यमुखेन दर्शितम् ।

यथा वा,—

आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं
लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः ।

---

भावप्रतीतौ तत्समानवित्तिवेद्यतया स्वर्द्रुमेष्वत्यादरविषयत्वाभावावगमाद्यथाश्रुतमेव साधु ॥ **अनयोरिति** । अनवद्यानि निर्दुष्टान्यङ्गानि यस्यास्तथाभूते इति संबोधनम् । जृम्भमाणयोर्वर्धमानयोरनयोः स्तनयोस्तव बाहुलतयोरन्तरे मध्ये पर्याप्तोऽवकाशो नास्तीत्यन्वयः । अत्र बाहु-लतयोरन्तरे स्तनपर्याप्तावकाशसंबन्धेऽपि तदसंबन्ध उक्तः ॥ ४० ॥ **अक्रमेति** । क्रमः पौर्वापर्यं, तदभावोऽक्रमस्तद्रूपस्यातिशयोक्तिरित्यर्थः । सहत्वे समकालत्वे । आलिङ्गन्ति समं युगपज्ज्यां मौर्वीं पृथ्वीं च । पराः शत्रवः ॥ **मुञ्चतीति** । हंमीरसंज्ञकस्य वीरस्य खड्गे कोशं पिधानं मुञ्चति सति अरीणां वर्गः समूहोऽपि कोशं भाण्डारं मुञ्चति, तथा खड्गे प्रकम्पमुल्लासनं भजति सति स प्रकृष्टं कम्पं भजति । एवं खड्गे क्षमां क्षान्तिं त्यजति सति सोऽपि क्षमां पृथ्वीं त्यजतीत्यर्थः । 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । अत्र शतृप्रत्ययभङ्ग्या यौगपद्यवर्णनं विशेषः ॥ **धनगृहेति** । धनसंबन्धिगृहेत्यर्थः ॥ ४१ ॥ **चपलेति** । हेतोः प्रसक्तिर्ज्ञानं तज्जन्ये कार्ये सतीत्यर्थः । यास्यामीति उदित उक्ते । प्रियेणेति शेषः । तन्व्या ऊर्मिका अङ्गुलीयकं वलयः कङ्कणमभवदित्यर्थः । 'ऊर्मिका त्वङ्गुलीये स्याद्वस्त्रभङ्गतरङ्गयोः' इति विश्वः ॥ **कार्यमुखेनेति** । अङ्गुलीयकस्य कङ्कणपदप्राप्तिरूपकार्यवर्णनद्वारेणेत्यर्थः ॥ **आदातुमिति** । सहजसौकुमार्यवत्या

---

पाठ०—१ 'चपलातिशयोक्तिः'. २ 'व्यतिक्रमे'.

अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं
हन्ताऽधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥

यथा वा,—

यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः ।
गलितानि पुरो वलयान्यपराणि तथैव दलितानि ॥ ४२ ॥

**अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे ।**
**अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ४३ ॥**

([1]अत्यन्तातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।
यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥)

यथा वा,—

कवीन्द्राणामासन्प्रथमतरमेवाङ्गणभुव-
श्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः ।

---

विरहदशायां तदतिशयवर्णनमिदम् । 'हन्त' इति खेदे । आदातुं ग्रहीतुं सकृदेकवारमपि कुसुमे ईक्षिते सत्यधीरदृशो हस्ताग्रमालोहितं, भवतीति शेषः । अपिना किमु गृहीते इति गम्यते । लाक्षया यद्रञ्जनं तद्वार्तयापि सहसाकस्मात्पादयोस्तलं रक्तं भवति, किमु रञ्जनेनेति पूर्ववत् । एवमङ्गानां चन्दनादिना यदनुलेपनं तत्स्मरणमप्यत्यन्तखेदकरं किमुतालेपनम् । किमन्यद्वाच्यमिति शेषः । अलकानामगुरुधूपाद्यामोदोऽपि भारायते । भार इवाचरतीत्यर्थः । कर्तरि क्यङ् । अत्रादानादिरूपहेतुप्रसक्तिमात्रेण हस्ताग्रलौहित्यादिरूपकार्योत्पत्तेः साक्षादेव वर्णनं नतु कार्यमुखेनेति पूर्वस्माद्भेदः । हेतुकार्ययोरिव हेतुप्रसक्तकार्ययोरपि समकालत्वं संभवतीति सूचयितुमुदाहरणान्तरमाह—**यामीति** । धवे दयिते यामि न यामीति वदति सति तत्क्षणेन तत्कालमेव तन्वङ्ग्याः पुरोवलयान्यग्रिमकङ्कणानि पुरः प्रथमं गलितानि । अपराण्यपि तथैव तत्कालमेव दलितानि भग्नानीत्यन्वयः । 'पुरोऽग्रे प्रथमे च स्यात्' इति विश्वः । अत्र वदति गलितानीति शतृप्रत्ययेन समकालतावगतिः ॥ ४२ ॥ **अत्यन्तेति** । अत्र हेतुकार्ययोरित्यनुवर्तते । 'तत्पौर्वापर्य—' इति क्वचित्पाठः साधुरेव । व्यतिक्रमोऽत्र वैपरीत्यम् । अग्रे प्रथमम् । अनुनीता समाहिता ॥ **कवीन्द्राणामिति** । कविश्रेष्ठानामङ्गणसंबन्धिन्यो भूमयः प्रथमतरमेव प्रथममेव चलतां चपलानां भृङ्गाणां भ्रमराणामासङ्गेनाकुलानां करिणां मदजलस्यामोदेन परिमलेन मधुरा रमणीया आसन्नभवन् । पश्चादनन्तरं तेषां कवीनामुपरि रुद्रसंज्ञकस्य नृपतेरमी दृश्यमानाः कटाक्षाः पतिताः । कीदृशाः ? क्षीरमुदकं यस्य तथाभूतस्य क्षीरार्णवस्य प्रसरन्तीनामुरुवीचीनां बृहत्तरङ्गाणां सहचराः । तत्सदृशा इत्यर्थः । 'उदकस्योदः संज्ञायाम्' (६।३।५७) इत्युदादेशः । अत्र यथोक्तकटाक्षरूपकार्यमुखेन

---

**टिप्प०**—1 श्लोकोऽयं क्वचिन्न लभ्यते, क्वचित्तु ४२ तमश्लोकस्थाने लभ्यते; एवं चपलातिशयोक्तिसमलक्षणमिदं पद्यमतोऽत्र कोष्ठके निवेशितम् ।

अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः
कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥
एतास्तिस्रोऽप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः ॥ ४३ ॥

---

## तुल्ययोगितालंकारः १४

**वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ।**
**संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥ ४४ ॥**

---

नृपतिप्रसादरूपहेतुकथनं पूर्वस्माद्विशेषः । एता अव्यवहितोक्ताः ॥ अथोक्तेषु प्रभेदेष्वनुगतप्रवृत्तिनिमित्ताभावात् कथमतिशयोक्तिपदप्रयोग इति चेदत्राहुः—तावत्प्रभेदान्यतमत्वमेव सर्वानुगतमतिशयोक्तिपदप्रवृत्तिनिमित्तं तदेव च सामान्यलक्षणमिति । नव्यास्तु—निगीर्याध्यवसानमेवातिशयोक्तिः, अभेदान्तरं त्वनुगतरूपाभावादलंकारान्तरमेव । न चान्यत्वादिप्रभेदेष्वन्यत्वादिभिरभेदादीनां निगरणं संभवतीति वाच्यम् । अन्यत्वादिभिरभिन्नवस्तुप्रतीतेरेव चमत्कारित्वेनानुभवसिद्धतयान्यत्वादिभिरभेदप्रतीत्यङ्गीकारेऽनुभवासङ्गतेः । अन्यतमत्वं तु नालंकारविभाजकोपाधितां भजते चमत्काराप्रयोजकत्वादिति वदन्ति । वस्तुतस्तु रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमेवातिशयोक्तिसामान्यलक्षणम् । रूपकवारणाय–सत्यन्तम् । भ्रान्तिवारणाय–आहार्येति । उत्प्रेक्षानिरासाय—निश्चयेति । रूपकातिशयोक्तावभेदस्य द्वितीयप्रभेदेऽन्यत्वस्य, तृतीये संबन्धस्य, चतुर्थे असंबन्धस्य, पञ्चमे सहत्वस्य, षष्ठे हेतुप्रसक्तिजन्यत्वस्य, सप्तमे पूर्वापरत्वयोश्च तथा विरोधारोपविषयत्वसत्त्वात्सर्वत्र लक्षणसमन्वयः । न चैवंविधारोपस्य रूपकस्वभावोक्तिभिन्नेषु प्रायशः सर्वालंकारेषु सत्त्वादतिप्रसङ्ग इति वाच्यम् । इष्टापत्तेः । अलंकारान्तराणां चमत्कारे प्रधानतया तदङ्गत्वेनावस्थिताया अतिशयोक्तेरप्राधान्येन व्यपदेशानर्हत्वात् । 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायात् । अलंकारान्तराणामेव प्रधानत्वेन व्यपदेशार्हत्वात् । अत एव काव्यप्रकाशकृता विशेषालंकारप्रसङ्गेऽभिहितं 'सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालंकारत्वाभावात्' । अत एवोक्तम्—'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥' इति । दण्डिनाप्युक्तम् ( काव्यादर्शे २।२२० )—'अलंकारान्तराणामप्येकमाहुः परायणम् । वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥' इति ॥ ४३ ॥

इत्यलंकारचन्द्रिकायामतिशयोक्त्यलंकारप्रकरणम् ॥ १३ ॥

तुल्ययोगितां लक्षयति—**वर्ण्यानामिति** । वर्ण्यत्वेन प्रस्तुतानामित्यर्थः । इतरेषामप्रस्तुतानाम् । एतच्चोभयमपि सावधारणम् । वर्ण्यानामेव इतरेषामेव वेत्यर्थः । बहुवचनमनेकार्थम् । द्वयोर्धर्मैक्यस्यापि संग्राह्यत्वात्, धर्मैक्यं धर्मस्य ऐक्यमेकत्वम् । एको धर्म इति यावत् । स च चमत्कारकारी बोध्यः । एवं चानेकप्रस्तुतमात्रसंबद्धैकचमत्कारिधर्मानेकाप्रस्तुतमात्रसंबद्धैकधर्मान्यतरत्वं लक्षणं

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥ ४५ ॥

प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता। संकुचन्तीति प्रस्तुततुल्ययोगिताया उदाहरणम्। तत्र प्रस्तुतचन्द्रोदयकार्यतया वर्णनीयानां सरोजानां प्रकाशभीरुस्वैरिणीवदनानां च संकोचरूपैकक्रियान्वयो दर्शितः। उत्तरश्लोके नायिकासौकुमार्यवर्णने प्रस्तुतेऽप्रस्तुतानां मालत्यादीनां कठोरतारूपैकगुणान्वयः।

---

बोध्यम्। 'मुखं विकसितस्मितम्' इत्यादावतिप्रसङ्गवारणाय—अनेकेति। अत्र च मुखे प्रेक्षितादिरूपानेकवर्ण्यसंबन्धो नैको धर्म इति तन्निरासः। दीपकवारणाय—मात्रेति। प्रस्तुताप्रस्तुतप्रभेदसाधारण्यायान्यतरत्वनिवेशः॥ त्वदङ्गेति। प्रियां प्रति दयितोक्तिः। तवाङ्गस्य मार्दवे सौकुमार्ये दृष्टे सति कस्य चित्ते मालत्यादीनां कठोरता न भासते। अपि तु सर्वस्यैवेत्यर्थः। शशं बिभर्तीति शशभृच्चन्द्रस्तस्य लेखा कला॥ गुणक्रियारूपेति। एतच्च तथाविधधर्मस्य प्रायशो गुणक्रियारूपत्वमित्यभिप्रेत्योक्तम्, न तु लक्षणे तेन रूपेण धर्मस्य निवेशः। गौरवात्प्रयोजनाभावाच्च। यत्तु कैश्चिदेतद्ग्रन्थदूषणलालसैः'धर्मस्य गुणक्रियारूपत्वेन लक्षणे निवेशः' इत्याशयमारोप्याभिहितं, तदेतदापाततः 'शासति त्वयि हे राजन्नखण्डावनिमण्डलम्। न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः॥' इत्यत्राभावरूपधर्मस्यैवान्वयादिति। तदिदमापाततोऽपि न मनोरमम्; तथा हि—'शासति' इति त्वदुदाहृतपद्ये निश्चिन्ते इति निश्चिन्तत्वभेदः शत्रुमित्रमण्डलधर्मतयोपात्तः, स च गुणस्वरूप एव। चिन्ताभाववच्छेदस्य चिन्तानतिरिक्तत्वात्। अन्यथा चिन्ताभावाभावस्याप्यतिरिक्तत्वापत्तेः। अथ तत्रापि वैपरीत्यादिष्टापत्तिमालम्बसे, भवत्वेवं तुष्यतु भवान्। एवमप्यभावस्य कथं गुणवहिर्भावः? जातिक्रियासु द्रव्यातिरिक्तस्यैव 'चतुष्टयी शब्दानां प्रवृत्ति'रिति वदद्भिर्वैयाकरणैस्तदनुसारिभिश्चालंकारिकैर्गुणत्वाङ्गीकारात्। अत एव जातिगुणयोर्विरोधे प्रकाशकृद्भिरुदाहृतं 'गिरयोऽप्यनुन्नतियुजः' इति। तथा विद्यानाथेनापि—'अमदः सार्वभौमोऽपी'ति वस्तुतस्तु लक्षणेन तेन रूपेण धर्मस्य निवेशोऽभिप्रेत इत्यावेदितमतो न काप्यनुपपत्तिरिति। स्वैरिणी स्वेन ईरितुं शीलमस्यास्तादृशी। व्यभिचारिणीति यावत्। 'स्वादीरेरिणोः' (वा० ३६०६) इति वृद्धिः। 'स्वैरिणी पांसुला च स्यात्' इत्यमरः॥

---

टिप्प०—1 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति पातञ्जलमहाभाष्याकरणम्; शब्दानामर्थे प्रवृत्तिनिमित्तभेदात् चतुर्विधेयं प्रवृत्तिः। तथा च शब्दानां प्रवृत्तिहेतुकं चातुर्विध्यम्; जात्यादेश्चातुर्विध्यात् शब्दस्यापि जातिशब्द-गुणशब्द-क्रियाशब्द-यदृच्छाशब्दभेदेन चातुर्विध्यमुक्तं भवतीति भावः।

यथा वा (कुमार.१।३६),—

संजातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम्।
विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः॥
नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः॥

अत्र ग्रीष्मवर्णने तदीयत्वेन प्रस्तुतानां दिनानां पद्मानां चैकक्रियान्वयः। ऊरुवर्णनेऽप्रस्तुतानां करिकराणां कदलीविशेषाणां चैकगुणान्वयः॥४४–४५॥

**हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता।**
**प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥ ४६ ॥**

अत्र हिताऽहितयोर्मित्र-शात्रवयोरुत्कृष्टभूतिदानस्य पराभवदानस्य च श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यम्।

---

**संजातेति**। दिनानि पद्मानि च वृद्धिमीयुः प्रापुः। कीदृशानि? संजातैः पत्राणां प्रकरैः समूहैरन्वितानि। पूर्वपत्राणां वसन्तेन विगलनात्। तथा स्फुटा विकसिताः पाटला वृक्षविशेषा येषु तानि तेषां भावस्तत्त्वम्। समुद्वहन्तीति शत्रन्तम्। दधानानीत्यर्थः। पद्मपक्षे तु—स्फुटानि विकसितानि च तानि पाटलानि पाटलवर्णानि तेषां भावस्तत्त्वमित्यादि पूर्ववत्। एवमर्कस्य करैः किरणैरभिमर्शनाद्विकस्वराणि भासुराणि दिनानि। पद्मानि तु विकासशालीनि॥ **नागेन्द्रेति**। नागेन्द्राणां गजश्रेष्ठानां हस्ताः शुण्डाः कदलीविशेषाश्च। परिणाहो विशालता तच्छालि रूपं स्वरूपं लब्ध्वापि यथाक्रमं त्वचि कर्कशत्वात्कठोरत्वादेकान्तेन नियमेन शैत्याच्च हेतोर्लोके तस्याः पार्वत्या ऊर्वोरुपमानाद्बाह्या उपमानत्वरहिता जाता इत्यन्वयः॥ **तदीयत्वेनेति**। तत्कालिकत्वेनेत्यर्थः। ग्रीष्मकालिकवस्तुवर्णनस्यैव ग्रीष्मवर्णनरूपत्वादिति भावः॥ **एकक्रियेति**। वृद्धिप्राप्तिरूपैकक्रियान्वय इत्यर्थः॥ **एकगुणेति**। उपमानबाह्यत्वरूपैकगुणेत्यर्थः॥ ४४–४५॥ **हिताहिते इति**। हिताहितविषये इत्यर्थः। **वृत्तितौल्यमिति**। वृत्तिर्वर्तनं। व्यवहरणमिति यावत्। तस्य तौल्यं साम्यम्। अपरा पूर्वोक्तविलक्षणा। **प्रदीयत इति**। परा उत्कृष्टा भूतिः संपत्तिरेव पराभूतिः पराभवः॥ शत्रूणां समूहः शात्रवम्। 'तस्य समूहः' (४।२।३७) इत्यण्॥ **पराभवदानस्येति**। शत्रुसंबन्धिपराभवसंपादनस्येत्यर्थः। पराभवस्य मुख्यदानासंभवात्। अत एव संप्रदानत्वासंभवान्मित्र-शात्रवयोरिति संबन्धसामान्ये षष्ठी। श्लेषेण 'पराभूति'-

---

**टिप्प०**—1 उद्द्योतकृतश्च—'प्राकरणिकाप्राकरणिकोभयावृत्तित्वे सत्यौपम्याक्षेपकत्वं लक्षणम्; सत्यन्तेन दीपकव्युदासः; न चाक्षेपलभ्यसाम्ये व्यतिरेकभेदेऽतिव्याप्तिः, तत्रोपमेयाधिक्यकृत एव चमत्कारः; न तु साम्यप्रतीतिकृत इति विशेषात् इत्याहुः. मम्मटस्तु 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता' इति लक्षयित्वा 'पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः। आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः' इत्युदाजहार।

यथा वा,—

यश्च निम्बं परशुना, यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः, सर्वस्य कटुरेव सः ॥

अत्र वृश्चति-सिञ्चति-अर्चति इत्यध्याहारेण वाक्यानि पूरणीयानि । पूर्वोदाहरणं स्तुतिपर्यवसायि, इदं तु निन्दापर्यवसायीति भेदः । इयं सरस्वतीकण्ठाभरणोक्ता तुल्ययोगिता[2] ॥ ४६ ॥

---

पदश्लेषेण । **यथा वेति** । अत्र चशब्दा अप्यर्था विरोधद्योतकाः ॥ **अत्रेति** । योऽपि निम्बं परशुना छिनत्ति, योऽप्येनं मधुयुक्तेन सर्पिषा आज्येन सिञ्चति, योऽप्येनं गन्धमाल्याद्यैरर्चतीति क्रमेणेत्यर्थः ॥ उक्तप्रकारस्य तुल्ययोगितापदवाच्यत्वे वृद्धसंमतिं दर्शयति—**इयमिति** । तथा च वृद्धव्यवहारान्नानार्थस्तुल्ययोगिताशब्द इति भावः । अत्र केचिदाहुः—नेयं तुल्ययोगिता पूर्वोक्ततुल्ययोगितातो भेदमर्हति । 'वर्ण्यानामितरेषां वा' (श्लो.४४) इत्यादिपूर्वोक्तलक्षणाक्रान्तत्वात् । एकानुपूर्वीबोधितवस्तुकर्मकदानमात्रत्वस्य परम्परया तादृशशब्दस्य वा धर्मस्यैक्यात् । 'यश्च निम्बम्' इत्यत्रापि कटुत्वविशिष्टनिम्बस्यैव परम्परया छेदक-सेचक-पूजकधर्मत्वसंभवात्' इति,—तदेतदपेशलम्; तथा हि—यत्रानेकान्वयित्वेन ज्ञातो धर्मस्तेषामौपम्यगमकत्वेन चमत्कृतिजनकस्तत्र पूर्वोक्तप्रकारः; यत्र तु हिताहितोभयविषयशुभाशुभरूपैकव्यवहारस्य व्यवहर्तृगतस्तुतिनिन्दान्यतरद्योतकतया चमत्कृतिजनकत्वं तत्रापर इति भेदात् । नह्यत्र 'पराभूति'शब्दस्य तदर्थकर्मदानस्य वा परम्परया शत्रुमित्रगतत्वेन भानम्, अपि तु श्लेषबलादेकत्वेनाध्यवसितस्य तादृशदानस्य राजगतत्वेनैवेति कथं पूर्वोक्तलक्षणाक्रान्तत्वम्? एतेन 'यश्च निम्बम्' इत्यत्र कटुत्वविशिष्टनिम्बस्यैव परम्परया छेदक-सेचक-पूजकधर्मत्वमिति निरस्तम् । वस्तुगत्या तद्धर्मत्वस्यालंकारतासंपादकत्वाभावात् । अन्यथा 'संकुचन्ति सरोजानि' इत्येतावतैव तुल्ययोगितालंकारापत्तेः । किं त्वनेकगतत्वेन ज्ञायमानधर्मत्वस्यैव तुल्ययोगिताप्रयोजकत्वमिति तदभावे तदन्तर्गतकथनमसमञ्जसमेव । अथाप्युक्तोदाहरणयोस्तथा भानमस्तीत्याग्रहः, तथापि न पूर्वोक्तलक्षणस्यात्र संभवः । 'धर्मोऽर्थ इव पूर्णश्रीस्त्वयि राजन्! विराजते ।' इति प्रकृतयोरुपमायामतिव्याप्तिवारणार्थमनेकानुगतधर्मत्वपर्याप्तविषयितासंबन्धावच्छिन्नावच्छेदकताकचमत्कृतिजनकताश्रयज्ञानविषयधर्मत्वमिति विवक्षायास्तत्रावश्यकत्वात्, प्रकृते च हितत्वाहितत्वादेर्विषयस्याधिकस्यानुप्रवेशादिति विभाव-

---

टिप्प०—1. अत्र यो निम्बवृक्षं कुठारेण छिनत्ति, यश्चैनं निम्बं मधुसहितेन घृतेन सिञ्चति, यश्च गन्धमाल्याभ्यांमर्चति तेषां समेषां कृते स निम्बस्तिक्त एवेति साम्यापादनेन उपमेयनिन्दाप्रतीतिरिति भावः. 2 तथा चोक्तं 'विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित् । कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता' इति **सरस्वतीकण्ठाभरणे** तुल्ययोगितालक्षणम् । तुल्या योगिता नाम अन्वयो यत्रेति भावः.

**गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता ।**
**लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥ ४७ ॥**

अत्र वर्णनीयो राजा शक्रादिभिर्लोकपालत्वेन समीकृतः । यथा वा,—

संगतानि मृगाक्षीणां तडिद्विलसितान्यपि ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥

पूर्वत्र स्तुतिः; इह तु निन्दा । इयं काव्यादर्शे दर्शिता । इमां तुल्ययोगितां सिद्धिरिति केचिद्व्यवजह्रुः । यदाह जयदेवः—

सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः॥

इति । मतान्तरेष्वत्र वक्ष्यमाणं दीपकमेव ॥ ४७ ॥

---

## दीपकालंकारः १५

**वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं[1] बुधाः ।**
**मदेन भाति कलभः प्रतापेन महीपतिः ॥ ४८ ॥**

---

नीयम् ॥४६॥ **गुणोत्कृष्टैरिति** । गुणैरुत्कृष्टाः श्रेष्ठास्तैरित्यर्थः । समीकृत्य साम्यं विवक्षित्वा । **वच इति** । वचनं वचः । प्रतिपादनमिति यावत् । अर्थात्तत्साधारणधर्मस्य । **अन्येति** । धर्मस्य वर्ण्यावर्ण्यगतत्वादुक्तविलक्षणेत्यर्थः । पाशोऽस्यास्तीति पाशी वरुणः । 'प्रचेता वरुणः पाशी' इत्यमरः । श्रीदः कुबेरः । शक्र इन्द्रः । 'लोकपाल'पदं चेन्द्रादिषु रूढम् । राज्ञि तु योगमात्रेण प्रयुक्तम् ॥ **संगतानीति** । संगतानि संगमाः तडितां विद्युतां विलसितानि घनं निबिडं यथा स्यात्तथा आरब्धानीति संगमपक्षे, घनैर्मेघैरारब्धानीति च तडिद्विलसितपक्षेऽर्थः । काव्यादर्शे एतन्नामकदण्डिकृतग्रन्थे । दर्शिता तुल्ययोगितापदवाच्यत्वेन निर्दिष्टा । केचिदालंकारिका व्यवजह्रुर्व्यवहृतवन्तः । ख्यातेषु गुणत्वेन प्रसिद्धेषु । **युवामेवेति** । इह भूलोके । बलैः सैन्यैः । अत्र च सैन्य-जलयोः प्रसरणशीलत्वादिसादृश्याद्बिम्बप्रतिबिम्बभावेनाभेदमाश्रित्य धर्मैक्यं बोध्यम् । मतान्तरेष्विति बहुवचनेन बहुसंमततया दण्डयुक्ततुल्ययोगितानामस्वरसो ध्वन्यते । स च दीपक-तुल्ययोगितयोर्भेदकथनावसरे व्यक्तीभविष्यतीति संक्षेपः ॥ ४७ ॥

इत्यलंकारचन्द्रिकायां तुल्ययोगितालंकारप्रकरणम् ॥ १४ ॥

दीपकं लक्षयति—**वदन्तीति** । वर्ण्यावर्ण्यान्वितैकचमत्कारिधर्मो दीपकमित्यर्थः । उपमादिवारणायात्रापि पूर्ववल्लक्षणपरिष्कारो बोध्यः । कलभः करि-

---

**टिप्प०**—1 'जातिक्रियागुणद्रव्यवाचिनैकत्र वर्तिना । सर्ववाक्योपकारश्चेत्तमाहुर्दीपकं यथा' इति दण्डिना दीपकलक्षणमुक्तम्; इदमेव लक्षणं सरस्वतीकण्ठाभरणकारभामहादिभिः स्वीकृतं दृश्यते; प्रकृतार्थे गृहीतो धर्मो ह्यप्रकृतमपि दीपयतीति दीपकम्.

---

**पाठा०**—१ 'गुणोत्कृष्टैः समाहृत्य'. २ '°मेव हि विख्यातौ'.

प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम् । यथा—कलभ-महीपालयोः प्रस्तुताप्रस्तुतयोर्भानक्रियान्वयः ।

यथा वा,—

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥

अत्र प्रस्तुतानां नृपाणामप्रस्तुतानां मण्यादीनां च शोभैकधर्मान्वयः । प्रस्तुतैकनिष्ठः समानो धर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थमारोपितो दीप इव रथ्यायामिति दीपसाम्याद्दीपकम् । 'संज्ञायां च' (वा. २४५८) इति इवार्थे कन् प्रत्ययः । यद्यपि,—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

इत्यत्र प्रस्तुतानामप्रस्तुतानां युगपद्धर्मान्वयः प्रतिभाति । 'मदेन भाति

---

शावकः ॥ **भानक्रियेति** । क्रियारूपैकधर्मान्वय इत्यर्थः । अत्रापि क्रियाविशेषणीभूतयोर्मद-प्रतापयोर्बिम्बप्रतिबिम्बभावो बोध्यः ॥ **यथा वा मणिरिति** । शाणेन निकषपाषाणेनोल्लीढ उल्लिखितो मणिः । तथा हेतिभिरायुधैर्निहतः क्षतः समरे संग्रामे विजयशीलो योद्धा, मदेन क्षीणो नागो हस्ती, शरत्काले श्यानानि शुष्काणि पुलिनानि जलनिर्मुक्ततटानि यासां ताः सरितो नद्यः, कलामात्रावशिष्टश्चन्द्रः, सुरते मृदिता चुम्बनालिङ्गनाद्युपमर्दनम्लायिताङ्गी बाला नवयौवना वनिता स्त्री, एवमर्थिषु याचकेषु गलितः संक्रान्तो विभवः समृद्धिर्येषां ते नृपाश्च तनिम्ना तनोः कृशस्य भावस्तनिमा कार्श्यं तेन शोभन्त इत्यन्वयः । 'शाणस्तु निकषः कषः' इत्यमरः ॥ **शोभैकेति** । शोभारूपैकधर्मेत्यर्थः । पूर्वोदाहरणे आदिदीपकम्; इह त्वन्तदीपकमिति भेदः । प्रस्तुताप्रस्तुतसाधारणधर्मस्य दीपकपदवाच्यतायां बीजमाह—**प्रस्तुतैकेत्यादि** । प्रस्तुतैकनिष्ठः प्रस्तुतैकपरः । प्रस्तुतान्वयविवक्षयाभिहित इति यावत् । रथ्यायामिवेत्यनन्तरमुपकरोतीत्यनुषज्यते । इतीति चाध्याहार्यम् । इति दीपकसादृश्यात्समानो धर्मो दीपकमुच्यत इति शेषः । यत्र धर्मस्य पूर्वं प्रस्तुतेऽन्वयः पश्चादन्यत्र यथोक्तोदाहरणयोस्तत्रैवेतरत्र प्रसङ्गोपकारित्वमित्याशयेन शङ्कते—**यद्यपीति** । **सुवर्णेति** । सुवर्णमेव पुष्पं यस्या इति विग्रहः । त्रयो गुणत्रयान्यतमयुक्ताः । शूरश्चेत्यादि प्रत्येकं चकारो नैरपेक्ष्यद्योतकः । कृतविद्यः प्रख्यातविद्यः । एतच्च प्रासङ्गिकं पद्यम्, यदा यत्प्रसङ्गे पठ्यते तदा तस्य प्रस्तुतत्वम्; इतरयोस्त्वप्रस्तुतत्वमिति बोध्यम् ॥ **युगपदिति** । त्रयश्चिन्वन्तीति । त्रिष्वपि युगपदन्वय इत्यर्थः । चिन्वन्तीति बहुवचनान्तस्य प्रस्तुतमात्रेणैकवचनान्तेन पूर्वमन्वयायोगादिति

---

पाठा०—१ 'प्रवृत्तस्यैव'.

कलभ' इत्यत्राप्रस्तुतस्यैव प्रथमं धर्मान्वयः । तथापि प्रासङ्गिकत्वं न हीयते, वस्तुगत्या प्रस्तुतोद्देशेन प्रवृत्तस्यैव वर्णनस्याप्रस्तुतेऽन्वयात् । नहि दीपस्य रथ्या-प्रासादयोर्युगपदुपकारत्वेन जामात्रर्थं अर्पितस्य सूपस्यातिथिभ्यः प्रथमपरिवेषणेन च प्रासङ्गिकत्वं हीयते । तुल्ययोगितायां त्वेकं प्रस्तुतम्, अन्यदप्रस्तुतमिति विशेषाग्रहणात्सर्वोद्देशेनैव धर्मान्वय इति विशेषः । अयं चानयोरपरो विशेषः । उभयोरनयोरुपमालंकारस्य गम्यत्वाविशेषेऽप्यत्रा-'प्रस्तुतमुपमानं प्रस्तुतमुपमेयमिति व्यवस्थित उपमानोपमेयभावः; तत्र तु विशेषाग्रहणादैच्छिकः स इति ॥ ४८ ॥

---

## आवृत्तिदीपकालंकारः १६

**त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।**
**वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥ ४९ ॥**

---

भावः । समाधत्ते—**तथापीति** । प्रासङ्गिकत्वं प्रसङ्गोपकारित्वम् ॥ **न हीयत इति** । तथा च धर्मस्य पश्चादन्वयो न तत्र प्रयोजक इति भावः ॥ किं तर्हि प्रयोजकं तत्राह—**वस्तुगत्येति** । प्रस्तुतोद्देशेन प्रस्तुतोद्देश्यकान्वयबोधेच्छया प्रस्तुतस्यैव पदाभिहितस्यैव वर्णनस्य कर्मव्युत्पत्त्या तद्विषयधर्मस्य । तथा च चमत्काराय प्रस्तुताप्रस्तुतान्वितस्वार्थं बोधयत्वितीच्छयोच्चरितपदाभिहितधर्मस्यो-भयत्रान्वयेऽप्युद्देश्यताख्येच्छाविषयता प्रस्तुत एव न त्वप्रस्तुते, किंतु विशेषण-ताख्यविषयतैवेति । तथाविधोद्देश्यताविरह इव प्रासङ्गिकत्वे बीजमित्याशयः । एतदेवोपपादयति—**नहीति** । **प्रासङ्गिकत्वमिति** । दीप-सूपयो रथ्यातिथि-विषये प्रसङ्गोपकारित्वमित्यर्थः । तथा च त्वन्मते तस्य प्रासङ्गिकत्वं न स्यादिति भावः । इदमुपलक्षणम् । जामातृविषये प्रासङ्गिकत्वापत्तिरपि बोध्या । एतदेव तुल्ययोगितातो भेदकमित्याह—**तुल्ययोगितायां त्विति** । ननूद्देश्यत्वानु-द्देश्यत्वयोश्चमत्काराप्रयोजकत्वान्नालंकारभेदप्रयोजकत्वं युक्तमित्यस्वरसादाह—**अयं चेति** । अयं वक्ष्यमाणः । अनयोः दीपक-तुल्ययोगितयोः । अत्र दीपके । उपमानोपमेयभाव इत्यनन्तरं गम्य इति शेषः । तत्र तुल्ययोगितायां विशेषाग्रह-णात्प्रस्तुताप्रस्तुतत्वरूपव्यवस्थापकाभावादैच्छिकोऽव्यवस्थितः । स उपमानोपमेय-भावः ॥ नव्यास्तु—नैतावतापि तुल्ययोगिता; अतो दीपकस्य पृथग्भाव उचितः । धर्मस्य सकृद्वृत्तित्वमूलाया विच्छित्तेरविशेषात् । अन्यथा तुल्ययोगितायामपि धर्मिणां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च विशेषस्य च सत्त्वादलंकारद्वैता-पत्तेः । तस्मात्तुल्ययोगिताया एव त्रैविध्यमुचितमित्याहुः ॥ ४८ ॥

इत्यलंकारचन्द्रिकायां दीपकालंकारप्रकरणम् ॥ १५ ॥

**त्रिविधमिति** । दीपकस्यावृत्तावावृत्तिदीपकं भवेत्; तच्च त्रिविधमित्यर्थः ॥ **वर्षतीति** । शर्वरी रात्रिः वर्षं वत्सर इवाचरतीत्यर्थः । कदम्बानि कदम्बकुसु-मानि, उन्मीलन्ति विकसन्ति, कुटजोद्गमाः कुटजकलिकाः, स्फुटन्ति विकसन्ति,

उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ॥५०॥

दीपकस्यानेकोपकारार्थतया दीपस्थानीयस्य पदस्यार्थस्योभयोर्वाऽऽवृत्तौ त्रिविधमावृत्तिदीपकम् । क्रमेणार्धत्रयेणोदाहरणानि दर्शितानि । यथा वा,—

उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् ।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥
शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् ।
क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥
वदनेन निर्जितं तव निलीयते चन्द्रबिम्बमम्बुधरे ।
अरविन्दमपि च सुन्दरि ! निलीयते पाथसां पूरे ॥

एवं चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः ॥ ४९–५० ॥

---

तृप्ताश्चातका माद्यन्ति मत्ता भवन्ति, शिखावला मयूराश्च माद्यन्तीत्यन्वयः । त्रैविध्यमुपपादयन्नेव व्याचष्टे—**दीपकस्येति** । **क्रमेणेति** । आद्येऽर्थे वर्षतीति शब्दावृत्तिः । अलंकारसंपादकत्वाच्च न कथितपदत्वं दोषः । द्वितीये विकासरूपस्यार्थस्यावृत्तिः । उन्मीलन्ति स्फुटन्तीति शब्दभेदेन तस्यैव बोधनात् । तृतीये तु द्वयोरावृत्तिः स्फुटैवेति ॥ **उत्कण्ठयतीति** । मेघानां माला पङ्क्तिः । कलापिनां मयूराणां वर्गं समूहं उत्कण्ठयत्यूर्ध्वं कण्ठो यस्य तादृशं करोति । तथा मकरध्वजः कामो यूनां तरुणानां मानसमुत्कण्ठयत्युत्सुकं करोतीत्यर्थभेदेऽपि शब्दावृत्तिः ॥ **शमयतीति** । जलधरस्य मेघस्य धारा पङ्क्तिश्चातकतरुणानां चिरकालमुपनतां प्राप्तां तृषं पिपासां शमयति । वधूलोचनयोर्जलधारा अश्रुपङ्क्तिश्च कामिनां प्रवासेच्छां क्षपयतीत्येक एव नाशरूपोऽर्थः शब्दभेदेनोक्त इत्यर्थावृत्तिः ॥ **वदनेनेति** । पाथसां जलानाम् । अत्र 'निलीयते'शब्दस्य तदर्थस्य तिरोधानस्य चावृत्तिः ॥ ननु प्रस्तुतार्थे सकृदुपात्तस्य प्रसङ्गादप्रस्तुतोपकारित्वे दीपकमित्युक्तं, न चावृत्तौ तत्संभवतीति कथमावृत्तिदीपकमुक्तमित्याशङ्क्याह—**एवं चेति** । दीपस्थानीयशब्दार्थयोरावृत्तौ चेत्यर्थः ॥ **प्रस्तुताप्रस्तुतेति** । अम्बुदमालादीनां विरहोद्दीपकतया केवलप्रस्तुतत्वाच्चन्द्रबिम्बारविन्दयोश्च केवलाप्रस्तुतत्वादिति भावः ॥ **दीपकच्छायेति** । दीपकसादृश्येत्यर्थः । तच्च प्रस्तुताप्रस्तुतोपकारयोग्यत्वं 'वर्षती'त्यादौ श्लेषवशेनास्तीति भावः । 'मात्र'पदेन दीपकात्पृथगेवायमलंकारो न तु तत्प्रभेद इति सूचितम् । अत एव दण्डिना (काव्यादर्शे २।११६) 'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि । दीपकस्थानमेवेष्टमलंकारत्रयं यथा ॥' इत्युक्त्वा 'विकसन्ती'त्याद्युदाहृतम् । दीपकस्थानं स्थानापन्नं सदृशमिति यावत् ॥४९–५०॥

**इत्यलंकारचन्द्रिकायामावृत्तिदीपकालंकारप्रकरणम् ॥ १६ ॥**

## प्रतिवस्तूपमालंकारः १७

**वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ।**
**तापेन भ्राजते सूरः शूरश्चापेन राजते ॥ ५१ ॥**

यत्रोपमानोपमेयपरवाक्ययोरेकः समानो धर्मः पृथङ् निर्दिश्यते सा प्रतिवस्तूपमा । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । यथाऽत्रैव भ्राजते राजत इत्येक एव धर्म उपमानोपमेयवाक्ययोः पृथग्भिन्न पदाभ्यां निर्दिष्टः ॥

यथा वा,—

स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते ।
रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥

यथा वा,—

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं समीक्षते ॥

अत्र यद्यपि उपमेयवाक्ये अनिच्छा उपमानवाक्ये अवीक्षेति धर्मभेदः प्रतिभाति तथापि वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वादिच्छापूर्वकवीक्षा प्रतिषेधोऽयमनिच्छापर्यवसित एवेति धर्मैक्यमनुसंधेयम् । अर्थावृत्तिदीपकं

---

सकृद्धर्मोक्तिप्रसङ्गादसकृत्तद्धर्मोक्तिगम्यवाक्यार्थसादृश्यकं प्रतिवस्तूपमालंकारं लक्षयति—**वाक्ययोरिति** । द्विवचनमनेकाभिप्रायं समासानुरोधादिति बोध्यम् । एकसामान्ये एकस्मिन्समानधर्मे सति । सूरः सूर्यः । लक्षणं व्याचष्टे—**यत्रेति** । उपमानोपमेयेति भावप्रधानम् । उपमानोपमेयभावपरयोरित्यर्थः । पृथगिति भिन्नशब्देनेत्यर्थः । अयमेव च वस्तुप्रतिवस्तुभाव इत्युच्यते ॥ **स्थिरेति** । शैली सद्वृत्तम् । रत्नमेव दीपो रत्नदीपः । अत्र पूर्वार्धमुपमेयवाक्यम्, उत्तरार्धमुपमानवाक्यम् । उभयत्र च नाशाभावरूपः समानधर्मः शब्दभेदेनोपात्तः । सामान्यभावमात्रबोधकस्यापि बोधतेरत्र नाशरूपविशेषपरत्वात् । अयमेव च पूर्वोदाहरणाद्भेदः ॥ **तवेति** । ईश्वरं प्रति भक्तस्योक्तिः । अमृतप्रस्रवणशीले तव पादपङ्कजे निवेशित आत्माऽन्तःकरणं येन तादृशो भक्तोऽन्यदमृतातिरिक्तं फलं कथमिच्छति ? न कथमपीत्यर्थः । अमृतं चात्र ब्रह्मानन्दरूपम् । हि निश्चितम् (?) । मधुव्रतो भ्रमरो मकरन्देन रसेन निर्भरे व्याप्तेऽरविन्दे स्थिते सति इक्षुरसं न समीक्षत इत्युपमानवाक्यम् ॥ **अवर्जनीयस्येति** । अनिष्टेऽपि स्वसामग्रीवशाज्जायमानस्येत्यर्थः ॥ **इच्छापूर्वकेति** । तथा च समीक्षतेरिच्छापूर्वकवीक्षणे लक्षणेति भावः ॥ **अनिच्छापर्यवसित इति** । 'सविशेषणे

---

पाठा०—'खलवाचा'.

---

टिप्प०-1 'भिन्नशब्दोपात्तैकधर्मकं वाक्यार्थयोरार्थिकमौपम्यं प्रतिवस्तूपमा' इत्यन्ये । मम्मटस्तु–'प्रतिवस्तूपमा तु सा । सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः' इत्याह ।

प्रस्तुतानामप्रस्तुतानां वा; प्रतिवस्तूपमा तु प्रस्तुताप्रस्तुतानामिति विशेषः। अयं चापरो विशेषः। आवृत्तिदीपकं वैधर्म्येण न संभवति, प्रतिवस्तूपमा तु वैधर्म्येणापि दृश्यते। यथा,—

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम्।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्॥
यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
नहि कस्तूरिकामोदः शपथेन विभाव्यते॥ ५१॥

---

हि' इति न्यायादिति भावः। 'उन्मीलन्ति कदम्बानी'ति पूर्वोदाहृतायामर्थावृत्तावतिव्याप्तिमाशङ्क्याह—**अर्थावृत्तीत्यादि**। शब्दावृत्तौ तु धर्मस्यैकेनैव शब्देनावृत्त्या बोधनान्न भिन्नशब्दबोध्यत्वमिति नातिव्याप्तिः, अतोऽर्थावृत्तिपर्यन्तानुधावनम्। एवं च भिन्नशब्दबोध्यैकधर्मगम्यं प्रस्तुताप्रस्तुतवाक्यार्थसादृश्यं प्रतिवस्तूपमेति लक्षणं बोध्यम्। दृष्टान्तालंकारेऽव्याप्तिवारणाय—भिन्नशब्दबोध्येति। तत्र तु बिम्बप्रतिबिम्बभावापन्नधर्मगम्यं सादृश्यमिति नातिव्याप्तिः। 'दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि' इत्यादिवाक्यार्थोपमायामतिव्याप्तिवारणाय—गम्यमिति। अर्थावृत्तिवारणाय–प्रस्तुताप्रस्तुतेति। 'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम्। भ्रमद्भ्रमरसंकीर्णं स्मरामि सरसीरुहम्॥ इति स्मरणालंकारेऽतिव्याप्तिवारणाय—वाक्यार्थेति। 'अत्र हि दिवि भाती'ति वाक्यार्थोपमायां गगनाधिकरणशोभाश्रयभानुसदृशो भूम्यधिकरणकशोभाश्रयस्त्वमिति प्रतीतिवन्न स्मर्यमाणतादृशसरोरुहसदृशं तथाविधमाननमिति प्रतीतिर्येन वाक्यार्थगतोपमा गम्या स्यात्, किंतु स्मरणासंपृक्ता तादृशसरोरुहसदृशं तादृशमाननमिति पदार्थगतोपमैवेति तद्वारणमिति दिक्। प्रस्तुताप्रस्तुतत्वयोश्चमत्कृतिविशेषाप्रयोजकतया नाऽलंकारभेदप्रयोजकत्वमित्यस्वरसादाह—**अयं चेति**। वक्ष्यमाण इत्यर्थः॥ **विद्वानेवेति**। यद्यप्यन्ययोगव्यवच्छेदार्थेनैवकारेण 'अविद्वान्न जानाती'ति पूर्ववाक्यार्थस्तस्य च 'नहि वन्ध्ये'त्युत्तरवाक्यार्थः सधर्मैव तथापि रूपवत्त्येवाकाश इत्यादिप्रयोगवारणाय भावान्वयस्याप्यावश्यकतया 'विद्वान् जानाती'ति वाक्यार्थस्यापि प्रतीतेस्तदभिप्रायेण वैधर्म्योदाहरणत्वं बोध्यम्। ननु 'वैधर्म्येणोपमा' इति व्याहृतं, तस्याः साधर्म्यरूपत्वादिति चेत्–सत्यम्; वैधर्म्येणोपन्यस्तेन 'नहि वन्ध्ये'ति वाक्यार्थेनाक्षिप्तस्यापि तु प्रसवित्र्येव जानातीति वाक्यार्थस्योपमानत्वेन विवक्षणान्मुखतो वैधर्म्यप्रतीतावपि साधर्म्य एव पर्यवसानान्न दोषः। वैधर्म्येणेत्यस्य च वैधर्म्यद्वारेत्यर्थः॥ **यदि सन्तीति**। एवकारो भिन्नक्रमः। स्वयमेव विकसन्ति। प्रकाशन्त इत्यर्थः। अत्रापि गुणाः स्वयं प्रकाशन्त इति भावान्वयविधर्मा कस्तूरिकामोदः शपथेन न ज्ञायत इति वाक्यार्थस्तदाक्षिप्तेन किंतु स्वयमेव प्रकाशत इति वाक्यार्थेन चौपम्यं गम्यमिति पूर्ववद्वैधर्म्योदाहरणत्वसंगतिः। यत्त्वत्र कैश्चिदुक्तं 'विद्वानेवे'ति पद्यं भवतु नाम कथंचिद्वैधर्म्योदाहरणं, 'यदि सन्ती'ति तु न युक्तम्। वैधर्म्योदाहरणं हि प्रस्तुतधर्मिविशेषोपारू-

## दृष्टान्तालंकारः १८

**चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः ।**
**त्वमेव कीर्तिमान्राजन्! विधुरेव हि कान्तिमान् ॥५२॥**

यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्तः । 'त्वमेव कीर्तिमान्' इत्यत्र कीर्ति-कान्त्योर्बिम्बप्रतिबिम्बभावः ॥

यथा वा (रघु० ६।२२),—

कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

---

ढार्थदार्ढ्याय स्वाक्षिप्तस्वव्यतिरेकसमानजातीयस्य धर्म्यन्तरारूढस्याप्रकृतार्थस्य कथनम् । यथा—'वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥' इत्यादौ । अत्र हि 'सङ्गविशेषेण पूज्यते' इति प्रस्तुतार्थाक्षिप्तस्य सङ्गविशेषेण विना न पूज्यत इति स्वव्यतिरेकस्य सजातीयो 'नहि तुम्बीफलविकल' इत्याद्यप्रकृतार्थो निबद्ध इति वैधर्म्योदाहरणत्वम् । 'यदि सन्ती'त्यत्र तु स्वयं प्रकाशन्ते न परेणेत्यस्य प्रस्तुतस्यैव सजातीयोऽप्रकृतोऽर्थः शपथेन न विभाव्यते किंतु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्यवसानादिति । तत्रेदं वक्तव्यम्—'वंशभव' इत्यादिभवदुदाहृतपद्येऽपि कथं वैधर्म्योदाहरणत्वम्? 'नही'त्यादेस्तुम्बीफलविकलो महिमानं न प्रयाति, अपि तु तद्युक्त इति प्रकृतार्थानुरूपतयैव पर्यवसानादिति किं बहुना, सर्वत्रैव वैधर्म्योदाहरणे साधर्म्यपर्यवसानं विना नोपमानिर्वाह इति तदुच्छेदप्रसङ्गः । अथापातप्रतिपन्नेनाप्रकृतवाक्यार्थेन वैधर्म्यात्तदुदाहरणत्वं तर्हि प्रकृतेऽपि तदस्तीति तुल्यम् । यदपि प्रस्तुतेत्यादि वैधर्म्योदाहरणत्वनिर्वचनं, तदयुक्तम्; 'भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः' इति वैधर्म्यदृष्टान्ताव्यापनात् । नह्यत्र प्रस्तुतवाक्यार्थः स्वव्यतिरेकमाक्षिपति किंत्वप्रकृतवाक्यार्थ एवेति दिक् ॥ ५१ ॥

इत्यलंकारचन्द्रिकायां प्रतिवस्तूपमालंकारप्रकरणम् ॥ १७ ॥

दृष्टान्तालंकारं लक्षयति—**चेदिति** । वाक्ययोरित्यनुवर्तते । धर्मयोरित्यध्याहार्यम् । तदिति तदेत्यर्थकम् । अर्थतो व्याचष्टे—**यत्रेति** । यत्र काव्ये । तथा चोपमानोपमेयवाक्यार्थघटकधर्मयोर्बिम्बप्रतिबिम्बभावो दृष्टान्त इति लक्षणम् ॥ **काममिति** । अनेन प्रकृतराजविशेषेण । राजन्वतीं शोभनराजवतीम् । 'राजन्वान्सौराज्ये' (८।२।१४) इति निपातः । नक्षत्राण्यश्विन्यादीनि सप्तविंशतिः, तारास्तदितराः, गोबलीवर्दन्यायात् । ग्रहा भौमादयः । संकुला व्याप्ता । ज्योतिष्मतीति प्राशस्त्ये मतुप् । अत्र राजन्वती-ज्योतिष्मतीत्यनयोर्बिम्बप्रतिबिम्बभावः, पूर्वोदाहरणे कीर्तिकान्त्योर्बिम्बप्रतिबिम्बभावप्रयोजकं मनोहारित्वरूपं सादृश्य-

---

टिप्प०—1 दृष्टान्तलक्षणं तु 'वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभावः' इति सारबोधिन्यादौ स्पष्टीकृतम् ।

यथा वा,—

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

नन्वत्रोपमानोपमेयवाक्ययोर्ज्ञानमेक एव धर्मं इति प्रतिवस्तूपमा युक्ता। मैवम्। अचेतने मन्थाचले ज्ञानस्य बाधितत्वेन तत्र जानातीत्यनेन सागराधस्तलावधि संस्पर्शमात्रस्य विवक्षितत्वात्। अत्रोदाहरणे पदावृत्तिदीपकाद्विशेषः पूर्ववत्प्रस्तुताप्रस्तुतविषयत्वकृतो द्रष्टव्यः। वैधर्म्येणाप्ययं दृश्यते,—

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥५२॥

---

मार्थम्, इह तु राजज्योतिषोः प्राशस्त्यरूपं तच्छाब्दमिति भेदः॥ **देवीमिति**। देवीं वाचं सरस्वतीं बहव उपासते हि सेवन्त एव। हिशब्दस्यैवकारार्थत्वात्। तु परं सरस्वतीसंबन्धि सारमसौ प्रसिद्धो गुरुकुले क्लिष्टोऽध्ययनश्रमवान्मुरारिनामा कविर्नितरामतिशयेन जानीते। अत्र दृष्टान्तमाह—वानररूपैर्भटैर्योद्धृभिरब्धिर्लङ्घित एव, किं त्वस्याब्धेर्गम्भीरतां पातालपर्यन्तनिमग्ना पीवरा स्थूला तनुर्यस्यैवंविधो मन्थाचलो मन्दराद्रिरेव जानातीति॥ दृष्टान्तोदाहरणत्वासङ्गतिमाशङ्कते—**नन्विति**। वाक्ययोरिति सप्तमी। एकधर्म इत्यनन्तरं शब्दभेदेन निर्दिष्ट इति शेषः। सागरस्याधस्तनो योऽवधिरिति गम्भीरतापदार्थकथनं। संस्पर्शस्तु लक्षणया जानात्यर्थ इति बोध्यम्। तथा च धर्मभेदान्न प्रतिवस्तूपमा किंतु सारस्वतसारज्ञानसागराधस्तलावधिसंस्पर्शयोर्बिम्बप्रतिबिम्बभावाद्दृष्टान्तालंकार एवेत्याशयः। 'वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी' इतिवत्पदावृत्तिदीपकं स्यादित्याशङ्क्य समाधत्ते—**अत्रेति**। पूर्ववत् अर्थावृत्तिप्रतिवस्तूपमयोरिव प्रस्तुताप्रस्तुतेति दृष्टान्तः प्रस्तुताप्रस्तुतविषयः, पदावृत्तिस्तु तदन्यतरमात्रविषयेत्यर्थः। यद्यप्यत्रात्मनेपदपरस्मैपदभेदेन पदभेदान्न पदावृत्तिशङ्कोचिता, तथापि पाठपरिवर्तनेन पदाभेदेऽपि न पदावृत्तेरयं विषय इति बोधयितुमेतदुक्तम्। अयं दृष्टान्तः॥ **कृतं चेति**। नृपं प्रति मन्त्रिण उक्तिः। हे राजन्! त्वया मनो गर्वस्याभिमुखं कृतं न तु गर्वितं कृतं च। किमन्यदपेक्षितमिति शेषः। एवं शस्त्रप्रयोगादिकं विना नोऽस्माकं द्विषः शत्रवो निहताश्च, न तु निहनिष्यन्ते। अंशुमान् सूर्यो यावदुदयाद्रेर्मौलितां शिरोलंकारतां नायाति तावदेव तमांसि तिष्ठन्ति; तस्मिंस्तु तथाभूते न तिष्ठन्तीति दृष्टान्तः। अत्र मनोगर्वाभिमुखीकरणवैरिहननयोरंशुमदुदयाचलमस्तकानागमनतमःस्थित्योश्च यथाक्रमं वैधर्म्येण बिम्बप्रतिबिम्बभावः॥ ५२॥

इत्यलंकारचन्द्रिकायां दृष्टान्तालंकारप्रकरणम्॥ १८॥

## निदर्शनालंकारः १९

**वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।**
**यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥ ५३ ॥**

अत्र दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थस्य पूर्णेन्दोरकलङ्कत्वस्योपमानवाक्यार्थस्य यत्तद्भ्यामैक्यारोपः ॥

यथा वा,—

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम्।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥

अत्राबुधजनसेवाया अरण्यरोदनादीनां च यत्तद्भ्यामैक्यारोपः ॥ ५३ ॥

**पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्।**
**त्वन्नेत्रयुगुलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ ५४ ॥**

अत्र नेत्रयुगुले नीलाम्बुजगतलीलापदार्थारोपो निदर्शना।

---

निदर्शनां लक्षयति—**वाक्यार्थयोरिति**। सदृशवाक्यार्थसंबन्धीय ऐक्यारोपः, उपमेयवाक्यार्थे उपमानवाक्यार्थाभेदारोप इति यावत् ॥ **यद्दातुरिति**। दातुः सौम्यतेति यदिति सामान्ये नपुंसकम्। सेयमिति विधेयाभिप्रायकं स्त्रीलिङ्गम् ॥ **यत्तद्भ्यामिति**। यद्यपि मुखं चन्द्र इतिवद्दातुः सौम्यता पूर्णेन्दोरकलङ्कतेत्येतावताप्यैक्यारोपः संभवति तथापि यत्तद्भ्यां शीघ्रं स्फुटतया तदवगमात्तदुपन्यासः ॥ **अरण्येति** ॥ अबुधो मूर्खो जनः सेवितः। यदिति गुणीभूतसेवनक्रियापरामर्शः। उत्तरवाक्यगतेन यच्छब्देन तच्छब्दाक्षेपात्। तदरण्यरुदितं कृतमित्याद्यन्वयः। उद्वर्तनं यवगोधूमादिचूर्णेन मलापकर्षणम्। स्थले निर्जलप्रदेशे। अब्जं जलजम्। ऊषरे अङ्कुरायोग्यक्षारभूभागे। शुनः पुच्छं श्वपुच्छमवनामितमृजुतासंपादनाय नम्रीकृतम्। बधिरस्य कर्णे जप एव जापः। प्रलाप इत्यर्थः। अन्धस्य मुखे तत्संमुखं दर्पणो धृतः। इत्येवं निरर्थकत्वेन सदृशानामनेकेषां वाक्यार्थानामबुधजनसेवनरूपप्रकृतवाक्यार्थे ऐक्यारोपः, पूर्वत्र त्वेकस्यैवैक्यारोप इति विशेषः ॥ ५३ ॥ निदर्शनान्तरमाह—**पदार्थेति**। पदार्थवृत्तिं पदार्थसंबन्धिनीम्। एके आलंकारिकाः। अन्यां पूर्वोक्तविलक्षणाम् ॥ **त्वन्नेत्रेति**। लीलां शोभाम्। नीलाम्बुजन्मनोर्नीलोत्पलयोः ॥

---

**टिप्प०**—1 'अर्थान्तरप्रवृत्तेन किंचित्तत्सदृशं फलम्। सदसद्वा निदर्श्येत यदि तत्स्यान्निदर्शनम् ॥' इति **काव्यादर्शे**। काव्यप्रकाशे तु 'अभवन्वस्तुसंबन्ध उपमापरिकल्पकः। निदर्शना' इत्युक्तम्।

---

**पाठा०**—१ 'आरोपे निदर्शना'. २ 'या दातुः'. ३ 'गर्भामप्यन्ये'.

यथा वा,—

वियोगे गौडनारीणां यो गण्डतलपाण्डिमा ।
अदृश्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥

पूर्वस्मिन्नुदाहरणे उपमेये उपमानधर्मारोपः, इह तूपमाने उपमेयधर्मारोप इति भेदः । उभयत्राप्यन्यधर्मस्यान्यत्रासंभवेन तत्सदृशधर्माक्षेपादौपम्ये पर्यवसानं तुल्यम् । इयं पदार्थवृत्तिनिदर्शना ललितोपमेति जयदेवेन व्याहृता ॥ यद्यपि 'वियोगे गौडनारीणाम्' इति श्लोकः प्राचीनैर्वाक्यार्थवृत्तिनिदर्शनाया-मुदाहृतः, तथापि विशिष्टयोर्धर्मयोरैक्यारोपो वाक्यार्थवृत्तिनिदर्शना । उपमानोपमेययोरन्यतरस्मिन्नन्यतरधर्मारोपः पदार्थवृत्तिनिदर्शनेति व्यवस्थामाश्रित्यास्माभिरिहोदाहृतः । एवं च,—

'त्वयि सति शिव ! दातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् ।
चरमचरणपातैर्दुर्ग्रहं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम् ॥',
'दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवम् ॥'

---

**वियोग इति** । गौडदेशगतानां नारीणां वियोगे स्वकान्तवियोगकाले यो गण्डतले पाण्डिमा पाण्डुवर्णो भवति स खर्जूरीणां लतानां मञ्जरीगर्भस्थेषु रेणुष्वदृश्यत दृष्ट इत्यन्वयः । उपमाने यथोक्तरेणुरूपे उपमेये उपमानधर्मारोप एव पदार्थनिदर्शनायाः प्राचीनैरुदाहरणात्कथमियं पदार्थनिदर्शनोच्यत इति शङ्कायामाह—**उभयत्रेति** । उपमेये उपमानधर्मारोपे उपमाने उपमेयधर्मारोपे चेत्यर्थः । तथा चौपम्यपर्यवसायित्वस्यैव पदार्थनिदर्शनाजीवातुत्वेनारोपविषयस्योपमेयत्वेन निवेशे प्रयोजनाभावादिहापि सा युक्तैवेति भावः । नन्वेवं सति वाक्यार्थनिदर्शनालक्षणस्यात्रातिव्याप्तिरित्याशंक्याह—**यद्यपीति** । वियोगकालीनगौडनारीगण्डतलपाण्डिम्नः खर्जूरीमञ्जरीगर्भरेणुदृष्टपाण्डिम्नश्च यत्तच्छ्याभ्यामैक्यारोपसत्त्वादिति भावः । अर्थविशेषविवक्षयातिव्याप्तिं परिहरन्नेव स्वाभिमतनिदर्शनाद्वयविषयविभागं दर्शयति—**तथापीति** । विशिष्टयोर्बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः । एवं च वाक्यार्थशब्देनैतादृशार्थविवक्षणाद्वियोग इत्याद्युदाहरणे नातिव्याप्तिरिति भावः ॥ **उपमानेत्यादि** । एतच्च स्वरूपकथनम् । नत्वेवंरूपेण लक्षणे निवेशः । ताद्रूप्यरूपकातिव्याप्तिवारणायोपमाकल्पकत्वस्यारोपविशेषणस्यावश्यकत्वेनोपमाकल्पकस्तत्तद्धर्मारोप इत्येतावत एव लक्षणस्य निर्दुष्टत्वात् । तदुक्तम्—'अभवन्वस्तुसंबन्ध उपमापरिकल्पकः' इति । ताद्रूप्यरूपके तु ताद्रूप्यावच्छिन्नाभेद एव विवक्षितो न पुनरुपमेति तद्वारणम् । ननु 'त्वयि सती'त्याद्युदाहरणे क्वापि निदर्शना न स्यादन्यधर्मस्यान्यत्रारोपात्, एकवाक्यत्वेन वाक्यार्थभेदाभावाच्च, पदार्थवाक्यार्थनिदर्शनयोरसंभवादित्याशङ्क्याह—**एवं चेति** । उक्तव्यवस्थाश्रयणे चेत्यर्थः ॥ **विशिष्टयोरिति** ।

इत्यादिषु वाक्यभेदाभावेऽपि वाक्यार्थवृत्तिरेव निदर्शना । विशिष्टयोरैक्यारोपसद्भावात् । 'वाक्यार्थयोः सदृशयोः' इति लक्षणवाक्ये वाक्यार्थशब्देन बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टस्वरूपयोः प्रस्तुताप्रस्तुतधर्मयोर्विवक्षितत्वादिति ।

एवं च,—

'राजसेवा मनुष्याणामसिधारावलेहनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥'

इत्यत्र प्रस्तुताप्रस्तुतवृत्तान्तयोरेकैकपदोपात्तत्वेऽपि वाक्यार्थवृत्तिनिदर्शनाया न क्षतिः। तयोर्बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टव्यवहाररूपत्वात् । अत एव निदर्शनाया रूपकाद्भेदः । रूपके ह्यविशिष्टयोरेव मुखचन्द्रादिकयोरैक्यारोपः ।

'अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे ।
विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः ॥'

---

बिम्बप्रतिबिम्बभावापन्नवस्तुविशिष्टयोरित्यर्थः । तत्र तावत्पूर्वपद्ये भोः शिव ! अस्मदभ्यर्थितानां दातरि त्वयि सति इतरं क्षुद्रं प्रभुमनुसरन्तोऽर्थिनां मुद्रां चिह्नं दर्शयन्तो वयं, कामधेनौ स्थितायां दोग्धुकामाश्चरमयोः पाश्चात्त्ययोश्चरणयोः पातैर्दुर्ग्रहं दुःखेन ग्राह्यं करभमुष्ट्रशिशुमनुसराम इत्यर्थके सकलकामदमहेश्वरकालीनक्षुद्रधनिकानुसरणकर्तुः कामधेनुस्थितिकालीनतथाविधकरभानुसरणकर्तुश्चैक्यारोपः । तत्रोपमानकोटिविशेषणयोः कामधेनु-करभयोरुपमेयकोटिविशेषणयोश्च महेश्वरक्षुद्रधनिकयोर्यथाक्रमं बिम्बप्रतिबिम्बभावो बोध्यः । एवमनुसरणयोरपि । एवं 'दोर्भ्या'मित्यत्रापि अब्धि-गुणसमूहयोर्बिम्बप्रतिबिम्बभावो बोध्यः ॥ नन्वियं व्यवस्था मूलविरुद्धेत्याशङ्क्याह—**वाक्यार्थयोरिति** । ननु 'वाक्यार्थ'शब्दस्यावान्तरवाक्यार्थसाधारणानेकपदार्थपरत्वेनैवोक्तोदाहरणसंग्रहसंभवादेवंविधगुरुतरार्थपरत्वं न युक्तमित्यत आह—**एवं चेति** । एवंविधार्थविवक्षणे चेत्यर्थः । अवलेहनं जिह्वया चट्टनम् । पञ्चाननः सिंहस्तस्य परिष्वङ्ग आलिङ्गनम् । व्याली भुजङ्गी । अशक्यत्वं बलवदनिष्टजनकत्वं च साधारणो धर्मः । प्रस्तुतवृत्तान्तो राजसेवा निदर्शनायास्तल्लक्षणस्य न क्षतिर्नाव्याप्तिः । तयोः प्रस्तुताप्रस्तुतवृत्तान्तयोः असिधारादिभिः समं राज्ञो बिम्बप्रतिबिम्बभावात्तद्विशिष्टयोश्चैक्यारोपादिति भावः । एवं तर्हि सदृशयोरैक्यारोप इत्येव लक्षणमस्त्वित्याशङ्क्याह—**अत एवेति** । एतादृशविशेषणविवक्षणादेवेत्यर्थः । भेदो व्यावृत्तिः । तथा च तदभावे रूपकेऽतिप्रसङ्गः स्यादिति भावः । कथमनेन तद्वारणं तत्राह—**रूपके हीति** । अविशिष्टयोः बिम्बप्रतिबिम्बभावापन्नवस्त्वविशिष्टयोः । बिम्बप्रतिबिम्बभावापन्नेत्यस्य व्यावृत्तिं दर्शयति—**अङ्घ्रिदण्ड इत्यादि** । बलेर्दैत्यविशेषस्य निग्रहे बन्धने कर्तव्ये

---

पाठा०—१ 'लक्षणावयवे'. २ 'अस्तु नः'. ३ 'घट्टनम्'.

इति विशिष्टत्वरूपकोदाहरणेऽपि न विम्वप्रतिविम्बभावापन्नवस्तुविशिष्टरूपता। विधिविष्टरकमलदण्ड¹विशिष्टत्वरूपसाधारणधर्मवत्तासंपादनार्थमेव तद्विशेषणोपादानात्। 'यद्दातुः सौम्यते'त्यादिनिदर्शनोदाहरणेषु दातृपूर्णेन्द्वादीनामानन्दकरत्वादिनेवात्र विशेषणयोर्विम्वप्रतिविम्बभावाभावात्। यत्र तु विषयविषयिविशेषणानां परस्परसादृश्येन विम्बप्रतिविम्बभावोऽस्ति।

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥'

इति सावयवरूपकोदाहरणे। तत्रापि विषयविषयिणोस्तद्विशेषणानां च प्रत्येकमेवैक्यारोपः, न तु ज्योत्स्नादिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्ट-

---

ऊर्ध्वमुत्क्षिप्तो हरेरङ्घ्रिदण्डो वो युष्माकं मुदेऽस्त्विति संवन्धः। कीदृशः? विधेर्ब्रह्मणो विष्टर आसनं तद्रूपस्य पद्मस्य नालदण्ड इत्यर्थः॥ **विशिष्टरूपकेति।** ऊर्ध्वोत्क्षिप्तत्वविशिष्टाङ्घ्रिदण्डविधिविष्टरपद्मसंवन्धित्वविशिष्टनालदण्डसंबन्धिरूपकेत्यर्थः॥ **विशेषणेति।** ऊर्ध्वोत्क्षिप्तत्वरूपोपमेयविशेषणविधिविष्टरपद्मसंबन्धित्वरूपोपमानविशेषणयोरित्यर्थः। एवकारसूचितविम्वप्रतिविम्वभावव्यतिरेकं स्फुटयति—**यद्दातुरिति। अभावादिति।** सादृश्याभावादिति भावः। रूपकविशेषेऽतिव्याप्तिमाशङ्क्य परिहरति—**यत्र त्वित्यादिना।** यत्र त्वित्यस्य इति सावयवरूपकोदाहरणे इत्यग्रेतनेनान्वयः। विषयविषयिविशेषणानामारोपविषयारोप्यमाणसंबन्धिनां विशेषणानाम्॥ **ज्योत्स्नेति।** इयं रात्रिरेव कापालिकी योगिनी द्वीपाद्द्वीपान्तरं भ्रमतीत्यन्वयः। एतत्प्रधानरूपकम्। एतदङ्गभूतान्यपराणि विशेषणैः प्रतिपाद्यन्ते। यथा ज्योत्स्नारूपेण भस्मना छुरणमङ्गलेपस्तेन धवला तारकारूपाण्यस्थीनि बिभ्रती अन्तर्धानस्य व्यसने कौतुके रसिका चन्द्ररूपे मुद्राकपाले न्यस्तं लाञ्छनस्य च्छलेन सिद्धाञ्जनस्य परिमलं चूर्णं दधती धारयन्ती। दीक्षाकालगृहीतोपकरणेषु मुद्रोपपदनाम्ना पाखण्डानां व्यवहार इति चण्डीदासः। 'मुद्रा-परिमल'शब्दौ प्रशंसार्थावित्यन्ये। मुद्रा चिह्नं तद्रूपे कपाल इति वार्थः। विषयविषयिणो रात्रिकापालिक्योः। तद्विशेषणानां तत्संबन्धिनां ज्योत्स्नाभस्मादीनां यथाश्रुते रात्रिकापालिकीति समासस्योत्तरपदार्थप्रधानतया ज्योत्स्नादीनां रात्रिविशेषणत्वाभावादसंगतेः। **प्रत्येकमेवेति।** शुद्धस्वरूपेणैवेत्यर्थः॥ **न त्विति।** उक्तयुक्त्या विशेषणत्वाभावादिति भावः। वस्तुतो भस्मादेः कापालिकीं प्रत्यपि न विशेषणत्वमपि तु तत्कोटिनिविष्टत्वमेवेत्यपि बोध्यम्। 'वाक्यार्थ'शब्दस्य विम्वप्रतिविम्बभावापन्नवस्तुविशिष्टार्थपरत्वमङ्गीकृत्य 'राजसेवा—' इत्युदाहरणे वाक्यार्थवृत्तिनिदर्शनात्वमुक्तमुपसंहरति—

---

पाठा०—१ 'श्लिष्टत्वरूप'.

कापालिकीरूपविषयिणश्च विशिष्टरूपेणैक्यारोपोऽस्तीति । तस्मात् 'राजसेवा मनुष्याणाम्' इत्यादावपि वाक्यार्थवृत्तिनिदर्शनैव युक्ता । मतान्तरे त्विह पदार्थवृत्त्यैव निदर्शनया भाव्यमिति ॥ ५४ ॥

**अपरां बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः ।**
**नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः ॥ ५५ ॥**
**उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।**
**विभावयन्समृद्धीनां फलं सुहृदनुग्रहः ॥ ५६ ॥**

कस्यचित्किंचित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रति असतः सतो वाऽर्थस्य बोधनं यन्निबध्यते तदपरां निदर्शनामाहुः। असदर्थबोधने उत्तरार्धमुदाहरणम् । तत्र नश्येदिति बोधयदिति वक्तव्ये बोधयदित्यस्य गम्यमानत्वादप्रयोगः । ततश्च राज्ञा चन्द्रेण सह विरुध्य स्वयं नाशक्रियाविशिष्टं तमः स्वकीयनाशक्रियया दृष्टान्तभूतया अन्योऽप्येवं राजविरुद्धश्चेन्नश्येदित्यनिष्ट-

---

**तस्मादिति** । उक्तलक्षणस्य व्यवस्थितत्वादित्यर्थः ॥ **मतान्तरे त्विति** । सदृशयोर्वाक्यार्थयोरैक्यारोप इति यथाश्रुतलक्षणाङ्गीकर्तृमते इत्यर्थः । इह राजसेवेत्युदाहरणे ॥ **पदार्थवृत्त्यैवेति** । उपमाकल्पक एकपदार्थे अपरपदार्थतद्धर्मान्यतरारोप इति तल्लक्षणस्य तदभिमतत्वादिति भावः ॥ ५४ ॥ निदर्शनान्तरमाह—**अपरामिति** । पूर्वविलक्षणामित्यर्थः । निदर्शनामित्यनुषज्यते । क्रिययाऽसत्सदर्थयोर्बोधनमपरां निदर्शनां प्राहुरिति संबन्धः । सदसदर्थयोरिति वक्तव्येऽपि छन्दोनुरोधादित्थमभिधानात् । 'समुद्राभ्राद्धः' (४।४।११८) इत्यादिसौत्रनिर्देशेन पूर्वनिपातविधेरनित्यत्वज्ञापनात् । लक्षणं व्याचष्टे—**कस्यचिदिति** । अत्रासतः सतो वेति विभागकथनं नतु लक्षणान्तर्गतम् । उदासीनार्थबोधने चमत्कारित्वाभावेनैवानतिप्रसङ्गात् । स्वक्रियया सहकारिभूतया क्रियाविशिष्टस्य वस्तुनः संबन्धि अर्थस्य बोधनं बोधानुकूलो व्यापारो यन्निबध्यते वर्ण्यते सा निदर्शनेति लक्षणम् । अथ 'निवातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती । न केवलं यूनि मनोभवेऽपि व्यनक्ति कंचित्तपसः प्रभावम् ॥' इत्यादावतिव्याप्तिः । अवलोकनक्रियाविशिष्टया कामिन्या तपःप्रभावबोधनस्य वर्णनादिति चेन्न । क्रिययेत्यनेन दृष्टान्तविधया बोधनस्य विवक्षितत्वात् । उक्तोदाहरणे च लिङ्गविधया बोधकत्वेन तदभावात् । इत्थं च दृष्टान्ततया क्रियाविशिष्टस्यार्थबोधकत्वं वर्ण्यमानं निदर्शनेति पर्यवसितम् । नश्येदित्यत्र बोधनस्यावर्णनात्कथमुदाहरणत्वमत आह—**तत्रेति** । उदाहरण इत्यर्थः । लक्ष्ये लक्षणं संगमयति—**ततश्चेति** । बोधनस्य गम्यमानत्वाच्चेत्यर्थः ॥ **दृष्टान्तभूतयेति** । दृष्टान्ते स्वस्मिन् भूतया । विद्यमानयेत्यर्थः । दृष्टान्तो भूतः संजातो ययेति वा । एवं

---

पाठा०—१ 'विभावनं समृद्धीनां'.

पर्यवसायिनमर्थं बोधयदेव नष्टमित्यर्थनिबन्धनादसदर्थनिदर्शना। तथा उत्तरश्लोके सविता स्वोदयसमय एव पद्मेषु लक्ष्मीमादधानः स्वया पद्मलक्ष्म्याधानक्रियया परान्प्रति समृद्धीनां फलं सुहृदनुग्रह एवेति श्रेयस्करमर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना॥

यथा वा,—

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्।
शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः॥

अत्र गिरिशेखरगतो वृष्टिबिन्दुगणो मन्दमारुतमात्रेणापि कम्पितः पतन् लघोरुन्नतपदप्राप्तिः पतनहेतुरित्यसदर्थं बोधयन्निबद्ध इत्यसदर्थनिदर्शना॥

चूडामणिपदे धत्ते यो देवं रविमागतम्।
सतां कार्याऽऽतिथेयीति बोधयन् गृहमेधिनः॥

अत्र समागतं रविं शिरसा संभावयन्नुदयाचलः स्वनिष्ठया रविधारणक्रियया समागतानां सतामेवं गृहमेधिभिरातिथ्यं कार्यमिति सदर्थं बोधयन्निबद्ध इति सदर्थनिदर्शना। अत्र केचित् वाक्यार्थवृत्ति-पदार्थवृत्तिनिदर्शनाद्वयमसंभवद्वस्तुसंबन्धनिबन्धनमिति, तृतीया तु संभवद्वस्तुसंबन्धनिबन्धनेति च व्यवहरन्ति। तथा हि—आद्यनिदर्शनायां वाक्यार्थयोरैक्यमसंभवत्तयोः साम्ये पर्यवस्यति। द्वितीयनिदर्शनायामपि अन्यधर्मोऽन्यत्रासंभवन् धर्मिणोः साम्ये पर्यवस्यति। तृतीयनिदर्शनायां तु स्वक्रियया परान्प्रति सदसदर्थबोधनं संभवदेव समतां गर्भीकरोति। 'बोधयन् गृहमेधिनं' इत्यादौ हि 'कारीषोऽग्निरध्यापयति' इतिवत्समर्थाचरणे णिचः प्रयोगः। ततश्च यथा कारीषोऽग्निः शीतापनयनेन बटूनध्ययनसमर्थान्करोति एवं वर्ण्यमानः पर्वतः

---

तमोवच्चन्द्रस्यापि राजत्वं 'सोमो वै ब्राह्मणानां राजा' इत्यादिश्रुतिप्रसिद्धम्। अनिष्टपर्यवसायिनमर्थं नाशरूपानिष्टसाधनं राजविरुद्धत्वरूपम्॥ **उन्नतमिति**। यो लघुरल्पबुद्धिरल्पपरिमाणश्च स उन्नतं पदमुत्कर्षमुच्चस्थानं चावाप्य हेलयैव पतेदिति ब्रुवन्कथयन् शैलशेखरगतो गिरिमस्तकवर्ती पृषद्गणो जलबिन्दुसमूहश्चारुणा मन्देनापि मारुतेन धुतः कम्पितोऽधः पतत्युत्कर्षाद्धीयते अधोदेशे च पततीत्यर्थः। **'ध्रुवम्'** इति पाठे बोधनस्य पूर्ववद्गम्यमानत्वादप्रयोगः। **'दृषत्कण'** इति पाठे पाषाणकण इत्यर्थः॥ **चूडेति**। उदयाचल आगतं देवं रविं चूडामणेः पदे स्थाने मस्तके धत्ते धारयति। किं कुर्वन्? गृहमेधिनो गृहस्थान् सतामातिथेयी कार्येति बोधयन्। आतिथेयी आतिथ्यम्। अत्र उक्तनिदर्शनात्रयविषये। केचिदित्यस्येति व्यवहरन्तीत्यनेनान्वयः॥ **धर्मिणोरिति**। धर्मयोः साम्यमात्रेण चमत्कारानिष्पत्तेस्तत्कृतबिम्बप्रतिबिम्बभावेन धर्मिणोः साम्यावगतिरिति भावः॥ **गर्भीकरोतीति**। स्वविशेषणत्वेन स्वीकरोतीत्यर्थः। दृष्टान्ततया बोधनस्यैव तत्र विवक्षितत्वात्। एतदेवोपपादयति—**बोधयन्नित्यादिना**। करीषं शुष्कगोमयं तस्यायं कारीषः। समर्थाचरणे समर्थकरणे।

स्वयमुपमानभावेन गृहमेधिन उक्तबोधनसमर्थान्कर्तुं क्षमते । यथायं पर्वतः क्षमागतं रविं शिरसा संभावयत्येवं गृहमेधी समागतं सन्तमुचितपूजया संभावयेदिति । अतः संभवति बोधनसंबन्ध इति ॥ ५५-५६ ॥

---

## व्यतिरेकालंकारः २०

**व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।**
**शैला इवोन्नताः सन्तः किंतु प्रकृतिकोमलाः ॥ ५७ ॥**

अयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः ।

यथा वा,—

पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर ! ।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥

तन्न्यूनत्वपर्यवसायी यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥

---

सामर्थ्योत्पादन इति यावत् । भावप्राधान्यात् । उपमानभावेन दृष्टान्तत्वेन । एवं प्रदर्शिते निदर्शनात्रये निदर्शनापदप्रवृत्तिनिमित्तस्यैकस्याभावान्नानार्थ एव निदर्शनाशब्द इति बोध्यम् ॥ ५५-५६ ॥

इत्यलंकारचन्द्रिकायां निदर्शनालंकारप्रकरणम् ॥ १९ ॥

व्यतिरेकं लक्षयति—**व्यतिरेक इति** । विशेषो वैलक्षण्यम् । उपमेयस्याधिक्यमुत्कर्षः ॥ **पल्लवत इति** । पञ्चम्यर्थे तसिल् । कल्पतरोः पल्लवतः पल्लवादेष वक्ष्यमाणस्ते तव करस्य विशेष इति संबन्धः । एकः पल्लवः परो हस्तः कर्णं राधेयं तिरस्कुरुते । दानातिशयेनेति भावः । अत्रोपमेयस्य करस्योत्कर्षः । पूर्वोदाहरणे उन्नतत्वेनौपम्यं शाब्दम्, इह तु रक्तवत्कोमलादिप्रयुक्तं तद्गम्यमिति भेदः ॥ **तन्न्यूनत्वेति** । उपमेयन्यूनत्वेत्यर्थः ॥ **रक्तस्त्वमिति** । अशोकवृक्षं प्रति विरहिणः कस्यचिदुक्तिः । हे अशोक! आवयोः सर्वं तुल्यं समानम्, अहं केवलं धात्रा विधात्रा सशोकः शोकसहितः कृतः, त्वं तु शोकरहित इति 'अ-शोक'पदश्लेषादवगम्यते । किं तत्सर्वं समानं तत्राह—**रक्त इत्यादि** । त्वं नूतनैः पल्लवै रक्तो रक्तवर्णः; अहमपि प्रियायाः श्लाघनीयैर्गुणैः सौन्दर्यादिभी रक्तोऽनुरक्तः । अर्थात्प्रियायाम् । हे सखे ! त्वां प्रति शिलीमुखा भ्रमरा आयान्ति; मां प्रत्यपि स्मरेण धनुषा मुक्ताः प्रेरिताः शिलीमुखा बाणा आयान्ति । एवं कान्तायाः पादतलस्याघातो यथा तव मुदे संतोषाय तद्वत्तथा ममापि संतोषायेत्यर्थः । कामिनीपादघातेनाशोकस्य पुष्पोद्गम इति कविप्रसिद्धिः । अत्रोपमेयस्य

अनुभयपर्यवसायी यथा—

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

---

## सहोक्त्यलंकारः २१

**सहोक्तिः[1] सहभावश्चेद्भासते[1] जनरञ्जनः ।**
**दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ॥ ५८ ॥**

---

सशोकत्वेनापकर्षः अनुभयपर्यवसायी उपमेयोत्कर्षापकर्षान्यतरपर्यवसानरहितः ॥ **दृढतरेति** । कृपणस्य कृपाणस्य खङ्गस्य चाकारतो दीर्घाद्वर्णादाकृतेश्च केवलं भेदो वैलक्षण्यम् । प्रकारान्तरेण तु साम्यमेवेत्यर्थः । कथं तत्राह—**दृढतरेत्यादि** । दृढतरं निबद्धो मुष्टिर्येनेति । कृपणपक्षे–धनव्ययवैमुख्येन मुष्टिमोचनाभावात् । खङ्गपक्षे तु–दृढतरं निबद्धः संबद्धो मुष्टिर्मुष्टिग्राह्यभागो यस्येत्यर्थः । कोशो भाण्डारगृहं तत्र निषण्ण उपविष्टः कृपणः । कोशे पिधानके निषण्णः स्थित इति खङ्गपक्षे । सहजमलिनः स्वभावमलिनः । मलिनवेषत्वात्कृपणः । खङ्गस्तु कृष्णवर्णत्वादिति । एवं च किंचिद्धर्मप्रयुक्तसाम्यवत्तया प्रतीयमानयोः किंचिद्धर्मप्रयुक्तवैलक्षण्यं व्यतिरेकशरीरम् । वैलक्षण्यं तु क्वचिदुपमेयस्योत्कर्षे, क्वचिच्च तदपकर्षे पर्यवसन्नं, क्वचित्तु तदन्यतरपर्यवसानविरहेऽपि स्ववैचित्र्यविश्रान्तमात्रमिति बोध्यम् । एतेन चरमभेदद्वयतदुदाहरणदूषणं कस्यचिदापातरमणीयमिव भासमानं प्रयुक्तं वेदितव्यम् । अत्यन्तासारतया तु नानुवादमर्हतीत्युपरम्यते ॥ ५७ ॥

इत्यलंकारचन्द्रिकायां व्यतिरेकालंकारप्रकरणम् ॥ २० ॥

**सहोक्तिरिति** । लक्ष्यनिर्देशः । सहभाव इत्यादिलक्षणम् । सहभावः साहित्यम् । जनरञ्जनः सहृदयजनाह्लादकः । एवं च चमत्कृतिजनकं साहित्यं सहोक्तिरिति लक्षणम् ॥ **दिगन्तमिति** । तस्य राज्ञः कीर्तिः प्रत्यर्थिभिः शत्रुभिः सह दिगन्तमगमदित्यन्वयः । अत्र च तृतीयाया निरूपितत्वार्थकतया प्रत्यर्थिनिरूपितसाहित्यवती कीर्तिर्गमनाश्रय इति बोधे एकधर्मान्वयित्वरूपसाहित्यबलात्प्रत्यर्थिनामपि गमनान्वयप्रतीतिः । तदुक्तम् (काव्यप्रकाशे १० । ११२)—'सा सहोक्तिः सहार्थस्य

---

टिप्प०—1 'गुणप्रधानभावावच्छिन्नसहार्थसंबंधोक्तिः सहोक्तिः' इति **रसगङ्गाधरकृतः** । 'सहभावस्योक्तिः सहोक्तिः' इति लक्षणं चोक्तमलंकारचूडामणौ **हेमचन्द्रेण** । **दण्डी** तु—'सहोक्तिः सहभावेन कथनं गुणकर्मणाम् । अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता' इत्याह । 'कर्त्रादीनां समावेशः सहान्यैर्यः क्रियादिषु । विविक्तश्चाविविक्तश्च सहोक्तिः' इति **सरस्वतीकंठाभरणम्** ।

---

पाठा०—१ 'चेदुच्यते'.

यथा वा,—

छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह ।
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैः समं
निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥

'जनरञ्जन' इत्युक्तेः 'अनेन सार्धं विहराम्बुराशेः' ( रघु० ६।५७ ) इत्यादौ न सहोक्तिरलंकारः ॥ ५७ ॥

---

## विनोक्त्यलंकारः २२

**विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते ।**
**विद्या हृद्यापि साऽवद्या विना विनयसंपदम् ॥ ५९ ॥**

यथा वा,—

यश्च रामं न पश्येत्तु यं च रामो न पश्यति ।
निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते ॥

---

बलादेकं द्विवाचकम्' इति । **छायेति** । ग्रीष्मर्तौ मध्याह्नवर्णनमिदम् । छाया पान्थैरध्वगैः समं सार्धं विटपिनां तरूणां तलं मूलप्रदेशं संश्रयते । कुत इत्याकाङ्क्षायामुत्प्रेक्षते—**श्रान्तेवेति** । श्रमश्चात्रातपातिशयकृतो बोध्यः । एवमग्रेऽपि । जडता शीतलता ग्लानेव सरोजलस्य मूलमधोदेशं मीनैर्मत्स्यैः सह याति गच्छति । ग्लानिर्बलापचयः । तथा, अहिमा उष्णा अंशवः करा यस्यैवंभूतस्य रवेर्दीधितिस्तप्तेव संतप्तेव सती लोकैः सममपः जलानि आचामति पिबति । 'दीधितिः स्त्रियाम्' इत्यमरः । निद्रा क्लान्तेव सती कान्ताजनैः सह गर्भगृहमभ्यन्तरगृहं प्रविशति । तत्रैव तदुद्भवात् । क्लान्तिस्तेजोहानिः । सौकुमार्यातिशयेन तत्सौलभ्यात् कान्तोपादानम् ॥ **इत्यादाविति** । इन्दुमतीस्वयंवरे रघुवंशे 'अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु । द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥' इति पद्यम् । अत्र सहोक्तिरचमत्कारित्वान्नालंकाररूपेत्यर्थः ॥ ५८ ॥

इत्यलंकारचन्द्रिकायां सहोक्त्यलंकारप्रकरणम् ॥ २१ ॥

**विनोक्तिरिति** । किंचिद्विना प्रस्तुतं वर्ण्यं हीनं दुष्टमुच्यते चेत्तदा विनोक्तिनामालंकार इत्यर्थः ॥ **विद्येति** । विनयसंपत्तिं विना या विद्या सा हृद्या मनोहरापि दुष्टेत्यन्वयः । अत्र प्रस्तुताया विद्याया विनयं विना दुष्टत्वमुक्तम् ॥ **यश्चेति** ।

---

**टिप्प०**—1 विनोक्तिलक्षणमुक्तं काव्यप्रकाशे—'विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः' इति । 'नित्यसंबंधानामसंबन्धवचनं विनोक्तिः' इति भाष्यकारः । इयं विनोक्तिस्तु 'विना'शब्दप्रयोगाभावेऽपि संभवति ।

---

**पाठा०**—१ 'विनोक्तिः स्याद्विना'.

अत्र च रामदर्शनेन विना हीनत्वं 'विना'शब्दमन्तरेणैव[1] दर्शितम् ॥ ५९ ॥

**तच्चेत्किंचिद्विना रम्यं विनोक्तिः सापि कथ्यते ।**
**विना खलैर्विभात्येषा राजेन्द्र ! भवतः सभा ॥ ६० ॥**

यथा वा,—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
नैंशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा ।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम् ॥

अत्र तमःप्रभृतीन्विना निशादीनां रम्यत्वं 'विना'शब्दमन्तरेण दर्शितम् ॥ ६० ॥

---

यः पुरुषः स्वात्मा स्वान्तःकरणं विगर्हते निन्दति । **रामदर्शनं विनेति** । रामकर्तृकं रामकर्तृकं च दर्शनं विनेत्यर्थः ॥ **अन्तरेणापीति** । विनापीत्यर्थः । तथा च विनोक्तिरित्यर्थग्रहणं, न तु शब्दग्रहणमिति भावः ॥ ५९ ॥ प्रकारान्तरमाह— **तच्चेदिति** । तत्प्रस्तुतं किंचिद्विना रम्यं चेत्सापि विनोक्तिः कथ्यत इत्यन्वयः । इत्थं च किंचिद्व्यतिरेकेण प्रस्तुतस्य रम्यत्वारम्यत्वान्यतरवर्णनं विनोक्तिरिति प्रकारद्वयसाधारणं सामान्यलक्षणं बोध्यम् । यत्तु द्वयो विनार्थसंबन्ध एव विनोक्तिः. द्वयत्वं च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवतीत्यर्वाचीनैरुक्तम्,—तदयुक्तम्; कारणं विना कार्योत्पत्तिकथनरूपे विभावनालंकारेऽतिव्याप्तेर्वारणाय विनार्थसंबन्धप्रयुक्तप्रस्तुतगतरमणीयत्वादेरपि लक्षणे निवेशस्यावश्यकत्वादिति ॥ **आविर्भूत इति** । मानवतीविषये नायकस्य परामर्शोऽयम् । इयं वरतनुरन्तः अन्तःकरणे मोहेन मानावेशेन मुक्तकल्पा ईषन्न्यूनमुक्ता लक्ष्यते । केव? पूर्वं रोधसस्तटस्य पतनेन कलुषा अनन्तरं कालुष्यापगमात्प्रसादं नैर्मल्यं गृह्णत्याश्रयन्ती गङ्गेव । तथा शशिनि चन्द्रे आविर्भूते उदिते सति तमसा मुच्यमाना रात्रिरिव । एवं छिन्नो नष्टो भूयिष्ठो धूमो यस्या एवंभूता निशि भवस्य हुतभुजो वह्नेरर्चिः शिखेवेति ॥ **दर्शितमिति** । अर्थतो बोधितमित्यर्थः ॥ ६० ॥

इत्यलंकारचन्द्रिकायां विनोक्त्यलंकारप्रकरणम् ॥ २२ ॥

---

पाठा०—१ अत्र 'अन्तरेणापि' इति टीकाकृत्संमतः पाठ इति प्रतीयते ।

## समासोक्त्यलंकारः २३

**[1]समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्।**
**अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः॥ ६१॥**

यत्र प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाम्यबलादप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तिस्तत्र समासोक्तिरलंकारः। समासेन संक्षेपेण प्रस्तुताप्रस्तुतवृत्तान्तयोर्वचनात्। उदाहरणम्—अयमैन्द्रीति॥ अत्र हि चन्द्रस्य प्राचीप्रारम्भलक्षणमुखसंबन्धलक्षणे उदये वर्ण्यमाने 'मुख'शब्दस्य प्रारम्भवदनसाधारण्यात् 'रक्त'शब्दस्यारुणकामुकसाधारण्यात् 'चुम्बती'त्यस्य प्रस्तुतार्थसंबन्धमात्रपरस्य शक्यार्थान्तरसाधारण्याच्च 'चन्द्रमः'शब्दगतपुंलिङ्गेन 'ऐन्द्री'शब्दगतस्त्रीलिङ्गेन तत्प्रतिपाद्येन्द्रसंबन्धित्वेन चोपस्कृतादप्रस्तुतपरवनितासक्तपुरुषवृत्तान्तः प्रतीयते।

यथा वा,—

व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि
प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदिवक्त्राम्बुजम्।
शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया
यस्मात्कन्दुक! सादरं सुभगया संसेव्यसे तत्कृती॥

---

समासोक्तिं लक्षयति—**समासोक्तिरिति**। प्रस्तुते वर्ण्यमाने अप्रस्तुतस्याप्रस्तुतवृत्तान्तस्य परिस्फूर्तिश्चेत्तदा समासोक्तिरित्यन्वयः॥ **अयमिति**। इन्द्रस्येयमैन्द्री प्राची। मुखमादिभागो वदनं च। रक्तो रक्तवर्णोऽनुरक्तश्च। चुम्बनं संबन्धो वक्त्रसंयोगविशेषश्च। यथाश्रुतलक्षणस्य वक्ष्यमाणे 'असावुदयमारूढः कान्तिमान् रक्तमण्डलः। राजा हरति सर्वस्य हृदयं मृदुलैः करैः॥' इत्यादिप्रकृताप्रकृतश्लेषेऽतिव्याप्तेराह—**विशेषणसाम्यबलादिति**। विशेषणमात्रसाम्यबलादित्यर्थः। एवं च विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तान्तत्वं लक्षणं बोध्यम्। उदाहृतश्लेषे चाप्रकृतनृपवृत्तान्तस्य विशेष्यवाचिना श्लिष्टेन राजपदेनाप्यवगमान्नातिव्याप्तिः। संज्ञाप्रवृत्तिनिमित्तमवयवार्थं दर्शयति—**समासेनेति**। वचनात् प्रतिपादनात्। लक्ष्ये लक्षणं संगमयति—**अत्रेति**। प्रारम्भ आदिभागः। साधारण्याच्छ्लिष्टत्वात्। यद्यपि चुम्बतीत्यत्र न श्लेषस्तथाप्यर्थद्वयबोधकत्वमात्रेण तस्य साधारण्योक्तिः। उपस्कृतादिति साधारण्यादित्यस्य विशेषणम्। तत्र 'चन्द्रमः'-शब्दगतेन पुंलिङ्गेन नायकत्वाभिव्यक्त्या उपस्कारः। 'ऐन्द्रीति स्वरूपपरं तद्गतेन स्त्रीलिङ्गेन तदर्थस्य नायिकत्वाभिव्यक्त्या 'ऐन्द्री'शब्दप्रतिपाद्येनेन्द्रसंबन्धित्वेन च परकीयत्वाभिव्यक्त्येति बोध्यम्। वृत्तान्तो व्यवहारो मुखचुम्बनरूपः॥

---

**टिप्प०—1** समासेनार्थद्वयनिरूपणादुक्तिः समासोक्तिः। अयं समासोक्तिरलंकारः प्रदीप-रसगंगाधरकृद्भिः—नायं भिन्नोऽलंकारः, किंत्वप्रस्तुतप्रशंसैव; प्रस्तुतवाच्येऽप्रस्तुतव्यवहारसमारोपः समासोक्तिः, अप्रस्तुतावगतौ चाप्रस्तुतप्रशंसेति च निर्णीतम्। दण्डिना तु 'वस्तु किंचिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः। उक्तिः संक्षेपरूपत्वात्सा समासोक्तिरिष्यते,' इति तल्लक्षणमुक्तम्।

अत्र कन्दुकवृत्तान्ते वर्ण्यमाने 'व्यावल्गत्कुचभार'मित्यादिक्रियाविशेषण-साम्याद्विपरीतरतासक्तनायिकावृत्तान्तः प्रतीयते। पूर्वत्र विशेषणानि श्लिष्टानि, इह साधारणानीति भेदः। सारूप्यादपि समासोक्तिर्दृश्यते।

यथा वा,—( उत्तरराम. २।२७ )

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धनसंतानादिसमृद्ध्यसमृद्धि-विपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते।

---

**व्यावल्गदिति**। नायिकानुरक्तस्य कस्यचित्क्रीडालम्बनं कन्दुकं प्रत्युक्तिरियम्। हे कन्दुक! सुभगया सुन्दर्या एतया नायिकया रसात्प्रीतिविशेषात्सादरमादर-सहितं यथा स्यात्तथा यस्मात् संसेव्यसे तत्तस्मात् कृती धन्योऽसीत्यन्वयः। कथ-मित्याकाङ्क्षायां संसेवनक्रियां विशिनष्टि—**व्यावल्गदित्यादिना**। व्याव-ल्गन्विशेषत आसमन्ताच्चलन् कुचभारो यत्र, तथा आकुलाः क्रीडावेशेनेतस्ततः पर्यस्ताः कचाः केशा यत्र, एवं व्यालोला दोलायिता हारावलिर्यत्र, तथा प्रेङ्खद्भ्यां चञ्चलाभ्यां कुण्डलाभ्यां शोभायुक्तं गण्डयुगलं यत्र, एवं प्रस्वेदयुक्तं वक्त्राम्बुजं यत्र, शश्वन्निरन्तरं दत्तः करेण प्रहारो यत्र, तथा अधिकः श्वासो यत्र तथेति। वृत्तान्तः विपरीतरतरूपः। अत्रापि 'कन्दुक'शब्दगतपुंलिङ्गेन नाय-कत्वाभिव्यक्तिर्बोध्या॥ **श्लिष्टानीति**। श्लेषमूलकाभेदाध्यवसायविषया-णीत्यर्थः॥ **साधारणानीति**। श्लेषं विनैव प्रकृताप्रकृतवृत्तान्तयोरनुगता-नीत्यर्थः। तथा च लक्षणे साम्यशब्देन श्लेषकृतं स्वारसिकं च साम्यं विवक्षित-मिति भावः। सारूप्यात्सादृश्यात्॥ **पुरेति**। उत्तररामचरिते सीतात्यागानन्तरं कदाचिद्वनं प्रति गतस्य भगवतो रामचन्द्रस्येयमुक्तिः। पुरा वनवासकाले सरितां नदीनां स्रोतः प्रवाहो यत्र प्रदेशे आसीत्तत्राधुना पुलिनमस्तीति शेषः। तथा क्षितिरुहां तरूणां घनविरलभावो विपर्यासं वैपरीत्यं यातः प्राप्तः। सान्द्राणां विरलता विरलानां शाखापल्लवादिवृद्ध्या सान्द्रता जातेत्यर्थः। तथा च बहोर्भूयसः कालादनन्तरं दृष्टमिदं वनमपरमन्यदिव मन्ये। परंतु शैलानां पर्व-तानां निवेशो विन्यासविशेषस्तदेवेदं वनमिति बुद्धिं प्रत्यभिज्ञारूपां द्रढयति। दृढीकरोतीत्यर्थः॥ **तत्सारूप्यादिति**। वनसादृश्यादित्यर्थः। ग्रामादौ किं वनसादृश्यमित्याकाङ्क्षायां तद्गर्भं विशेषणमाह—**कुटुम्बिष्वित्यादि**। कुटु-म्बिषु कुटुम्बिगतो यो धनसमृद्ध्योर्विपर्यासस्तं प्राप्तस्येत्यर्थः। तत्समाश्रयस्य तादृशकुटुम्बिसमाश्रयस्य। तथा च समृद्ध्यसमृद्धिविपर्यासवदाश्रयत्वं सादृश्य-मिति भावः। किमस्य सादृश्यस्योत्थापकमिति चेत् घनविरलेति, विपर्यासमिति

---

पाठा०—१ 'निवासः'.

अत्र च प्रस्तुताप्रस्तुतसाधारणविशेषणबलात्सारूप्यबलाद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते विशेष्ये तत्समारोपार्थं सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात् । ततश्च समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः । नतु रूपक इव प्रस्तुतेऽप्रस्तुतरूपसमारोपोऽस्ति । 'मुखं चन्द्र' इत्यत्र मुखे चन्द्रत्वारोपहेतुचन्द्रपदसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमा' इत्यादिसमासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात् ।

'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररासे ॥'

इत्येकदेशविवर्तिरूपकोदाहरण इव प्रस्तुतेऽप्रस्तुतरूपसमारोपगमकस्याप्य-

---

च । ताभ्यामुक्तसादृश्यगर्भीकरणात् । एतेनैषां सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समासोक्तिरिति मूलग्रन्थानवबोधस्तद्विरोधश्चेति दूषणमलग्नकं वेदितव्यम् ॥ अथात्राप्रस्तुतवृत्तान्तस्य विशेषणसाम्यगम्यत्वाभावादुक्तलक्षणस्याव्याप्तिरिति चेन्न । विशेषणसाम्यगम्यसादृश्यगम्यत्वेऽपि विशेषणसाम्यगम्यत्वानपायात् । प्राधान्यात्तु परं सारूप्यस्य गमकत्वोपदर्शनं सारूप्यादिति ग्रन्थेन । एवमग्रेऽपि विशेषणसाम्यात्सादृश्याद्वेति विकल्पोक्तिरपि प्राधान्याभिप्रायैवेति निरवद्यम् ॥ एवमलंकारं निरूप्य तद्बोधप्रकारमुपदर्शयितुं भूमिकामारचयति—**अत्र चेति** । अत्र एषूदाहरणेषु ॥ **अप्रस्तुतवृत्तान्तस्येति** । अप्रकृतजारादिसंबन्धिनश्चुम्बनादिव्यवहारस्येत्यर्थः । विशेष्ये चन्द्रादौ । सर्वथा आरोपानारोपान्यतरविधया । प्रस्तुतानन्वयिनः प्रकृतान्वयशून्यस्य । यद्वा,—सर्वथैवेत्यस्य कवीत्यादिनान्वयः ॥ **कविसंरम्भेति** । स्वप्रतीत्युद्देश्यकशब्दसंदर्भरूपकविव्यापारेत्यर्थः । अप्रस्तुतवृत्तान्तस्य चुम्बनादेरिवाप्रस्तुतस्य जारादेरपि चन्द्रादौ समारोप इति मतं निराकरोति—**नत्विति** । **अप्रस्तुतरूपेति** । अप्रस्तुतस्वरूपेत्यर्थः । कुतस्तत्राह—**मुखमित्यादि** । तादात्म्येन चन्द्रारोपे तादात्म्यस्यापि संसर्गविधया आरोपविषयत्वात्तस्य च चन्द्रत्वानतिरेकाच्चन्द्रत्वारोपेत्युक्तिः । न तु प्रकारतया चन्द्रत्वारोप उक्त इति भ्रमितव्यम् । चन्द्र इति शब्देन चन्द्रविशेषणत्वेनोपस्थितस्य चन्द्रत्वस्य मुखे विशेषणतयारोपासंभवात् । एवं जारत्वेत्यत्रापि बोध्यम् ॥ **तद्वाचकेति** । जारवाचकेत्यर्थः । ननु जारादिपदसमभिव्याहाराभावाच्छ्रौतारोपासंभवेऽप्यार्थो जाराद्यारोपोऽस्तु । नहि तत्रापि तादृशसमभिव्याहारो हेतुः । रूपकध्वनेरुच्छेदापत्तेरित्याशङ्क्याह—**निरीक्ष्येति** । पयोदो मेघो विद्युत्स्वरूपैर्नयनैर्निशायामभिसारिकाया मुखं वीक्ष्य धारानिपातैः सह वान्तः किं त्वयं चन्द्र इति मत्वा आर्ततरं यथा स्यात्तथा ररासे आक्रन्दनं कृतवानित्यर्थः । उदाहरण इवेति व्यतिरेकदृष्टान्तः । अत्र यथा गमकमस्ति तादृशस्य समासोक्त्युदाहरणे अभावादित्यर्थः । तथा चार्थारोपोऽप्यनाशङ्क्य इति भावः । ननु 'विद्युन्नयनैः' इत्यत्र किमप्रस्तुतारोपगमकम् ? यदभावात्

भावात्। तत्र हि 'विद्युन्नयनै'रित्यत्र निरीक्षणानुगुण्यादुत्तरपदार्थप्रधानरूप-मयूरव्यंसकादिसमासव्यवस्थितादुत्तरपदार्थभूतनयनान्वयानुरोधात् पयोदेऽनुक्तमपि द्रष्टृपुरुषत्वरूपणं गम्यमुपगम्यते। न चेह तथानिरीक्षणवत् 'त्वय्यागते किमिति वेपत एष सिन्धु'रिति श्लोके सेतुकृत्त्वादिवन्नाप्रस्तुतासाधारणवृत्तान्त उपात्तोऽस्ति। नापि श्लिष्टसाधारणादिविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरप्रस्तुतवृत्तान्तस्य विद्युन्नयनवत्प्राधान्यमस्ति। येन तदनुरोधात्त्वं सेतुमन्थकृदित्यत्रेव प्रस्तुतेऽनुक्तमप्यप्रस्तुतरूपसमारोपमभ्युपगच्छेम। तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः। यद्यपि प्रस्तुताप्रस्तुतवृत्तान्तयोरिह श्लिष्टसाधारणविशेषणसमर्पितयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयादस्ति समप्राधान्यम्, तथाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपोऽङ्गीकार्यः। तथा हि—यथा प्रस्तुतविशेष्ये नास्त्यप्रस्तुतवृत्तान्तस्यान्वयायोग्यता तथैव वाऽप्रस्तुतेऽपि जारादौ नास्ति प्रस्तुतवृत्तान्तस्यान्वययोग्यता। एवं च सम-

---

समासोक्तौ तदभाव इत्यतो गमकं दर्शयितुमाह—**तत्रेति**। आनुगुण्यादानुकूल्यात्। उपमितसमासस्य पूर्वपदार्थप्रधानतया नयनसदृशविद्युत्करणकत्वस्य निरीक्षणे संभवात्प्रतिकूलत्वमिति भावः अनुक्तमप्यश्रौतमपि। रूपणमारोपः॥ **न चेहेति**। इह समासोक्त्युदाहरणे। तथानिरीक्षणवन्नयनकरणकनिरीक्षणवत्। सेतुकृत्त्वादीत्यादिना मन्थनकारित्वपरिग्रहः। नन्विहापि परनायिकामुखचुम्बनरूपस्याप्रस्तुतवृत्तान्तस्याप्रस्तुतासाधारणधर्मत्वादप्रस्तुतारोपगमकत्वं स्यादित्याशङ्क्य परिहरति—**नापीति**। साधारणादीत्यादिना सादृश्यगर्भविशेषणसंग्रहः। वृत्तान्तयोरिति निर्धारणे षष्ठी। वृत्तान्तयोर्मध्य इत्यर्थः॥ **विद्युन्नयनवदिति**। प्रस्तुताप्रस्तुतयोर्विद्युन्नयनयोर्मध्ये यथा नयनस्योत्तरपदार्थप्रधानसमासात्प्राधान्यं तथा नास्तीत्यर्थः। **'सेतुमन्थकृत्'** इति पाठः। 'सेतुबन्धकृत्' इति त्वपपाठः कथंचिदर्थतोऽनुवादत्वेन व्याख्येयः। उपसंहरति—**तस्मादिति**। 'मात्र'पदेनाप्रस्तुतारोपव्यवच्छेदः। विद्युन्नयनवत्समासकृतश्रौतप्राधान्याभावेऽपि विशेषणसामर्थ्यावगतस्याप्रस्तुतवृत्तान्तस्यार्थतः प्राधान्यमस्तीति शङ्कते—**यद्यपीति**। नन्वप्रस्तुतवृत्तान्ताभिन्नत्वेनावगतस्य प्रस्तुतवृत्तान्तस्य प्रस्तुतविशेष्येणान्वयात्कथमप्रस्तुतवृत्तान्तस्य प्राधान्यमिति शङ्कानिरासायाह—**विशेष्येणैवेति**। नतु तद्विशेषणीभूतप्रस्तुतवृत्तान्तेनेत्येवकारार्थः। समाधत्ते—**तथापीति**। अयमाशयः—नात्र श्लिष्टादिविशेषणैः समर्पितः परनायिकामुखचुम्बनादिरूपोऽप्रस्तुतवृत्तान्तः प्रागेव कयापि व्युत्पत्त्याऽप्रस्तुतगतत्वेन भासते, यद्बलादप्रस्तुतजाराद्यारोपावगतिः स्यात्, अपि तु ताटस्थ्येनावगते तस्मिन्प्रस्तुतासंबद्धस्य कविसंरम्भगोचरत्वायोगात्प्रस्तुतसमारोपितत्वेन पर्यवसानमिति। नन्वेवं तर्हि प्रस्तुतवृत्तान्तस्याप्यप्रस्तुतवृत्तान्ताश्रये धर्मिण्यन्वयोऽस्तु, असंबद्धाभिधानप्रसङ्गपरिहारस्य तुल्यत्वादित्याशङ्क्याह—**तथा हीत्यादि**। एवं च योग्यतारूपविनिगमकविरहे

प्रधानयोः प्रस्तुताप्रस्तुतवृत्तान्तयोरन्यतरस्यारोपेऽवश्यमभ्युपगन्तव्ये श्रुत एव प्रस्तुतेऽप्रस्तुतवृत्तान्तस्यारोपश्चारुताहेतुरिति युक्तम्। नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।

'विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥'

इत्यादीनि प्राचीनानां समासोक्तिलक्षणानि न संगच्छेरन् । प्रस्तुते श्लिष्टसाधारणादिरूपविशेषणसमर्पितानुरागपूर्वकवदनचुम्बनाद्यप्रस्तुतवृत्तान्तसमारोपमात्रस्य चारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतकामुकाद्यप्रस्तुतधर्मिव्यञ्जनानपेक्षणादिति चेत्,—उच्यते; स्वरूपतोऽप्रस्तुतवृत्तान्तस्यारोपो न चारुताहेतुः । किंत्वप्रस्तुतकामुकादिसंबन्धित्वेनावगम्यमानस्य तस्यारोपः । तथाभूतस्यैव रसानुगुणत्वात् । न च तावदवगमने विषेषणपदानां सामर्थ्यमस्ति । अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन वदनचुम्बनादिना तत्संबन्धिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसंधानं तत्र भवति । यथा स्वरूपतो दृष्टेन राजाश्वादिना तत्संबन्धिनि राजादौ स्मारिते पुनरश्वादौ तदीयत्वानुसंधानं तद्वदिति विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यञ्जनस्यास्त्यपेक्षा । अत एव श्लिष्टविशेषणायामिव साधारणविशेषणायामप्यप्रस्तुतव्यवहारसमारोप इत्येव प्राचीनानां प्रवादः। कन्दुके व्यावल्गत्कुचभारत्वादिविशिष्टवनितासेव्यत्वस्य कामुकसंबन्धित्वेनैव समारोपणीयत्वात् । स्वरूपतः

---

च मास्तु तर्हि कस्याप्यन्वयस्तत्राह—**अवश्यमिति** । अन्यथाऽसंबद्धाभिधानप्रसङ्गापत्तेरिति भावः । किं तर्हि विनिगमकं तत्राह—**श्रुत एवेति** । तथा च श्रुतप्रस्तुतार्थोपस्कारतया चमत्कारहेतुत्वमेव विनिगमकमिति भावः । अप्रस्तुतस्य अप्रस्तुतवृत्तान्तस्य ॥ **नन्वेवमिति** । एवमप्रस्तुतसमारोपानङ्गीकारे॥ **विशेषणानामित्यादि** । विद्यानाथोक्तं लक्षणम्। प्रस्तुतवर्तिनां विशेषणानां साम्येनेत्यन्वयः । प्रस्तुते समारोपार्थम् । अप्रस्तुतधर्मिव्यञ्जनानपेक्षायामपि समारोप्यमाणवृत्तान्तविशेषणत्वार्थे तदपेक्षणान्न लक्षणासंगतिरित्याह—**स्वरूपत इति** । स्वरूपतोऽप्रस्तुतसंबन्धित्वेनाज्ञायमानस्य । नन्वपेक्षासत्त्वेऽपि विशेषणसाम्यस्य तद्व्यञ्जनासामर्थ्याल्लक्षणासंगतितादवस्थ्यमित्याशङ्क्य साक्षादसामर्थ्येऽपि वृत्तान्ताभिव्यक्तिद्वारा तत्संभवान्न दोष इत्याह—**न चेत्यादि** । तदीयत्वानुसंधानं कामुकसंबन्धित्वानुसंधानम् । तत्र मुखचुम्बनादौ । **'अनुसंधानं तद्वत्'** इति पाठः । **'अनुसंधानवत्'** इति पाठे यथेत्यस्यासंगतेः । अत एवाऽप्रस्तुतव्यञ्जनस्यापेक्षणादेव । नन्वप्रस्तुतधर्मिव्यञ्जनानपेक्षणे ईदृशः प्रवादः कुतो न युक्तस्तत्राह—**कन्दुक इति** । विशिष्टेत्यस्य सेव्यत्वेनान्वयः । संबन्धित्वेनैवेत्येवकारोक्तमेवार्थं सोपपत्तिकमाह—**स्वरूपत इति** । अप्रस्तुतकामुकसंबन्धित्वानालिङ्गितरूपेणेत्यर्थः । तथा चारोपासंभवात्तादृशप्रवादानुपपत्तिरिति भावः । श्लिष्टविशेषणायाम् 'अयमैन्द्री—' इत्यादौ मुखचुम्बनादेः स्वरूपतोऽप्यारोपस्यैव सत्त्वात्साधारणविशेषणायामुपष्टम्भ-

कन्दुकेऽपि तस्य सत्त्वेनासमारोपणीयत्वात् । किंच सारूप्यनिबन्धनत्वेनोदाहृतायां समासोक्तावप्रस्तुतवृत्तान्तस्याशब्दार्थस्याप्रस्तुतवृत्तान्तरूपेणैवावगम्यतया तेन रूपेणैव तत्र समारोपसिद्धेरन्यत्रापि तथैव युक्तमिति युक्तमेव प्राचीनानां लक्षणमिति विभावनीयम् ॥ ६१ ॥

---

## परिकरालंकारः २४

**अलंकारः परिकरः साभिप्राये विशेषणे ।**
**सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ६२ ॥**

अत्र 'सुधांशुकलितोत्तंसः' इति विशेषणं तापहरणसामर्थ्याभिप्रायगर्भम् ।

---

कत्वेन प्रवादोपन्यासः । ननु तत्रापि तादृशवनितासेव्यत्वस्य तादृशवनिताकृतविपरीतरतपात्रत्वरूपस्याप्रस्तुतवृत्तान्तरूपस्य स्वरूपतोऽप्यारोपस्यैव संभवान्न तादृशप्रवादानुपपत्तिरत आह—**किंचेति** । **युक्तमिति** । 'तत्सामान्यादितरेषु तथात्व'मिति न्यायादिति भावः ॥ **लक्षणमिति** । जातावेकवचनम् । तदेवमुक्तरीत्या 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यत्र शक्ति–व्यञ्जनाभ्यां प्राचीप्रारम्भसंबन्धाश्रयश्चंद्रो जारसंबन्धिसानुरागपरनायिकामुखचुम्बनाश्रय इति बोधः । अप्रस्तुतवृत्तान्ताभिन्नत्वेनाध्यवसितस्य प्रस्तुतवृत्तान्तस्य तादात्म्येनाप्रस्तुतारोपविषये प्रस्तुतधर्मिण्यन्वय इति मते तु सानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगाश्रयो जाराभिन्नश्चन्द्र इति बोधः । एवमुदाहरणान्तरेऽप्यनेनैव प्रकारेण बोधप्रकारा ऊहनीयाः ॥ ६१ ॥

इत्यलंकारचन्द्रिकायां समासोक्त्यलंकारप्रकरणम् ॥ २३ ॥

गुणीभूतव्यङ्ग्यस्य प्रभेदभूतसमासोक्त्यलंकारप्रसङ्गात्तत्प्रभेदं परिकरालंकारं लक्षयति—**अलंकार इति** । अलंकारत्वोत्कीर्तनं च दोषाभावेनैव गतार्थमिति शङ्कानिरासार्थम् । तत्प्रपञ्चनं चाग्रे करिष्यते । साभिप्राये प्रकृतार्थोपपादकार्थविषयकाभिप्रायपूर्वकं तथाभूतार्थव्यञ्जके इति यावत् । इत्थं च प्रकृतार्थोपपादकार्थव्यञ्जकविशेषणत्वं लक्षणं बोध्यम् । ध्वनावतिव्याप्तिवारणाय—प्रकृतार्थोपपादकेति । हेत्वलंकारवारणाय बोधकत्वं विहाय व्यञ्जकत्वनिवेशः । वक्ष्यमाणपरिकराङ्कुरालंकारवारणाय—विशेषणेति । तत्र तु विशेष्यं तथेति नातिप्रसङ्गः ॥ **सुधांश्विति** । सुधांशुना कलितः कृत उत्तंसः शेखरो येन स इति

---

**टिप्प०**—1 केचित्तु–'परिकरोति प्रकृतार्थमुपकरोतीति परिकरः, साभिप्रायशब्दोऽस्मिन्नस्तीति परिकरः । भूषणार्थत्वान्न सुडागमः' इत्याहुः । अन्येऽपि 'साभिप्रायानेकविशेषणद्वारा यत्र विशेष्यस्यातिशयप्रतीतिः स परिकरः' इति तल्लक्षणमाहुः ।

---

**पाठा०**—१ 'साभिप्रायविशेषणे'.

यथा वा ( कुमार० ३।१० ),—

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥

अत्र 'पिनाकपाणेः' इति हरविशेषणं 'कुसुमायुध' इत्यर्थलभ्याहमर्थविशेषणं च सारासारायुधत्वाभिप्रायगर्भम् ।

यथा वा,—

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥

अत्र शरीरविशेषणानि तस्य हेयत्वेनासंरक्षणीयत्वाभिप्रायगर्भाणि ।

यथा वा,—

व्यास्थं नैकतया स्थितं श्रुतिगणं, जन्मी न वल्मीकतो,
नाभौ नाभवमच्युतस्य, सुमहद्भाष्यं च नाभाषिषम् ।
चित्रार्थां न बृहत्कथामचकथं, सुत्राम्णि नासं गुरु-
र्देव ! त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥

अत्र 'श्रुतिगणं व्यास्थम्' इत्यादीनि विशेषणानि स्वस्मिन्व्यासाद्यसाधारण-

---

हरविशेषणम् । 'उत्तंसः कर्णपूरे स्याच्छेखरे चावतंसवत्' इति विश्वः । सामर्थ्याभिप्रायं सामर्थ्यव्यञ्जकम् ॥ **तवेति** । इन्द्रं प्रति कामस्योक्तिः । तव प्रसादात्कुसुमायुधोऽप्यहं मधुं वसन्तमेवैकं मुख्यं सहायं लब्ध्वा पिनाको धनुर्विशेषः पाणौ यस्य तादृशस्यापि हरस्य धैर्यच्युतिं धैर्यस्खलनं कुर्याम् । अन्ये धन्विनो धनुर्धरा मम पुरः के? अगणनीया इत्यर्थः । कुसुमायुध इति विशेषणं चेत्यन्वयः ॥ **अर्थलभ्येति** । कुर्यामित्युत्तमपुरुषाक्षिप्तेत्यर्थः । अभिप्रायगर्भमभिप्रायपूर्वकम् । अत एवावयवार्थमात्रविश्रान्तत्वात् 'हर'पदेन न पौनरुक्त्यमपि ॥ **सर्वेति** । सर्वेषामशुचीनां रक्तपूयरेतोविण्मूत्रादीनां निधानस्य स्थानभूतस्य । कृतघ्नस्य उत्तमान्नपानादिकृतोपकारनाशकस्य शरीरकस्य । शरीरकस्येति निन्दायां कप्रत्ययः । कृते तदर्थम् । तत्संरक्षणार्थमिति यावत् । विशेषणानि पूर्वार्धोक्तानि । तस्य शरीरस्य ॥ **व्यास्थमिति** । राजानं प्रति कवेरुक्तिः । हे देव राजन्! त्वद्गुणानां वृन्दस्य समूहस्य वर्णनं कर्तुमहं कथं शक्नुयां, शक्तो भवेयमित्यन्वयः । कुतस्तत्राह—यतोऽहमेकरूपतया स्थितं वेदसमूहं न व्यास्थमनेकशाखारूपेण न विस्तारितवान् । तथा च 'तत्कर्ता व्यासो न भवामी'ति व्यज्यते । एवमग्रेऽपि वल्मीकतो वल्मीकाज्जन्मास्यास्तीति जन्मी न, भवामीति शेषः । तथा च 'नाहं वाल्मीकि'रिति । अच्युतस्य नाभौ नाभवं नोत्पन्न इत्यनेन 'नाहं चतुर्मुख' इति । सुमहद्भाष्यं महाभाष्यं च नाभाषिषं न भाषितवानित्यनेन 'नाहं सहस्रजिह्वः शेष' इति । चित्रो विचित्रोऽर्थो यस्यास्तां बृहत्कथां न अचकथं न कथितवानित्यनेन 'नाहं तद्वक्ता शिवो गुणाढ्यो वा' इति । सुत्राम्णि इन्द्रे गुरुरुपदेशको नासमित्यनेन 'नाहं वाक्पतिः' इति च व्यज्यते । उक्तेषूदाहरणेषु वैलक्षण्यं

कार्यकर्तृत्वनिषेधमुखेन 'नाहं व्यासः' इत्याद्यभिप्रायगर्भाणि । तत्राद्ययोरुदाहरणयोरेकैकं विशेषणम्, समनन्तरयोः प्रत्येकं बहूनि विशेषणानि । तत्रापि प्रथमोदाहरणे सर्वाणि विशेषणान्येकाभिप्रायगर्भाणि पदार्थरूपाणि च, द्वितीयोदाहरणे भिन्नाभिप्रायगर्भाणि वाक्यार्थरूपाणि चेति भेदः । एतेषु व्यङ्ग्यार्थसद्भावेऽपि न ध्वनिव्यपदेशः । शिवस्य तापहरणे, मन्मथस्य कैमुतिकन्यायेन सर्वधन्विधैर्यभञ्जकत्वे शरीरसंरक्षणार्थपापमाचरतां मूढत्वे, स्वस्य वर्णनीयराजगुणकथनाशक्तत्वे च वाच्य एवोपस्कारकत्वात् । अत एव व्यङ्ग्यार्थस्य वाच्यपरिकरत्वात्परिकर इति नामास्यालंकारस्य । केचित्तु निष्प्रयोजनविशेषणोपादानेऽपुष्टार्थत्वदोषस्योक्तत्वात्सप्रयोजनत्वं विशेषणस्य दोषाभावमात्रं न कश्चिदलंकारः । एकनिष्ठतादृशानेकविशेषणोपन्यासे परं वैचित्र्यविशेषात्परिकर इत्यलंकारमध्ये परिगणित इत्याहुः । वस्तुतस्त्वनेकविशेषणोपन्यास एव परिकर इति न नियमः । श्लेषयमकादिष्वपुष्टार्थदोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरत्वोपपत्तेः ।

यथा वा,—

अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् ।
क्षितिभृतैव सदैवतका वयं वनवताऽनवता किमहिद्रुहा ॥

---

दर्शयति—**तत्रेत्यादिना** । एकैकमेकस्य विशेष्यस्यैकमेव समनन्तरयोरनन्तरोक्तयोः प्रत्येकमेकं विशेष्यं प्रति । तत्रापि तयोर्मध्येऽपि । एकाभिप्रायगर्भाण्येकार्थाभिप्रायपूर्वकाणि ॥ **वाक्यार्थेति** । 'न व्यास्थम्' इत्यादिनिषेधवाक्यार्थपङ्क्त्योक्तरीत्या हेतुत्वेनान्तिमवाक्यार्थे विशेषणत्वादिति भावः । एतेषु उक्तोदाहरणेषु । ध्वनिव्यपदेशो ध्वनिव्यवहारः । तत्र हेतुमाह—**तापहरण इत्यादिना** । तापहरणे इत्यादिसप्तम्यन्तचतुष्टयस्य वाच्य इत्यनेन सामानाधिकरण्येनान्वयः ॥ **उपस्कारकत्वादिति** । तथा चापराङ्गरूपगुणीभूतव्यङ्ग्यभेदत्वान्न ध्वनिव्यवहार इति भावः । नन्वेवमपि यथाश्रुतलक्षणस्य निःशेषच्युतेत्यादिध्वनावतिव्याप्तिरित्यत आह—**अत एवेति** । वाच्योपस्कारकत्वादेवेत्यर्थः । परिकरत्वात् अङ्गत्वात् । तथा च परिकरपदमहिम्ना प्रकृतार्थोपपादकत्वस्य व्यङ्ग्यविशेषणस्य लाभान्नातिव्याप्तिरिति भावः । अपुष्टार्थेति भावप्रधानम् ॥ **उक्तत्वादिति** । 'अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः' इत्यादिनालंकारिकैरुक्तत्वादित्यर्थः । कथं तर्हि तैरेवास्यालंकारत्वेन कथनमत आह—**एकनिष्ठेति** । **तादृशेति** । साभिप्रायेत्यर्थः ॥ **दोषाभावेनेति** । अपुष्टार्थत्वस्य दोषत्वाभावेनेत्यर्थः । उद्भटालंकारसंमत्या सहृदयवैमुख्यरूपदूषकताबीजाभावादिति भावः । विच्छित्तिश्चमत्कृतिः । परिकरत्वोपपत्तेः परिकरस्यालंकारत्वोपपत्तेः । तत्र दोषस्याप्रसक्त्या विच्छित्तिविशेषस्य तदभावप्रयुक्तत्वासंभवात्तत्प्रयोजकमलंकारत्वमावश्यकमिति भावः । यमकस्थले उदाहरति—**यथेति** । **अतीति** । निजां

अत्र हि पुरुहूतपूजोद्युक्तान्नन्दादीन्प्रति भगवतः कृष्णस्य वाक्ये 'गोवर्धनगिरिरेव चास्माकं रक्षकत्वेन दैवतमिति स एव पूजनीयः, न त्वरक्षकः पुरुहूत' इत्येवंपरं, वनवतेति गोवर्धनगिरेर्विशेषणं, काननवत्त्वान्निर्झरादिमत्त्वाच्च पुष्पमूलफलतृणजलादिभिरारण्यकानामस्माकमसद्मनानां गवां चायमेव रक्षक इत्यभिप्रायगर्भम् । एवमत्र साभिप्रायैकविशेषणविन्यासस्यापि विच्छित्तिविशेषवशादस्य सभिप्रायस्यालंकारत्वसिद्धावन्यत्रापि 'सुधांशुकलितोत्तंस' इत्यादौ तस्यात्मलाभो न निवार्यते । अपि च एकपदार्थहेतुकं काव्यलिङ्गमलंकार इति सर्वसंमतं, तद्वदेकस्यापि विशेषणस्य सभिप्रायस्यालंकारत्वं युक्तमेव ॥ ६२ ॥

---

## परिकराङ्कुरालंकारः २५

**साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।**
**चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ६३ ॥**

---

देवतामतिक्रम्य यदि यजेत अर्थाद्देवतान्तरं पूजयेत् तदोभयतो लोकद्वयाच्च्यवते भ्रश्यति । अघं पापमपि जुषते सेवते । प्राप्नोतीति यावत् । का निजा देवता तत्राह—वयं वनवता प्रशस्तवनयुक्तेन क्षितिभृता गोवर्धनगिरिणैव सदैवतकाः दैवतसहिताः । स एवास्माकं दैवतमित्यर्थः । अनवता अरक्षकेण । अहिद्रुहा इन्द्रेण । किं प्रयोजनमिति शेषः । अहिर्वृत्रासुरः । 'अहिर्वृत्रासुरे सर्पे' इति विश्वः । नन्वेवं सति तत्रैवालंकारता स्यान्न तु सुधांशुकलितोत्तंस इत्यादावत आह—**एवमिति** । विच्छित्तिविशेषेति दोषाभावप्रयुक्तविच्छित्तिव्यावृत्तेत्यर्थः । ननु यमकादावपि तादृशविच्छित्तिविशेषे मानाभावः । विच्छित्तिसामान्यं तु पर्युदस्तदोषाभावेनाप्युपपन्नम् । आपत्कालपर्युदस्तस्य मृच्छौचहीनतादोषस्याभावेनेव तदानीमपि मृच्छौचकर्तुरतिशयाधानमिति नालंकारत्वसिद्धिरित्यत आह—**अपि चेति** । 'भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परे गिरिसुताकान्तालयालंकृते । अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥' इत्यादौ मोक्षस्य महामोहत्वे सुखालोकोच्छेदिनीत्येकपदार्थो हेतुरिति काव्यलिङ्गमलंकारत्वेन यथा स्वीकृतं ननु निर्हेतुत्वदोषाभावमात्रतया विच्छित्तिविशेषस्यानुभवसिद्धत्वात्तथेहापीति भावः॥ ६२

इत्यलंकारचंद्रिकायां परिकरालंकारप्रकरणम् ॥ २४ ॥

**साभिप्राय इति** । अत्र विशेषणपदस्थाने विशेष्येति प्रक्षिप्य पूर्ववल्लक्षणं

---

टिप्प०-1 'अस्मिन् पुरुपार्थचतुष्टयदानोपपत्तिहेतुकं साभिप्रायं 'चतुर्भुज'पदम्, अतः परिकरे चास्यान्तर्भाव इति केचित्प्राहुः । विशेष्यांशस्य साभिप्रायत्वे परिकराङ्कुरः स्वीकृतो जयदेवादिभिः, न चासौ प्रामाणिकः; तत्रापि विशेषणांशस्यैव साभिप्रायत्वात्, निर्धर्मकस्य विशेष्यांशमात्रस्य स्वप्नेऽपि साभिप्रायत्वासंभवात्' इति **सुधासागरकृतः** ।

---

पाठा०—१ 'प्रायविशेष्यश्चेत्'.

अत्र 'चतुर्भुज' इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् ।
यथा वा,—

फणीन्द्रस्ते गुणान्वक्तुं, लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः शक्तः, क्वाहमेष, क्व ते गुणाः? ॥

'फणीन्द्र' इत्यादिविशेष्यपदानि सहस्रवदनाद्यभिप्रायगर्भाणि ॥ ६३ ॥

---

श्लेषालंकारः २६

नानार्थसंश्रयः श्लेषो[1] वर्ण्यावर्ण्योभयाश्रितः[1] ।
सर्वदो माधवः पायात्स योऽगं गामदीधरत् ॥ ६४ ॥
अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना[2] ।
उच्चरद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६५ ॥

अनेकार्थशब्दविन्यासः श्लेषः । स च त्रिविधः—प्रकृतानेकविषयः, अप्र-

---

बोध्यम् । तच्च परिकरेऽतिव्याप्तिवारणार्थम् । लक्ष्ये लक्षणं संगमयति—अत्रेति । यद्यपि देवान्तरव्यावर्तकतया चतुर्भुज इति विशेषणं तथापि नृपादिसाधारण-देवपदशक्तेर्विष्णौ नियमनेन विशेष्यप्रतीत्यौपयिकतया विशेष्यपदत्वमभिमतं बोध्यम् । असंदिग्धमुदाहरति—फणीन्द्र इति । राजानं प्रति कवेरुक्तिः । तव गुणान्वक्तुं फणीन्द्रः शेषः समर्थ इत्यध्याहार्यम् । एवमग्रेऽपि । हैहयाधिपः कार्तवीर्यः । आखण्डल इन्द्रः । उभयत्र 'गुणान्'इत्यनुषज्यते । एष मर्त्यधर्मा अहं क्व? ते गुणाः क्व? इति क्वशब्दौ महदन्तरं सूचयतः । सहस्रवदनादीत्या-दिना सहस्रबाहुत्वसहस्रनयनत्वयोः संग्रहः । अत्र अनेकेषां विशेष्यपदानां तत्त-दभिप्रायगर्भत्वं विशेषः ॥ ६३ ॥

इत्यलंकारचंद्रिकायां परिकराङ्कुरालंकारप्रकरणम् ॥ २५ ॥

श्लेषं लक्षयति—नानार्थेति । नानार्थस्य शब्दस्य संश्रयो योजनं श्लेष इति लक्षणम् । वर्ण्येत्यादि विभागः । वर्ण्यं चावर्ण्यं च वर्ण्यावर्ण्योभयं च एतत्त्रयाश्रि-तस्तद्विषय इत्यर्थः । सर्वेति । सर्वदः स माधवः पायात् । यः अगं गोवर्धनपर्वतं गां पृथ्वीं च वराहावतारे धृतवानिति विष्णुपक्षे । हरपक्षे तु—स उमाधवः सर्वदा पायात् । यो गङ्गां धृतवानित्यर्थः । अब्जेनेति । हरिणेन मृगेणाङ्करूपतया आहिता कृता सक्तिः सङ्गो यस्येति चन्द्रपक्षे । हरिणा सूर्येणेति कमलपक्षे । उच्चरच्छस्त्रपातै-रुद्गच्छत्कीलालं रुधिरं यस्य स वाहिनीपतिः सेनापतिः । तथा वाहिनीनां

---

टिप्प०—1 काव्यादर्शे तु—'श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः । तदभिन्नपदं भिन्नपदप्रायमिति द्विधा' इत्युक्तम् । 'एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः' इत्याह मम्मटः ।

---

पाठा०—१ 'वर्ण्योभयाश्रयः'. २ 'शक्तिना'.

कृतानेकविषयः, प्रकृताप्रकृतानेकविषयश्च। 'सर्वदा' इत्यादिक्रमेणोदाहरणानि। तत्र 'सर्वदोमाधव' इति स्तोतव्यत्वेन प्रकृतयोर्हरिहरयोः कीर्तनं प्रकृतश्लेषः। अब्जं कमलम्, अब्जश्चन्द्रः; तयोरुपमानमात्रत्वेनाप्रकृतयोः कीर्तनमप्रकृतश्लेषः। वाहिनीपतिः सेनापतिः समुद्रश्च। तत्र समितौ शस्त्रप्रहारोत्पतद्रुधिरस्य सेनापतेरेव वर्णनं प्रकृतमिति प्रकृताप्रकृतश्लेषः।

यथा वा,—

त्रातः काकोदरो येन द्रोग्धापि करुणात्मना।
पूतनामारणख्यातः स मेऽस्तु शरणं प्रभुः॥
नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धानां कमलानां त्वदीक्षणे॥
असावुदयमारूढः कान्तिमान्रक्तमण्डलः।
राजा हरति लोकस्य हृदयं मृदुलैः करैः॥ इति।

तत्राद्ये स्तोतव्यत्वेन प्रकृतयो राम-कृष्णयोः श्लेषः। द्वितीये उपमानत्वेनाप्रकृतयोः पद्म-हरिणयोः श्लेषः। तृतीये 'राजा हरति लोकस्य' इति चन्द्रवर्णनप्रस्तावे प्रकृतस्य प्रत्यग्रोदितचन्द्रस्याप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः। यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चः, तत्प्रकृताप्रकृताभिधानमूलकस्योपमादेरलंकारस्य व्यङ्ग्यत्वाभिप्रायं, नत्वप्रकृतार्थस्यैव

---

नदीनां पतिः समुद्रश्चेति; पक्षे कीलालं जलम्। समितौ संग्रामे॥ **त्रात इति।** येन करुणायुक्तान्तःकरणेन द्रोहकर्तापि अदरो भयशून्यः काकस्त्रातो रक्षितो न तु हतः, स पवित्रनामा रणे ख्यातो विभू रामो मे शरणमस्त्वित्यर्थः। कृष्णपक्षे तु काकोदरः कालियसर्पः पूतनाया राक्षस्या मारणेन, ख्यात इति शेषः॥ **नीतानामिति।** दयितां प्रति नायकोक्तिः। तव ईक्षणे नेत्रे कमलानां पद्मानां हरिणानां च सदृशे स्त इत्यन्वयः। कीदृशानाम्? वने जले अरण्ये च वृद्धिं प्राप्तानाम्। तथा लुब्धैः लोभशीलैर्भूरिभिः शिलीमुखैः भ्रमरैराकुलीभावं व्याप्ततां नीतानामिति पद्मपक्षे। हरिणपक्षे तु लुब्धैः व्याधैः कर्तृभिः। भूरिशिलीमुखैर्बाणैः करणभूतैः। आकुलीभावं चपलतां नीतानामित्यर्थः। 'मृगप्रभेदे कमलः' इति विश्वः॥ **असाविति।** उदयं शैलम्—अभिवृद्धिं च, रक्तं रक्तवर्णम्—अनुरक्तं च, मण्डलं बिम्बं—देशश्च, राजा चन्द्रो—नृपश्च, मृदुलैरभिनवैः—अल्पैश्च, करैः किरणैः—ग्राह्यधनैश्च॥ **प्रत्यग्रोदितेति।** अभिनवोदितेत्यर्थः। ननु प्रकरणेनाभिधाया नियमनादप्रकृतार्थस्य व्यङ्ग्यत्वमेवेति कथं श्लेष इत्याशङ्क्याह—**यदिति। अलंकारस्येति।** न चैवं शब्दशक्तिमूलवस्तुध्वनेरुच्छेद इति वाच्यम्। 'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र! यस्मै त्वम्। यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥' इत्यत्र शनिविरुद्धरूपे प्रस्तुतेऽशनिशब्देनाभिधया प्रतीयमानेऽपि तन्मूलकस्य विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तुध्वनेः 'अशनि'-

व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शब्दशक्त्या प्रतिपाद्यस्याभिधेयत्वावश्यंभावेन व्यक्त्यनपेक्षणात् । यद्यपि प्रकृतार्थे प्रकरणबलाज्झटिति बुद्धिस्थे सत्येव पश्चान्नृपतितद्राह्यधनादिवाचिनां राजकरादिपदानामन्योन्यसंनिधानबलात्तद्विषयशक्त्यन्तरोन्मेषपूर्वकमप्रस्तुतार्थः स्फुरेत् । न चैतावता तस्य व्यङ्ग्यत्वम् । शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात् । पर्यवसिते प्रकृतार्थाभिधाने पश्चात्स्फुरतीति चेत्,—कामं गूढश्लेषो भवतु । अस्ति चान्यत्रापि गूढः श्लेषः । यथा ( माघ. ४।२९ ),—

अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥
मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः ।
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसंनिधौ ॥

अत्र हि समासोक्त्युदाहरणयोः प्राकरणिकेऽर्थे प्रकरणवशाज्झटिति बुद्धिस्थे विशेषणसाम्यादप्रकृतोऽपि वृद्धवेश्यावृत्तान्तादिः प्रतीयते । तत्र समासोक्तिरभङ्गश्लेष इति सर्वेषामभिमतमेव । एवमन्यत्रापि गूढश्लेषे ध्वनिबुद्धिर्न कार्या ।

यथा वा ( माघ. ३।५३ ),—

रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥

---

शब्दव्यक्तिमूलस्य संभवात् । अलंकारस्येत्यस्योपलक्षणत्वात् । अन्योन्यसंनिधानबलात्परस्परार्थसंबन्ध्यर्थवाचकशब्दसमभिव्याहाररूपशब्दान्तरसंनिधिबलात् । तथा चाप्रकृतेऽप्यभिधानियामकमस्तीति भावः । एतावता पूर्वापरभावमात्रेण तस्याप्रकृतार्थस्य गूढश्लेष इति गूढत्वं चाप्रकृतत्वेन द्वितीयार्थस्य शीघ्रमप्रत्ययात् ॥ **अयमिति** । माघे रैवतकगिरिवर्णनम् । अयं गिरिस्तटीर्बिभर्तीत्यन्वयः । किंभूताः ? अतिजरठा अत्यन्तं कठिनाः । प्रकामगुर्वीरतिमहत्यः । अलघुभिर्विलम्बमानैर्मेघैर्व्याप्ताः । निरन्तरं प्राणिनामगम्यरूपाः । परिणतास्तिर्यग्दन्तप्रहारिणो दिग्गजा यासु ताः । वृद्धवेश्यापक्षे तु जरठा जीर्णाः । पयोधराः कुचाः । अगम्याः सङ्गमायोग्याः । परिणते प्रकटे दिक्करिके यासां ता इत्यर्थः । दिक्क वर्तुलं दशनक्षतम् । करिका नखक्षतम् । 'दिग्दष्टं वर्तुलाकारं करिका नखरेखिका' इति यादवः ॥ **मन्दमिति** । ओषधीनां पत्युश्चन्द्रस्यासंनिधौ सति अर्यमोपलाः सूर्यकान्ता मन्दीभूतमग्निं धृतवन्तः । तमः दर्शितः श्वयथुः पुष्टत्वं येन तथाभवत् । दृष्टयस्तिमिरजं दोषमान्ध्यं सिषेविरे । पक्षान्तरे ओषधिपतिर्वैद्यः । एवं मन्दाग्नित्वशोथतिमिराणि रोगविशेषाः । वृत्तान्तादिरित्यादिपदाद्रोगिवैद्यवृत्तान्तः परिगृह्यते ॥ **अभङ्गश्लेष इति** । तथा च श्लेषस्थले व्यञ्जनाविरहादप्रकृते तत्स्वीकारे श्लेषव्यवहारः सर्वेषामनुपपन्नः स्यादिति भावः ॥ **रम्या इति** । माघ एव द्वारकावर्णनम् । यस्यां द्वारकायां युवानो वधूभिः समं वलभीः प्रासादोपरितनगृहाण्यसेवन्त

अत्र द्वितीयान्तविशेषणसमर्पितार्थान्तराणां न शब्दसामर्थ्येन वधूभिरन्वयः, विभक्तिभेदात्। न च विभक्तिभेदेऽपि तदन्वयाक्षेपकं साधर्म्यमिह निबद्धमस्ति। यतः,—

'एतस्मिन्नधिकपयः श्रियं वहन्त्यः संक्षोभं पवनभुवा जवेन नीताः।
वाल्मीकेररहितरामलक्ष्मणानां साधर्म्यं दधति गिरां महासरस्यः॥' (माघ.)

इत्यत्रेवाक्षिप्तश्लेषो भवेत्। सममित्येतत्तु क्रियाविशेषणं सहार्थत्वेनाप्युपपन्नं वधूषु श्लिष्टविशेषणार्थान्वयात्प्राक् द्रागप्रतीतं साम्यार्थं नालम्बते। तस्मादर्थसौन्दर्यबलादेव तदन्वयानुसंधानमिति गूढः श्लेषः। तदनु तद्बलादेव 'सम'शब्दस्य साधर्म्यार्थकल्पनमिति वाच्यस्यैवोपमालंकारस्याङ्गमयं श्लेष इत्यलं प्रपञ्चेन। तस्मात्सिद्धं श्लेषत्रैविध्यम्। एवं च श्लेषः प्रकारान्तरेणापि द्विविधः संपन्नः। उदाहरणगतेषु 'अब्ज-कीलाल-वाहिनीपत्या'दिशब्देषु परस्परविलक्षणं पदभङ्गमनपेक्ष्यानेकार्थक्रोडीकारादभङ्गश्लेषः। 'सर्वदो माधवः', 'यो गङ्गां', 'हरिणाहितसक्तिना'[1] इत्यादिशब्देषु परस्परविलक्षणं पदभङ्गमपेक्ष्य नानार्थ-

---

सेवितवन्तः। किंभूताः? रम्या इति हेतोः। पताका वैजयन्तीः प्राप्तवतीः। विविक्ता विजना इति हेतोः रागं रतिं वर्धयन्तीः। नमन्ति वलीकानि छादनपटलप्रान्ता यासां ततः। वधूपक्षे—पताकाः सौभाग्यानि। 'पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः' इति मेदिनी। रागमनुरागम्। विविक्ताः सतीत्वेन पवित्राः नमत्त्रिवलीकाश्चेति॥ **न चेति**। यत इत्यस्य इत्यत्रैवाक्षिप्तः श्लेषो भवेदित्यग्रेतनेनान्वयः॥ **एतस्मिन्निति**। तत्रैव रैवतकगिरिवर्णनम्। एतस्मिन्गिरौ महत्यः सरस्यः वाल्मीकेर्मुनेर्गिरां साधर्म्यं सादृश्यं दधति धारयन्ति। किंभूतां गिराम्? अरहितौ संबद्धौ रामलक्ष्मणौ यासु तथाभूतानाम्। सरसीपक्षे—अरहिताः संयुक्ताः रामाः पतयो यासां तथाभूता लक्ष्मणाः सारसवनिता यासु ता इति। किंभूताः सरस्यः? अधिकां जलशोभां वहन्त्यः पवनसंभूतेन वेगेन संक्षोभं तरङ्गाकुलत्वं नीताः प्रापिताः। वाल्मीकिगिरस्तु—अधिकाः कपयो यासु ताः पवनभुवा हनूमता वेगेन निजेन संक्षोभमुद्भटत्वं प्रापिता इति। नन्वत्रापि सममित्यस्य तुल्यार्थत्वात्साधर्म्यनिबन्धोऽस्तीति कुतो न श्लेषाक्षेपस्तत्राह—**सममिति**॥ द्राक् शीघ्रं साम्यार्थं साम्यार्थकत्वम्। तथा चानुपपत्त्यभावात्तन्मूलक आक्षेपो न संभवतीति भावः। कथं तर्हि तदवगमस्तत्राह—**अर्थसौन्दर्येति**। विशेषणानां वधूभिरन्वये चमत्कृतेरनुसंधानात्तदन्वयतात्पर्यग्रह इति भावः। तदनु श्लेषानुसंधानानन्तरम्। तद्बलात् श्लेषबलात्॥ **साधर्म्यार्थेति**। साधर्म्यरूपार्थस्येत्यर्थः। अर्थसाम्याभावेऽपि 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादिवच्छब्दसाम्यस्य संभवादिति भावः। एवकारेण व्यङ्ग्यत्वव्यवच्छेदः। तत्र तयोर्मध्ये॥ **शब्देति**। जतुकाष्ठन्यायेन शब्दयोरेव श्लिष्टत्वादिति भावः। **अर्थेति**। शब्दाभेदादेकवृन्तगतफलद्वयन्याये-

---

पाठा०—१ 'शक्तिनेति'.

क्रोडीकारात्सभङ्गश्लेष इति । तत्र सभङ्गश्लेषः शब्दालंकारः । अभङ्गश्लेषस्त्वर्थालंकार इति केचित् । उभयमपि शब्दालंकार इत्यन्ये । उभयमप्यर्थालंकार इति स्वाभिप्रायः । एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यम् ॥ ६४-६५ ॥

---

## अप्रस्तुतप्रशंसालंकारः २७

अप्रस्तुतप्रशंसा[1] स्यात्सा यत्र प्रस्तुताश्रया ।
एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥ ६६ ॥

यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालंकारः । अप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतावगतिश्च प्रस्तुताप्रस्तुतयोः संबन्धे सति भवति । संबन्धश्च सारूप्यं सामान्यविशेषभावः कार्यकारणभावो वा संभवति । तत्र सामान्यविशेषभावे सामान्याद् विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यम् । कार्यकारणभावेऽपि कार्यात्कारणस्य कारणाद्वा कार्यस्यावगतौ द्वैविध्यम् । सारूप्ये तु एको भेदः इत्यस्याः पञ्च प्रकाराः । यदाहुः—

'कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥' इति ॥

---

नार्थयोरेव श्लिष्टत्वादिति भावः ॥ केचित् अलंकारसर्वस्वकारादयः ॥ **उभयमपीति ।** सभङ्गाभङ्गश्लेषद्वयमपीत्यर्थः । शब्दस्य परिवृत्त्यसहत्वेनान्वयव्यतिरेकाभ्यां तद्गतत्वावधारणादिति भावः । अन्ये मम्मटभट्टाः । नन्वभिप्रायस्यार्थालंकारमध्यकथनादवगतस्यापि विशेषतः कथनमन्तरेण कथमुपपत्तिरित्याशङ्क्याह— **एतदिति ।** यद्यप्युत्प्रेक्षाग्रन्थानन्तरं चित्रमीमांसा न क्वापि दृश्यते तथाप्ययमाशय उन्नीयते । चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालंकारत्वमिति । अनुप्रासयमकादेस्तु न चमत्कारेऽर्थमुखप्रेक्षित्वमिति न तेषामर्थालंकारत्वमपि तु शब्दवैचित्र्याच्छब्दालंकारत्वमेवेति ॥ ६४-६५ ॥

इत्यलंकारचंद्रिकायां श्लेषालंकारप्रकरणम् ॥ २६ ॥

**अप्रस्तुतेति ।** सा अप्रस्तुतप्रशंसा । प्रस्तुताश्रया प्रस्तुतमाश्रयः प्राधान्येन तात्पर्यविषयो यस्यास्तथाभूता । प्रस्तुतपरमप्रस्तुतवर्णनमप्रस्तुतप्रशंसेत्यर्थः । **एक इति ।** कृती कुशलः । शकुन्तेषु पक्षिषु मध्ये यश्चातकः शक्रादिन्द्रादन्यं न याचत इत्यर्थः ॥ **कार्ये इति ।** कार्ये प्रस्तुते सति तदन्यस्य कारणस्य वचःप्रतिपादनम् । निमित्ते कारणे प्रस्तुते सति तदन्यस्य कार्यस्य । एवं सामान्ये प्रस्तुते

---

**टिप्प०**—1 अप्राकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्रशंसा; प्राकरणिकेन त्वप्राकरणिकाक्षेपः समासोक्तिः । 'अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाणप्रकारान्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र दृश्यते साऽप्रस्तुतप्रशंसा, सा च पंचविधा' इति **रसगंगाधरकृतः ।**

तत्र सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसोदाहरणं 'एकः कृती' इति। अत्राप्रस्तुतस्य चातकस्य प्रशंसा प्रशंसनीयत्वेन प्रस्तुते तत्सरूपे क्षुद्रेभ्यो याचनान्निवृत्ते मानिनि पर्यवस्यति।

यथा वा,—

आबद्धकृत्रिमसटाजटिलांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य॥

अत्र शुनकस्य निन्दा निन्दनीयत्वेन प्रस्तुते तत्सरूपे कृत्रिमवेषव्यवहारमात्रेण विद्वत्ताऽभिनयवति वैधेये पर्यवस्यति।

यथा वा,—

[1]अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः॥

अत्र कमलनालवृत्तान्तकीर्तनं तत्सरूपे बहिः खलेषु जाग्रत्सु भ्रातृपुत्रादिभिरन्तः कलहं कुर्वाणे पुरुषे पर्यवस्यति। एवं च लक्ष्यलक्षणयोः प्रशंसाशब्दः स्तुतिनिन्दास्वरूपाख्यानसाधारणकीर्तनमात्रपरो द्रष्टव्यः॥

सामान्यनिबन्धना यथा (माघ. २।४२)—

विधाय वैरं सामर्षे नरोऽरौ य उदासते।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्॥

---

सति तदन्यस्य विशेषस्य। विशेषे प्रस्तुते सति तदन्यस्य सामान्यस्य। तुल्ये प्रस्तुते तदन्यस्य तत्सदृशस्येत्यर्थः। 'अन्य'शब्दस्य प्रतिसंबन्धिपरत्वात्। तत्सरूपे तत्सदृशे॥ **आबद्धेति**। आबद्धा याः कृत्रिमाः सटाः स्कन्धलोमानि तैर्जटिला व्याप्ता अंसभित्तिः स्कन्धदेशो यस्यैवंभूतः श्वा शुनको मृगपतेः सिंहस्य पदवीं स्थानं यद्यारोपितः। तादृशसटायुक्तत्वेन सिंहसाम्यं प्रापित इत्यर्थः। तथापि मत्तानामिभानां गजानां कुम्भतटस्य पाटने विदारणे लम्पटस्य व्यसनिनो हरिणानामधिपस्य नादं सिंहनादं कथं करिष्यतीत्यर्थः। अभिनयवत्यनुकुर्वतीति सप्तम्यन्तम्। वैधेये मूर्खे। 'मूर्खवैधेयबालिशाः' इत्यमरः॥ **अन्तरिति**। छिद्राणि रन्ध्राणि दोषस्थानानि च कण्टकाः शूकाः खलाश्च। भङ्गुरा भङ्गशीलाश्च। गुणाः सौभाग्यादयस्तन्तवश्च। अत्र स्तुतिनिन्दोदासीनस्वरूपाख्यानमात्रमिति श्लिष्टविशेषणत्वमिति च भेदः॥ **एवं चेति**। उक्तोदाहरणेषु प्रस्तुतपरस्याप्रस्तुतवर्णनस्य त्रिरूपत्वे सतीत्यर्थः। **विधायेति**। ये नरा मनुष्याः सक्रोधेऽरौ शत्रौ वैरं विधायोदासीना भवन्ति ते कक्षे तृणे उदर्चिषमग्निं निक्षिप्याभिमारुतं

---

**टिप्प०—1** छिद्राणि–विवराणि, दोषाश्च; कण्टकाः–तीक्ष्णाग्रवृक्षाः, क्षुद्ररिपवश्च; गुणाः–तन्तवः, यशांसि च; अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां कमलनालच्छेदने कारणत्वमशक्यम्; कंटकानां तु शक्यमित्युभयरूपत्वम्।

अत्र प्रागेव सामर्षे शिशुपाले रुक्मिणीहरणादिना वैरं दृढीकृतवता कृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्तव्येऽर्थे प्रस्तुते तत्प्रत्यायनार्थं सामान्यमभिहितम् ।

यथा वा,—

सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् ।
परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः ॥

अत्र 'यदि त्वं प्रत्यक्ष इव परोक्षेऽपि मम हितमाचरसि, तदा त्वमुत्तमः सुहृत्' इति विशेषे वक्तव्यत्वेन प्रस्तुते सामान्यमभिहितम् ॥

विशेषनिबन्धना यथा ( माघ. २।५३ )—

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः ।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥

अत्र कृष्णं प्रति बलभद्रवाक्ये मार्दवदूषणपरे पूर्वप्रस्तावानुसारेण 'क्रूर एव ख्यातिभाग्भवति, न तु मृदु'रिति सामान्ये वक्तव्ये तत्प्रत्यायनार्थमप्रस्तुतो विशेषोऽभिहितः । एवं बृहत्कथादिषु सामान्यतः कंचिदर्थं प्रस्तुत्य तद्विवरणार्थमप्रस्तुतकथाविशेषोदाहरणेष्वियमेवाप्रस्तुतप्रशंसा द्रष्टव्या ॥

कारणनिबन्धना यथा ( नैषधीय. २।२५ )—

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥

अत्र अप्राकरणिकेन्दुमण्डलगततयोत्प्रेक्ष्यमाणेन दमयन्तीवदननिर्माणार्थं सारांशहरणेन तत्कारणेन तत्कार्यरूपं वर्णनीयतया प्रस्तुतं दमयन्तीवदनगतलोकोत्तरं सौन्दर्यं प्रतीयते । यथा वा मदीये वरदराजस्तवे—

आश्रित्य नूनममृतद्युतयः पदं ते
देहक्षयोपनतदिव्यपदाभिमुख्याः ।
लावण्यपुण्यनिचयं सुहृदि त्वदास्ये
विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः ॥

अत्राप्राकरणिकचन्द्रकर्तृकतयोत्प्रेक्ष्यमाणेन लावण्यपुण्यनिचयविन्यासेन कारणेन तत्कार्यमनन्तकोटिचन्द्रलावण्यशालित्वमनन्यमुखसाधारणं भगव-

---

पवनाभिमुखं शेरते । निद्रां कुर्वन्तीत्यर्थः ॥ सौहार्देति । सौहार्दानि मैत्राण्येव स्वर्णरेखा इति रूपकम् । तासां परीक्षणे निकषोपलः परोक्षमिति संज्ञितः कोऽप्यस्तीत्यन्वयः ॥ अङ्केति । चन्द्रमा मृगलाञ्छनः, इत्युच्यत इति शेषः । निष्ठुरं क्षिप्तानि निरस्तानि मृगयूथानि येन तादृशः केसरी सिंहो मृगाधिपः, इत्युच्यत इति शेषः । हृतेति । धृतो गम्भीरायां खन्यां गर्ते खस्याकाशस्य नीलिमा येनेति मण्डलविशेषणम् ॥ आश्रित्येति । हे देव! प्रतिमासं भिन्ना अमृतद्युतयश्चन्द्रास्ते विष्णोः पदमाकाशमेव पदं चरणमाश्रित्य देहस्य क्षये उपनतं संपन्नं दिव्यपदस्या-

न्मुखे वर्णनीयतया प्रस्तुतं प्रतीयते। तथा हि—चन्द्रस्तावन्मन्त्रलिङ्गाद्वृद्धिक्षयाभ्यामभेदेऽपि भेदाध्यवसायाद्वा प्रतिमासं भिन्नत्वेन वर्णितः। तेनातीताश्चन्द्रा अनन्तकोटय इति लब्धम्। कालस्यानादित्वात्सर्वेषां च तेषामाकाशसमाश्रयणं श्लेषमहिम्ना भगवच्चरणसमाश्रयणत्वेनाध्यवसितम्। भगवच्चरणं प्रपन्नानां च देहक्षयोपस्थितौ परमपदप्राप्त्याभिमुख्यं तदानीमेव स्वसुहृद्वर्गे स्वकीयसुकृतस्तोमनिवेशनं ततः सूर्यमण्डलप्राप्तिश्चेत्येतत्सर्वं श्रुतिसिद्धमिति तदनुरोधेन तेषां देहक्षयकालस्यामावास्यारूपस्योपस्थितौ सूर्यमण्डलप्राप्तेः प्राक्प्रत्यक्षसिद्धं पुण्यत्वेन निरूपितस्य लावण्यस्य प्रहाणं निमित्तीकृत्य तस्य चन्द्रसादृश्यस्वरूपोपचरिततत्सौहार्दवति भगवन्मुखे न्यसनमुत्प्रेक्षितम्। यद्यपि सुहृद्बहुत्वे तावदल्पपुण्यसंक्रमो भवति, तथाप्यत्र 'सुहृदी'त्येकवचनेन भगवन्मुखमेव चन्द्राणां सुहृद्भूतं न मुखान्तराणि चन्द्रसादृश्यगन्धस्याप्यास्पदानीति भगवन्मुखस्येतरमुखेभ्यो व्यतिरेकोऽपि व्यञ्जितः। ततश्च तस्मिन्नेव सर्वेषां चन्द्राणां स्वस्वयावल्लावण्यपुण्यविन्यसनोत्प्रेक्षणेन प्राग्वर्णितः प्रस्तुतोऽर्थः स्पष्टमेव प्रतीयते। यद्यपि श्रुतौ सूर्यमण्डलप्राप्त्यनन्तरभाविविरजानद्यतिक्रमणानन्तरमेव सुहृत्सुकृतसंक्रमणं श्रूयते, तथापि शारीरकशास्त्रे तस्यार्थवशात्प्राग्भावः स्थापित इति तदनुसारेण विन्यस्य मिहिरं प्रति यान्तीत्युक्तम्।

कार्यनिबन्धना यथा,—

नाथ! त्वदङ्घ्रिनखधावनतोयलग्ना-
स्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः।
ता एव तस्य मथनेन घनीभवन्त्यो
नूनं समुद्रनवनीतपदं प्रपन्नाः॥

---

भिमुखत्वं येषामेवंभूताः संतस्त्वदास्यरूपे सुहृदि मित्रे नूनं लावण्यस्वरूपस्य पुण्यस्य निचयं विन्यस्य मिहिरं सूर्यं प्रति यान्तीत्यन्वयः॥ **मन्त्रलिङ्गादिति**। 'नवो नवो भवति जायमानः' इत्यादिमन्त्रसामर्थ्यादित्यर्थः। मन्त्रस्य मानान्तरसिद्धार्थानुवादकत्वादाह—**वृद्धीति**। **श्रुतीति**। 'तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (१।४) इति कौषीतकीश्रुतिः। 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छतीति स वायुमागच्छति स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति च श्रुतौ 'स आदित्यमागच्छती'त्यनन्तरं 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते' इति श्रुतौ॥ **शारीरकेति**। शरीरे भवः शारीरः, स एव शारीरक आत्मा, तत्प्रतिपादक इत्यर्थः। अर्थवशात् प्रयोजनवशात्। पूर्वं पापादित्यागाभावेऽर्चिरादिमार्गप्राप्तिपूर्वकब्रह्मप्राप्तेरसंभवेन पाठक्रमस्यार्थक्रमेण बाधादिति भावः॥ **स्थापित इति**। 'सांपराये तर्तव्याभावात्तथा ह्यन्यः' इति तार्तीयीकाधिकरणे सिद्धान्तित इत्यर्थः॥ **नाथेति**। हे नाथ विष्णो!

अत्र भगवत्पादाम्बुजक्षालनतोयरूपायां दिव्यसरित्यलक्तकरसादिवज्ञ्नानां तया सह समुद्रं प्रविष्टानां तन्नखकान्तिलेशकणिकानां परिणामतया संभाव्यमानेन 'समुद्रनवनीत'पदवाच्येन चन्द्रेण कार्येण तन्नखकान्त्युत्कर्षः प्रतीयते।

यथा वा,—

अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं
संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम्।
अङ्गानामकठोरता यदि दृषत्प्रायैव सा मालती
कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्बताम्॥

अत्र नायिकागतिसौकुमार्यादिषु वर्णनीयत्वेन प्रस्तुतेषु हंसादिगतगर्वशान्त्यादिरूपाण्यौचित्येन संभाव्यमानानि कार्याण्यभिहितानि। एतानि च पूर्वोदाहरणइव न वस्तुकार्याणि किंतु तन्निरीक्षणकार्याणि।

'लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः।
तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः॥' (कुमार. १।४८)

इत्युदाहरणान्तरे तथैव स्पष्टम्। 'अङ्गानामकठोरता' इति तृतीयपादे तु वर्णनीयाङ्गसौकुमार्यातिशयनिरीक्षणकार्यत्वमपि नार्थाक्षेप्यमालतीकठोरत्वे विवक्षितं, प्रतियोगिविशेषापेक्षकठोरत्वस्य तदकार्यत्वात्किंतु तद्बुद्धेरेव।

---

त्वच्चरणनखप्रक्षालनजले गङ्गारूपे लग्नास्तेषां नखानां कान्तिलेशकणिकाः समुद्रं प्राप्ताः। ता एव च कणिकास्तस्य जलधेर्मथनेन सान्द्रतां प्राप्ता नूनं समुद्रसंबन्धिनवनीतस्य चन्द्रस्य पदं प्राप्ताः। चन्द्ररूपेण परिणता इत्यर्थः॥ तया तद्वारेण। तदित्यनन्तरं हेतुरिति शेषः। तद्धेतुर्नखकान्त्युत्कर्ष इत्यर्थः॥ **अस्याश्चेदिति।** अस्याः कामिन्या गतिसौकुमार्यं दृष्टं चेदित्यध्याहारेणान्वयः। एवं संलपो भाषणं यदि श्रुतस्तदा परभृतैः कोकिलैः वाचं यच्छतीति तथा तस्य भावो वाचंयमत्वं मौनमेव व्रतं धार्यतां साध्यताम्। अकठोरता मार्दवं यदि दृश्यते तदा सा प्रसिद्धा मालती दृषत्प्रायैव पाषाणतुल्यैव लक्ष्यत इति। कान्तिर्दृष्टा चेत्तदा कमला लक्ष्मीः काषायं वस्त्रमालम्बतामाश्रयतु। किमत्र बहुनोक्तेनेत्यन्वयः। गत्यादिषु गतिसौन्दर्यादिषु। संभाव्यमानान्युत्प्रेक्षमाणानि। पूर्वोदाहरणाद्वैलक्षण्यमाह—**एतानीति।** कार्याणीत्यर्थः॥ **लज्जेति।** तिरश्चां पश्वादीनां चेतसि यदि लज्जा स्यात्तदा चमर्यो गोमृगाः पर्वतराजपुत्र्यास्तं तथा रमणीयं केशपाशं प्रसमीक्ष्य वालाः केशाः प्रिया यासां तास्तथा तत्त्वं शिथिलं कुर्युरित्यन्वयः॥ तथैव निरीक्षणकार्यत्वमेव॥ **अर्थाक्षेप्येति।** दृषत्प्रायत्वरूपार्थाक्षिप्तेत्यर्थः॥ इदमपि अप्रस्तुतबुद्धेः कार्यत्वमपि। अपिना प्रस्तुतबुद्धेः कारणत्वं प्रागुक्तं समुच्चीयते। 'त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते। मालतीशशभृल्लेखाकदलीनां कठोरता॥' इति तुल्ययोगितायां प्रागुदाहृतम्। ननु कार्यरूपेणाप्रस्तुतेनार्थेन यत्र प्रस्तुतं तत्कारणमवगम्यते सा कार्यनिबन्धना अप्रस्तुतप्रशंसोच्यते। न

इदमपि 'त्वदङ्गमार्दवे दृष्टे' इत्याद्युदाहरणान्तरे तथैव स्पष्टम्। अर्थस्य कार्यत्व इव बुद्धेः कार्यत्वेऽपि कार्यनिबन्धनत्वं न हीयत इति। एतादृशान्यपि कार्यनिबन्धनाप्रस्तुतप्रशंसायामुदाहृतानि प्राचीनैः। वस्तुतस्तु तदतिरेकेऽपि न दोषः। न ह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुतयोः पञ्चविध एव संबन्ध इति नियन्तुं शक्यते। संबन्धान्तरेष्वपि तद्दर्शनात्।

यथा,—

तापत्रयौषधवरस्य तव स्मितस्य
निःश्वासमन्दमरुता निबुसीकृतस्य।
एते कडङ्करचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति॥

अत्र ह्यप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मितरूपदिव्यौषधीधान्यविशेषकडङ्करचयत्वोत्प्रेक्षणेन भगवन्मन्दस्मितस्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते। न च धान्य-कडङ्करचययोः कार्यकारणभावादिसंबन्धोऽस्ति। अतः संहोत्पत्त्यादिकमपि संबन्धान्तरमाश्रयणीयमेव। एवमुपमानोपमेयावाश्रित्य तत्र कविकल्पितकार्यकारणभावनिबन्धने अप्रस्तुतप्रशंसे दर्शिते। ततोऽन्यत्रापि दृश्यते। यथा,—

कालिन्दि!, ब्रूहि कुम्भोद्भव!, जलधिरहं, नाम गृह्णासि कस्मा-
च्छत्रोर्मे, नर्मदाहं, त्वमपि वदसि मे नाम कस्मात्सपत्न्याः?।

---

चोदाहृतेषु तत्संभवः। मालतीकठोरत्वादेरप्रस्तुतस्यार्थस्याकार्यतायास्त्वयैव दर्शितत्वात्। एवं प्रस्तुतस्य कामिनीगतिनिष्ठसौन्दर्यातिशयादेर्निरीक्षणस्यैव कारणत्वेन स्वरूपतस्तस्याकारणत्वादित्यत आह—**अर्थस्येति**। अयमाशयः,—अर्थस्याप्रस्तुतत्वे सुतरां तद्बुद्धेरप्रस्तुतत्वात्कार्यत्वाच्च न तावदप्रस्तुतकार्यत्वांशासंभवः। अर्थत्वस्य प्रयोजनाभावेन लक्षणेऽनिवेशादव्यावर्तकत्वाच्च। नापि प्रस्तुतस्य कारणत्वांशस्यासंभवः। स्वरूपतस्तस्याहेतुत्वेऽपि ज्ञानस्य हेतुत्वादिति। ननु गतिसौन्दर्यादेर्ज्ञानमेव हेतुर्न तु ज्ञायमानं गतिसौन्दर्यादि। तदभावेऽपि ज्ञानमात्रात्कार्योत्पत्तेरित्यस्वरसादाह—**वस्तुतस्त्विति**। तदतिरेके तस्याः प्राचीनोदाहृताप्रस्तुतप्रशंसाया अतिरेके प्रकारपञ्चकाधिक्ये॥ **तापेति**। हे हरे! तव निःश्वासरूपमन्दमारुतेन निबुसीकृतस्य बुसरहितीकृतस्य स्मितरूपस्याध्यात्मिकादितापत्रयौषधश्रेष्ठस्य विप्रकीर्णाः कडङ्करचयाः बुससमूहा इवैते जैवातृकस्य चन्द्रस्य किरणा जगति भ्रमन्तीत्यन्वयः॥ तत्सारतारूपः किरणसारतारूपः॥ **एवमिति**। 'हृतसारम्' इत्युदाहरणे चन्द्रवदने उपमानोपमेयपदार्थावाश्रित्य चन्द्रसारांशहरणस्य सतः कविप्रौढोक्तिकल्पितं कारणत्वम्। एवमन्येष्वपि द्रष्टव्यम्। **कालिन्दीति**। नर्मदायाः समुद्रस्य च संवादोऽयम्। तत्र यमुनाभ्रान्त्या समुद्रेण 'कालीन्दी'त्युक्ते कोपात्साकूतं नर्मदाया उत्तरं—'हे कुम्भोद्भवागस्त्यमुने! ब्रूही'ति। ततः पुनः ससमुद्रस्य प्रतिवचनं—'अहं जलधिर्भवामि, मम शत्रोर्नाम कस्माद्धेतोर्गृह्णासि?' इति। सा पुनराह—'नर्मदाऽह'मित्यादि।

मालिन्यं तर्हि कस्मादनुभवसि ?, मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः, किमासां समजनि ?, कुपितः कुन्तलक्षोणिपालः ॥

अत्र 'किमासां समजनि ?' इति मालवीनां तथा रोदनस्य निमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय 'कुपितः कुन्तलक्षोणिपालः' इति तत्कारणमभिहितमिति कारणनिबन्धना । मालवान्प्रति प्रस्थितेन कुन्तलेश्वरेण 'किं ते निर्जिताः ?' इति पृष्टे तद्वधानन्तरभावि जलधिनर्मदाप्रश्नोत्तररूपं कार्यमभिहितमित्यत्रैव कार्यनिबन्धनापि । पूर्वस्यां प्रश्नः शाब्दः, अस्यामार्थ इति भेदः ॥६६॥

---

## प्रस्तुताङ्कुरालंकारः २८

**प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः[1] ।**
**किं भृङ्ग ! सत्यां मालत्यां केतक्या कण्टकेद्धया[2] ? ॥६७॥**

यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यते तत्र प्रस्तुताङ्कुरालंकारः । उत्तरार्धमुदाहरणम् । इह प्रियतमेन साकमुद्याने विहरन्ती काचिद्भृङ्गं प्रत्येवमाहेति वाच्यार्थस्य प्रस्तुतत्वम् । न चानामन्त्रणीयामन्त्रणेन वाच्यासंभवादप्रस्तुतमेव वाच्यमिह स्वरूपप्रस्तुतावगतये निर्दिष्टमिति वाच्यम् । मौग्ध्यादिना भृङ्गादावप्यामन्त्रणस्य लोके दर्शनात् ।

यथा (ध्वन्यालोके ३।४१),—

कस्त्वं भोः ?, कथयामि दैवहतकं मां विद्धि शाखोटकं[2],
वैराग्यादिव वक्षि ?, साधु विदितं, कस्मादिदं[3] कथ्यते ? ।

---

ततः समुद्रः पुनराह—'तर्हि कुतो मालिन्यमनुभवसि ?' इति । सा पुनराह—'मिलत्कज्जलैर्मालवदेशाङ्गनानां नेत्राश्रुभि'रिति । 'ततः किमासां जातम् ?' इति समुद्रस्य प्रश्नः । 'कुन्तलदेशाधिपः कुपितः'—इति नर्मदाया उत्तरम् ॥ ६६ ॥

इत्यप्रस्तुतप्रशंसालंकारप्रकरणम् ॥ २७ ॥

**प्रस्तुतेनेति** । प्रधानभूतप्रस्तुतान्तराभिव्यञ्जकं प्रस्तुतवर्णनं प्रस्तुताङ्कुरालंकारः । प्रस्तुतस्याभिव्यञ्जकत्वादङ्कुर इवाङ्कुर इति व्युत्पत्तेः । **किमिति** । हे भ्रमर ! मालत्यां विद्यमानायां कण्टकेद्धया कण्टकव्याप्तया केतक्या किं प्रयोजनम् ? इति प्रस्तुतेन भ्रमरवृत्तान्तेन 'मयि मनोहारिण्यां सत्यां किमुद्वेगकारिण्या परवनितया ?' इति नायकवृत्तान्तः प्राधान्येन प्रस्तुतोऽभिव्यज्यते । कथमिह भृङ्गवृत्तान्तस्य प्रस्तुतत्वं तत्राह—**इहेति** । तथा च भृङ्गसंबोध्यकत्वात्तद्वृत्तान्तोऽपि प्रस्तुत इति भावः । अनामन्त्रणीयामन्त्रणेन संबोध्यत्वायोग्यसंबोधनेन । वाच्यासंभवात् भृङ्गसंबोध्यकवाच्यार्थासंभवात् ॥ **कस्त्वमिति** । शाखोटकतरुं प्रति कस्यचित्पथि-

---

**टिप्प०**—1 अयमलंकारः काव्यप्रकाशकृद्भिस्तु अप्रस्तुतप्रशंसाविशेषत्वेनोक्तः; उद्द्योते चाप्यस्य स्वतन्त्रालंकारत्वमाक्षिप्य परास्तम्. 2 शाखोटको नाम भूतावासो वृक्षः.

---

**पाठा०**—१ 'नाशिताः'. २ 'कण्टकाढ्यया'; 'कण्टकस्थया'. ३ 'कस्मादिदं भाष्यते'.

वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते,
न च्छायापि परोप[1]कारकरणी मार्गस्थितस्यापि मे ॥

इत्यत्र चेतनाचेतनप्रश्नोत्तरवत्तिर्यगामन्त्रणस्यात्यन्तमसंभावितत्वाभावात् । एवं प्रस्तुतेन वाच्यार्थेन भृङ्गोपालम्भरूपेण वक्त्र्याः कुलवध्वाः सौन्दर्याभिमानशालिन्याः क्रूरजनपरिवृत्तिदुष्प्रधर्षायां परवनितायां विटसर्वस्वापहरणसंकल्पदुरासदायां वेश्यायां वा कण्टकसंकुलकेतकीकल्पायां प्रवर्तमानं प्रियतमं प्रत्युपालम्भो द्योत्यते ।

यथा वा, ( विकटनितवा )—

अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।
बालामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमल्लिकायाः ? ॥

अत्राप्युद्यानमध्ये चरन्तं भृङ्गं प्रत्ययमुपालम्भ इति वाच्यार्थस्यापि प्रस्तुतत्वम् । इदं च प्रौढाङ्गनासु सतीषु बालिकां रतये क्लेशयति कामिनि शृण्वति कस्याश्चिद्विदग्धाया वचनमिति तं प्रत्युपालम्भो द्योत्यते ।

यथा वा,—

कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् ।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥

---

कस्य प्रश्नोक्तिः । 'कथयामी'त्याद्युत्तरम् । 'वैराग्यादिव वदसी'ति पुनः प्रश्नः । 'साधु विदित'मिति शाखोटकस्योत्तरम् । 'कस्मादिदं वैराग्य'मिति पुनः प्रश्नः । 'कथ्यत' इति पुनरुत्तरं प्रतिज्ञाय शाखोटक आह—'वामभागेनोपलक्षितोऽत्र वटोऽस्ति, तं पान्थो जनः सर्वात्मना समित्पत्रच्छायादिभिः सेवते आश्रयति । मम पुनर्मार्गे स्थितस्यापि न छायापि परोपकारसंपादिके'ति भूताधारत्वादिति भावः । वामेनेति मार्गेति च श्लिष्टम् । अत्यन्तमारोपेणापि । परवनितायामिति वेश्यायामिति च विषयसप्तमी । तद्विषय इत्यर्थः । विटानां सर्वस्वापहरणे यः संकल्पस्तेन दुष्प्रापेति वेश्याविशेषणम् ॥ **अन्येति** । हे भृङ्ग ! अन्यासूपमर्दक्षमासु सुमनसां पुष्पाणां लतासु यावन्नवमल्लिकायाः कलिका संजातरजस्का भवति तावल्लोलं चपलं मनो विनोदय । लोलमिति क्रियाविशेषणं वा । नवमल्लिकाया लताविशेषस्य बालामभिनवामसंजातरजस्कां कलिकामकाले व्यर्थं किमिति कदर्थयसि पीडयसीत्यन्वयः । रजः पुष्परजः,—स्त्रीणां रेतश्च ॥ **शृण्वतीति** । एतद्वचनं शृण्वति सतीत्यर्थः ॥ **कोशेति** । इयं नलिनी कमलिनी कोशद्वन्द्वं मुकुलयुगलं कादम्बस्य हंसस्य चञ्च्वा क्षतं कृतक्षतं दधाति धत्ते, तथेयं चूतस्याम्रस्य

---

पाठा०—१ 'परोपकारकरिणी'.

अत्र 'इयम्' इति नलिनीव्यक्तिविशेषनिर्देशेन 'दीर्घिकायास्तटे' इत्यनेन च वाच्यार्थस्य प्रस्तुतत्वं स्पष्टम्। प्रस्तुतान्तरद्योतनं चोत्तरार्धे स्वयमेव कविनाविष्कृतम्। अत्राद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः—अप्रस्तुतप्रशंसायां वाच्यार्थोऽप्रस्तुतत्वादवर्णनीय इति। तत्राभिधायामपर्यवसितायां तेन प्रस्तुतार्थव्यक्तिरलंकारः। इह तु वाच्यस्य प्रस्तुतत्वेन तत्राभिधायां पर्यवसितायामर्थसौन्दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति। वस्तुतस्त्वयमप्यलंकार एव न ध्वनिरिति व्यवस्थापितं चित्रमीमांसायाम्। तृतीयोदाहरणस्य त्वलंकारत्वे कस्यापि न विवादः। उक्तं हि ध्वनिकृता ( ध्वन्यालोके २।२४ )—

'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालंकृतिर्ध्वनेः॥' इति।

एतानि सारूप्यनिबन्धनान्युदाहरणानि संबन्धान्तरनिबन्धनान्यपि कथंचिद्वाच्यव्यङ्ग्ययोः प्रस्तुतत्वलम्भनेनोदाहरणीयानि। दिङ्मात्रमुदाह्रियते—

रात्रिः शिवा काचन संनिधत्ते विलोचने! जाग्रतमप्रमत्ते।
समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चित्॥

अत्र शिवसारूप्यमिव तदेकदेशतया तद्वाच्यं ललाटलोचनमपि शिवरात्रिमाहात्म्यप्रयुक्तत्वेन वर्णनीयमिति तन्मुखेन कृत्स्नं शिवसारूप्यं गम्यम्।

यथा वा,—

वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
त्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम्।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः॥

---

लता नूतनं पल्लवं पुंरूपैः कोकिलैरास्वादितं चर्वितं धत्ते इति दीर्घिकाया वाप्यास्तटे मिथः परस्परं सखीजनस्य वच आकर्ण्य सा प्रस्तुता नायिका कमलमुकुलाग्रपल्लवव्याजेनैता मदीयस्तनाधरक्षतवृत्तान्तं कथयन्तीति ज्ञात्वा चैलस्य वस्त्रस्यान्तेन प्रान्तेन स्तनतटं तिरोदधे, बिम्बरूपमधरं च पाणिना तिरोदधे आच्छादितवतीत्यन्वयः॥ **अन्यापदेशेति**। अन्यस्यापदेशो मिषं यत्र तादृशमित्यर्थः। तदीयमेव ग्रन्थं दर्शयति—**अप्रस्तुतेत्यादि**। **व्यवस्थापितमिति**। प्रस्तुतत्वेऽपि मुख्यतया तात्पर्याभावादत्राप्यभिधापर्यवसानाभावादिति भावः॥ **साऽन्यैवेति**। सा अलंकृतिर्ध्वनेः। सकाशादन्यैवेत्यर्थः। प्रस्तुतत्वलम्भनेन प्रस्तुतत्वप्राप्त्या॥ **रात्रिरिति**। हे विलोचने! शिवा कल्याणरूपा काचनाऽनिर्वचनीयप्रभावा रात्रिः। शिवरात्रिरित्यर्थः। संनिधत्ते संनिहिता भवति। अतो युवां अप्रमत्ते जाग्रतं जाग्रद्रूपे भवतम्। कुतस्तत्राह—युवयोः सकाशे समीपे अचिरेण समानधर्मा सदृशः सखा कश्चिद्भविष्यति। तृतीयं लोचनं भाले भविष्यतीत्यर्थः। तदेकदेशतयेति शिवरात्रिमाहात्म्यप्रयुक्तत्वे हेतुस्तत्र वर्ण्यते। तद्वाच्यमुदाहृतकाव्यवाच्यम्। एवं चैकदेश्येकदेशभावसंबन्धनिबन्धनत्वमत्र दर्शितम्॥ **वहन्तीति**। भगवत्याः सीमन्त-

अत्र वर्णनीयत्वेन प्रस्तुतायाः सीमन्तसरणेर्वदनसौन्दर्यलहरीपरीवाहत्वो-त्प्रेक्षणेन परिपूर्णतटाकवत्परीवाहकारणीभूता स्वस्थाने अमान्ती वदनसौन्दर्य-समृद्धिः प्रतीयते । सापि वर्णनीयत्वेन प्रस्तुतैव ॥

यथा वा,—

अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुचं
नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्गाहते ।
दत्तेयं हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां
तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥

अत्र नायिकाया विरहासहत्वातिशयप्रकटनाय संतापवत्कार्याणि मृणाल-मालिन्यादीन्यपि वर्णनीयत्वेन विवक्षितानीति तन्मुखेन संतापोऽवगम्यः । यत्र कार्यमुखेन कारणस्यावगतिरपि श्लोके निबद्धा; न तत्रायमलंकारः, किंत्वनुमानमेव । यथा (रत्ना० २।१२),—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं प्रशिथिल[1]भुजाक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति नलिनीपत्रशयनम् ॥ ६७ ॥

---

वर्णनमिदम् । अयि शिवे ! तव सीमन्तसरणिर्नः क्षेमं तनोत्वित्यन्वयः । कीदृशी ? सिन्दूरं वहन्ती । कमिव ? प्रबलानां केशपाशरूपान्धकारदीप्तीनां समूहैर्वन्दीकृतं बालार्ककिरणमिव । सरणिः केव ? त्वद्वदनसौन्दर्यलहरीणां परीवाहरूपा स्रोतसः सरणिरिवेति । परीवाहो जलनिर्गममार्गः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः ॥ अङ्गेति । विरहसंतापवर्णनम् । अङ्गसंबद्धं मृणालकाण्डं भृङ्गेभ्यो विशेषरहितां तत्समां रुचं कान्तिमयते प्राप्नोति । तापातिशयेन मलिनीभावात् । नासामौक्तिकं श्वासानिलादत्युष्णाद्धेतोरिन्द्रनीलमणेः पदवीं तत्साम्यं गाहते प्राप्नोति । तथा कुचयोर्दत्ता निहितेयं हिमवालुका कर्पूरं क्षणं दीपरूपतां धत्ते । एवं करतले धारारूपेण सिक्तं जलं तप्तायःपिण्डपतितजलवत् संलीयते । तापातिशयाच्छोषं प्राप्नोतीत्यर्थः । उदाहरणद्वयेऽपि कार्यनिबन्धनत्वं व्यक्तम् ॥ न तत्रायमिति । द्वयोरपि वाच्यत्वादिति भावः । अयमित्यु-पलक्षणम् । अप्रस्तुतप्रशंसापि नेति बोध्यम् । किं कृतस्तर्हि तत्र चमत्कारोऽत आह—किंत्विति । परीति । रत्नावल्यां स्वविरहातुरायाः सागरिकायाः शयनमुपगतस्य राज्ञ इयमुक्तिः । इदं बिसिनीपत्ररचितं शयनं कृशाङ्ग्याः संतापं वदत्यनुमापयति । किंभूतम् ? पीनस्तनजघनसङ्गादुभयत ऊर्ध्वाधोभागयोः

---

पाठा०—१ 'श्लथभुजलताक्षेप'.

## पर्यायोक्तालंकारः २९

**पर्यायोक्तं[1] तु गम्यस्य[1] वचो भङ्ग्यन्तराश्रयम् ।**
**नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥ ६८ ॥**

यदेव गम्यं विवक्षितं तस्यैव भङ्ग्यन्तरेण विवक्षितरूपादपि चारुतरेण केनचिद्रूपान्तरेणाभिधानं पर्यायोक्तम् । उत्तरार्धमुदाहरणम् । अत्र भगवान् वासुदेवः स्वासाधारणरूपेण गम्यः राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेण स एवाभिहितः ।

---

परिम्लानं तनोः कृशस्य मध्यस्य परिमिलनं संघर्षमप्राप्य अन्तर्मध्यभागे हरितवर्णम् । एवं प्रकर्षेण शिथिलयोर्भुजयोराक्षेपैर्वेलनैश्च व्यस्तो विषमीकृतो न्यासो रचना यस्य तादृशमिति ॥ ६७ ॥

इत्यलंकारचन्द्रिकायां प्रस्तुताङ्कुरालंकारप्रकरणम् ॥ २८ ॥

( ननु प्रस्तुतकार्याभिधानमुखेन कारणस्य गम्यत्वमपि प्रस्तुताङ्कुरविषयश्चेत्किं तर्हि पर्यायोक्तमित्याकाङ्क्षायामाह )—**पर्यायोक्तमिति** । वचः प्रतिपादनम् । भङ्ग्यन्तराश्रयं भङ्ग्यन्तरप्रकारकम् ॥ लक्षणं परिष्कुरुते—**यदेवेति** । तथा च विवक्षितस्वप्रकारातिरिक्तेन चारुतरेण रूपेण व्यङ्ग्यस्याभिधानं पर्यायोक्तमिति लक्षणम् । पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्रेति व्युत्पत्तेः । लक्षणे स्वपदं व्यङ्ग्यपरम् । न च व्यङ्ग्यस्यैव वाच्यत्वं निष्फलं विरुद्धं चेति वाच्यं, प्रकारभेदात् । तदुक्तम्—'यदेवोच्यते तदेव व्यङ्ग्यं, यथा तु व्यङ्ग्यं न तथोच्यते' इति । चारुतरेणेति विशेषणात् । 'नमो राहुशिरश्छेदकारिणे दुःखहारिणे' इत्यत्र न पर्यायोक्तप्रसङ्गः । स्वासाधारणरूपेण वासुदेवत्वेन । यत्तु राहुशिरश्छेदकारित्वरूपव्यङ्ग्यमादायैव पर्यायोक्तं वक्तुमर्हं न तु विशेषणसामर्थ्यलभ्यं वासुदेवत्वमादायेति,—तदयुक्तम्; राहुशिरश्छेदकारित्वस्य वाच्यसिद्ध्यङ्गत्वेन तेनापि विवक्षितं व्यङ्ग्यं प्रधानभूतं वासुदेवत्वं तदादायैव तत्कथनौचित्यात् । 'राहुस्त्रीकुचनैष्फल्यकारिणे हरये नमः' इत्यत्र तु राहुशिरश्छेदकारित्वमेव विव-

---

**टिप्प०**—1 'अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये । यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते' इति **काव्यादर्शे** उक्तम् । 'पर्यायोक्तं विना वाचकत्वेन यद्वचः' इति लक्षयित्वा 'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता । मदेनैरावणमुखे मानेन हृदये हरेः' इत्युदाजहार **मम्मटः**; तत्र 'ऐरावतेन्द्रौ मदमानहीनौ संजातौ' इत्यस्यैव प्रकारान्तरेण निरूपणात् पर्यायोक्तम् । **अभिनवगुप्तपादाचार्यास्तु**—'पर्यायेण वाच्यादतिरिक्तप्रकारेण व्यंग्येनोपलक्षितमुक्तमभिहितं पर्यायोक्तम्' इत्याहुः ।

---

**पाठा०**—१ 'गम्यश्चेद्वचो भङ्ग्यन्तराश्रयः'. २ धनुश्चिह्नान्तर्गतो भागो रसिकरञ्जिनीकारैः कुवलयानन्दे मूलत्वेन स्वीकृतोऽस्ति.-

यथा वा,—

लोकं पश्यति यस्याङ्घ्रि स यस्याङ्घ्रिं न पश्यति ।
ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥

अत्र गौतमः पतञ्जलिश्च स्वासाधारणरूपाभ्यां गम्यौ रूपान्तराभ्यामभिहितौ ।

यथा वा (नैषध. ८।२४),—

निवेद्यतां हन्त समापयन्तौ शिरीषकोशम्रदिमाभिमानम् ।
पादौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥

अत्र 'कियद्दूरं जिगमिषा ?' इति गम्य एवार्थो रूपान्तरेणाभिहितः । यथा वा,—

वन्दे देवं जलधिशरधिं देवतासार्वभौमं
व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः ।
भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी
शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥

अत्र 'यस्य वेदा वाहाः, भुजङ्गमा भूषणानि' इत्यादि तत्तद्वाक्यार्थव्यवस्थितौ वेदत्वाद्याकारेणावगम्या एव वेदादयो व्यासप्रमुखविनेयत्वाद्याका-

---

क्षितं व्यङ्ग्यमिति युक्तं, तदादाय पर्यायोक्तमिति विभावनीयम् ॥ **लोकमिति** । यस्याक्षपादस्याङ्घ्रिर्लोकं पश्यति । अथ च स लोको यस्य पतञ्जलेः शेषावतारस्याङ्घ्रिं न पश्यति, उरगत्वात् । ताभ्यामक्षपाद-पतञ्जलिभ्यामपरिच्छेद्या अनाकलनीया ॥ **निवेद्यतामिति** । नलं प्रति दमयन्त्या उक्तिः । तव अल्पदयं मनः कर्तृ । शिरीषकलिकाम्रदुत्वाभिमानमपनयन्तौ इमौ पादौ कियद्दूरपर्यन्तं प्रयासे निधातुमिच्छति । हन्त खेदे, एतन्निवेद्यताम्; कथ्यतामित्यर्थः । **वन्दे देवमिति** । देवतासार्वभौमं सकलदेवताधीश्वरं देवं वन्दे । कीदृशम् ? जलधिरेव शरधिस्तूणो यस्य तथाभूतम् । त्रिपुरसंहारे शरीकृतस्य विष्णोर्विश्रान्तिस्थानत्वात् । तथा भुवनेषु विदिताः ख्याताः व्यासः प्रष्ठोऽग्र्यो येषां ते व्यासप्रमुखा वसिष्ठाद्या यस्य वाहानां वाहनानां वेदानामधिवाहा वाहनाधिकृता भवन्ति । 'पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः' इत्यमरः । एवमधरं भुवनं पातालं भूषणपेटिका, सर्पभूषणत्वात् । पुष्करमाकाशं पुष्पवाटिका, पुष्पस्थानीयचन्द्रोद्गमाधारत्वात् । शतमख इन्द्रस्तत्प्रमुखा अग्न्यादयो दिक्पालाः शाटीपालनाधिकृताः, दिगम्बरत्वेन दिशामेव शाटीरूपत्वात् । मनोभूश्चन्दनतरुः चन्दनस्थानीयभस्मसंबन्धित्वात् । मदनभस्मना शिवेनाङ्गानामनुलेपनस्य पुराणेषु प्रसिद्धेः । अत्र लक्षणं संगमयति—**अत्रेति** । व्यवस्थितौ विवक्षायां सत्याम् । अवगम्या व्यङ्ग्याः ॥ **विनेयत्वेति** । शिक्षणीयत्वेत्यर्थः । आदिना पातालगुप्तत्वादिपरिग्रहः ॥ **अभिहिता इति** । वाहाद्यधिकृतत्वादिना व्यासादिप्रतिपत्तौ समानवित्तिवेद्यत्वेन व्यासादिविनेयत्वादेरपि तेष्ववगमादिति भावः । साक्षादेव व्यासादिविनेयत्वाद्याकारेण किमिति न निर्दिष्टा इत्याशङ्क्याह—

रेणाभिहिताः, परंतु देवतासार्वभौमत्वस्फुटीकरणाय विशेषणविशेष्यभावव्यत्यासेन प्रतिपादिताः। अत्रालंकारसर्वस्वकृतापि पर्यायोक्तस्य संप्रदायागतमिदमेव लक्षणमङ्गीकृतं 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तमि'ति।

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्॥'

इति प्राचीनोदाहरणं त्वन्यथा योजितं—राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यत इति। एवं च 'गम्यस्यैवाभिधान'मिति लक्षणस्यानुपपत्तिमाशङ्क्याह 'यद्गम्यं तस्यैवाभिधानायोगात्कार्यादिद्वारेणैवाभिधानं लक्षणे विवक्षितमिति। लक्षणमपि क्लिष्टगत्या योजितं लोचनकृता 'पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते' इति। इदमेव लक्षणमङ्गीकृत्य तदुदाहरणे च कार्येण शब्दाभिहितेन कारणं व्यङ्ग्यं प्रदर्श्य तत्र लक्षणं लक्ष्यनाम च क्लिष्टगत्या योजितम्। वाच्यादन्येन प्रकारेण व्यङ्ग्येनोपलक्षितं सद्यदभिधीयते तत्पर्यायेण प्रकारान्तरेण व्यङ्ग्येनोपलक्षितमुक्तमिति सर्वोऽप्ययं क्लेशः किमर्थ इति न विद्मः। प्रदर्शितानि हि गम्यस्यैव रूपान्तरेणाभिधाने बहून्युदाहरणानि।'चक्राभिघातप्रसभाज्ञयैव' इति प्राचीनोदाहरण-

---

**परंत्विति**। यद्यप्युक्तविशेष्यविशेषणभावेऽपि देवतासार्वभौमत्वमवगम्यते, तथापि स्फुटप्रतिपत्त्यर्थं तद्वैपरीत्यं कृतमित्यर्थः॥ **चक्रेति**। यो देवः सुदर्शनचक्रस्याभिघाते या प्रसभमाज्ञा तयैव राहुवधूजनस्य रतोत्सवमालिङ्गनस्योद्दामा उद्भटा ये विलासास्तैर्वन्ध्यं रहितं चुम्बनमात्रावशेषं चकारेत्यन्वयः। विशिष्टेन उक्तविशेषणविशिष्टेन। एवं चेदृशोदाहरणयोजने च॥ **अनुपपत्तिमिति**। गम्यस्य राहुशिरश्छेदस्य भङ्ग्यन्तरेणानभिधानादव्याप्तिमाशङ्क्येत्यर्थः। **अभिधानायोगादिति**। अयमाशयः—अत्र हि राहुशिरश्छेदकारीति वासुदेव इति वा व्यङ्ग्यं राहुवधूजनसंबन्धितादृशरतोत्सवकारित्वेन प्रकारान्तरेणाभिधीयत इति न वक्तुं शक्यम्। धर्मिणो वासुदेवस्य प्रक्रान्तत्वेन यच्छब्दाभिहितत्वेन च व्यङ्ग्यत्वायोगात्। व्यङ्ग्यस्य च राहुशिरश्छेदकारित्वस्य वासुदेवत्वस्य वा धर्मस्य प्रकारान्तरेणानभिधानात्। तस्मात्पर्यायेण कार्यादिद्वारेणोक्तं गम्यमाक्षिप्तं वेति लक्षणार्थः अभिधानमाक्षेपो व्यञ्जनं वा। **पर्यायोक्तमिति**। क्वचित् 'पर्यायोक्ते' इति पाठः, स त्वयुक्तः। व्यङ्ग्येनोपलक्षितमुक्तमिति व्याख्यानग्रन्थविरोधात्॥ **न विद्म इति**। यच्छब्दाभिहितस्यापि भगवतो वासुदेवत्वादिना रूपान्तरेण व्यङ्ग्यतया यथाश्रुते बाधकाभावादिति भावः। न चाभिधाविषये कथं व्यञ्जनेति वाच्यम्। वासुदेवत्वादिना प्रतीयमाने भगवत्यभिधाविषयत्वासंभवात्। तस्याः स्वावच्छेदकधर्मेणैव बोधकत्वात्। अत एवोक्तं 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति। इह तु लक्षणाहेत्वभावाद्व्यञ्जनोपगम्यत इति। ननु प्रस्तुतेन तादृशरतोत्सवरूपेण कार्येण प्रस्तुतस्यैव राहुशिरश्छेदरूपकारणस्य

मपि स्वरूपेण गम्यस्य भगवतो रूपान्तरेणाभिधानसत्त्वात्सुयोजमेव । यत्तु यत्र राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुताङ्कुर एव । प्रस्तुतेन च राहोः शिरोमात्रावशेषेणालिङ्गनवन्ध्यत्वाद्यापादनरूपे वाच्ये भगवतो रूपान्तरे उपपादिते तेन भगवतः स्वरूपेणावगमनं पर्यायोक्तस्य विषयः ॥ ६८

पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।
यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥ ६९ ॥

अत्र नायिकां नायकेन सङ्गमय्य चूतलतादर्शनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यसंपादनरूपेष्टसाधनं पर्यायोक्तम् ।

यथा वा,—

देहि मत्कन्दुकं राधे! परिधाननिगूहितम् ।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥

पूर्वत्र परेष्टसाधनम्; अत्र तु कन्दुकसद्भावशोधनार्थं नीवीविस्रंसनव्याजेन स्वेष्टसाधनमिति भेदः ॥ ६९ ॥

---

प्रतीतौ चमत्कृतिविशेषस्तस्या अलंकारत्वं गमयति । तच्चालोच्यमानमप्रस्तुतप्रशंसाया असंभवादुक्तरीत्या पर्यायोक्तरूपतयैव स्वीकर्तव्यमित्याशङ्क्याह—**यत्त्विति** । अलंकाराणामियत्तानियमाभावेन प्रस्तुताङ्कुरस्याप्यलंकारान्तरत्वादेवंविधशब्दस्वारस्यभङ्गेन प्राचीनलक्षणव्याख्यानमयुक्तमिति भावः । संक्षेपतो दर्शितमपि पर्यायोक्तविषयं विशदयति—**प्रस्तुतेनेत्यादिना** । यत्तु भगवद्रूपेणावगमनं विशेषणमर्यादालभ्यत्वेन सुन्दरं पर्यायोक्तस्य विषय इति,—तदविचारितरमणीयम्; नहि पर्यायोक्तेर्व्यङ्ग्यसौन्दर्यकृतो विच्छित्तिविशेषः किंतु भङ्ग्यन्तराभिधानकृत एव । व्यङ्ग्यं तु भङ्ग्यन्तराभिधानतः सुन्दरमेव प्रायशो दृश्यते । यथा 'इहागन्तव्यम्' इति विवक्षिते व्यङ्ग्ये अयं देशोऽलंकरणीयः, सफलतामुपनेतव्य' इत्यादौ । अतस्तदसुन्दरत्वोद्भावनमकिंचित्करमेव । अलंकारसर्वस्वकारग्रन्थविरोधोद्भावनं तु तच्छिक्षाकारिणं प्रति न शोभते । उपजीव्यत्वोद्भावनमपि ग्रन्थस्याकिंचित्करमेव । युक्तिविरोध इति परोत्कर्षासहिष्णुत्वमात्रमुद्भावयितुरवगमयतीत्यलं विस्तरेण ॥ ६८ ॥ प्रकारान्तरेण पर्यायोक्तं लक्षयति—**पर्यायोक्तमिति** । रमणीयेन व्याजेन मिषेण स्वस्य परस्य वा इष्टस्य यत्साधनं संपादनं तदपि पर्यायोक्तम् । पर्यायेण व्याजरूपेणोक्तं यत्रेति व्युत्पत्तेः ॥ **संपादनेति** । संपादनरूपं यदिष्टं तत्साधनं तत्करणमित्यर्थः ॥ **देहीति** । परिधानेनाधरवस्त्रेण निगूहितमाच्छादितमित्यर्थः । एवं च प्रकारद्वयसाधारणं तदन्यतरत्वं सामान्यलक्षणं बोध्यम् ॥ ६९ ॥

इत्यलंकारचन्द्रिकायां पर्यायोक्तालंकारप्रकरणम् ॥ २९ ॥

---

टिप्प०—1 तच्चेदं सर्वं जगन्नाथपण्डितानामसंमतम्; अत्र विषये विस्तरस्तु रसगंगाधरस्य पर्यायोक्तप्रकरणे द्रष्टव्यः ।

## व्याजस्तुत्यलंकारः ३०

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।
कः स्वर्धुनि विवेकस्ते पापिनो[1] नयसे दिवम् ॥ ७० ॥
साधु दूति ! पुनः साधु कर्तव्यं गिमतः परम् ।
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥ ७१ ॥

निन्दया स्तुतेः स्तुत्या निन्दाया वा अवगमनं व्याजस्तुतिः । 'कः स्वर्धुनी'त्युदाहरणे 'विवेको नास्ती'ति निन्दाव्याजेन 'गङ्गा सुकृतिवदेव महापातकादिकृतवतोऽपि स्वर्गं नयती'ति व्याजरूपया निन्दया तत्प्रभावातिशयस्तुतिः । 'साधु दूति' इत्युदाहरणे 'मदर्थे महान्तं क्लेशमनुभूतवत्यसि' इति व्याजरूपया स्तुत्या, 'मदर्थं न गतासि, किंतु रन्तुमेव गतासि; धिक्त्वां दूतिकाधर्मविरुद्धकारिणी'मिति निन्दाऽवगम्यते ।

यथा वा,—

कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते ।
सप्तसप्तिसमारूढा भवन्ति परिपन्थिनः ॥
अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं
देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति ।

---

**उक्तिरिति** । अत्र निन्दास्तुतिभ्यामिति स्तुतिनिन्दयोरिति चेतरेतरयोगो न विवक्षितः । तथा च निन्दया स्तुतेः स्तुत्या च निन्दायाः स्तुत्याः स्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिरित्यर्थः । प्रथमे व्याजेन स्तुतिरिति चरमयोर्व्याजरूपा स्तुतिरिति च व्युत्पत्तेः । अत एव व्याजस्तुतिपदार्थानुगमाभावान्निन्दया निन्दाभिव्यक्तिर्व्याजनिन्दाख्यमलंकारान्तरमित्यग्रे वक्ष्यते । अत एवमाद्ये प्रकारद्वये स्तुतिनिन्दयोः समानविषयत्वभिन्नविषयत्वाभ्यां प्रत्येकं द्वैविध्यमिति चत्वारो भेदाः । अन्त्यस्तु भिन्नविषयस्तुतिक एव एवेति पञ्च भेदाः । लक्षणं तु व्याजनिन्दाभिन्नत्वे सति स्तुतिनिन्दान्यतरपर्यवसायिस्तुतिनिन्दान्यतरत्वं सर्वानुगतं बोध्यम् ॥ **कस्त इति** । नृपं प्रति कवेरुक्तिः । त्वयि योद्धुमेकं सप्तिमश्वमास्थिते आरूढे सति परिपन्थिनः शत्रवः सप्ताश्वसमारूढा भवन्तीत्यन्वयः । सप्त सप्तयोऽश्वा अस्येति सूर्यः, सप्त च सप्तयोऽश्वास्तत्समारूढा इति द्वितीयोऽर्थो निन्दाद्योतकः । त्वया संमुखाहताः सूर्यमण्डलं भित्त्वा दिवमुपगता इति स्तुतौ पर्यवसानम् ॥ **अर्धमिति** । शिवस्य देहार्धं दानवानां वैरिणा हरिणा आहृतम् । हरिहरात्मक-

**टिप्प०**—1 रसगंगाधरकृतस्तु—'आमुखप्रतीताभ्यां निन्दास्तुतिभ्यां स्तुतिनिन्दयोः क्रमेण पर्यवसानं व्याजस्तुतिः' इत्याहुः; अर्धं दानव–' इत्युदाहरणं प्रत्युद्धृत्य 'साधु दूति' इति पद्ये साधुकारिणीत्वमिव नास्मिन्पद्ये सर्वज्ञत्वमधीश्वरत्वं विद्युन्दङ्कुरप्रतिभमिति शक्यं वक्तुं, उपालंभरूपाया निन्दाया अनुत्थानापत्तेः प्रतीतिविरोधाच्च' इत्याहुः ।

---

पाठा०—१ 'पापिनं नयसे'.

गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां, मां च भिक्षाटनम् ॥

अत्राद्योदाहरणे सप्तसप्तिपदगतश्लेषमूलनिन्दाव्याजेन स्तुतिर्व्यज्यते । द्वितीयोदाहरणे 'सर्वज्ञः सर्वेश्वरोऽसी'ति राज्ञः स्तुत्या व्याजरूपया 'मदीयवैदुष्यादि दारिद्र्यादि सर्वं जानन्नपि बहुप्रदानेन रक्षितुं शक्तोऽपि मह्यं किमपि न ददासी'ति निन्दा व्यज्यते । सर्वमिदं निन्दास्तुत्योरेकविषयत्वे उदाहरणम् ।

भिन्नविषयत्वे निन्दया स्तुत्यभिव्यक्तिर्यथा,—

कस्त्वं वानर !, रामराजभवने लेखार्थसंवाहको,
यातः कुत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ? ।
बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥

अत्र हनुमन्निन्दया इतरवानरस्तुत्यभिव्यक्तिः ॥

स्तुत्या निन्दाभिव्यक्तिर्यथा,—

यद्वक्त्रं मुहुरीक्षसे न, धनिनां ब्रूषे न चाटून्मृषा,
नैषां गर्ववचः शृणोषि, न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि, परं निद्रासि निद्रागमे,
तन्मे ब्रूहि कुरङ्ग ! कुत्र भवता किं नाम तप्तं तपः ? ॥

---

स्यैकस्य विग्रहस्य प्रसिद्धेः । एवं गिरिजयाप्यवशिष्टार्धमाहृतम् । हे देव राजन् ! इत्थमुक्तप्रकारेण जगतीतले स्मरहरस्याभावे समुन्मीलति प्रकाशमाने सति गङ्गा सागरं प्रत्यगमदित्याद्यन्वयः । नागाधिपः शेषः । क्ष्मातलं पातालम् । त्वामिति पूर्वान्वितम् ॥ **वैदुष्यादीति** । विद्वत्तादीत्यर्थः । आदिना तपःशीलादिपरिग्रहः । 'दारिद्र्यादी'त्यादिपदेन कुटुम्बबाहुल्यादिपरिग्रहः । न चात्र राजवर्णनप्रस्तावे कथं स्तुतेर्व्याजरूपत्वमिति वाच्यम् । स्तुतिपर्यवसानविवक्षायां स्वकीयभिक्षाटनोद्घाटनस्यासंगतत्वेन स्तुतेरुक्तनिन्दारूपोपालम्भपर्यवसानस्यानुभवसिद्धस्याविरुद्धत्वात् ॥ **कस्त्वमिति** । अङ्गदं प्रति कस्यचिद्राक्षसस्य प्रश्नः । 'रामरूपस्य राज्ञो भवने लेखार्थस्य संदेशस्य वाहकोऽस्मी'त्युत्तरम् । पुरा पूर्वमागतो निर्दग्धलङ्कापुरः स हनुमान् कुत्र यातः ?—इति पुनः पूर्वस्य प्रश्नः । 'बद्ध' इत्याद्युत्तरार्धमङ्गदस्योत्तरम् । राक्षसस्य रावणस्य सूनुना बद्ध इति हेतोः कपिभिर्वानरैः सम्यक् ताडितस्तर्जितः स वनमृगो हनुमान् व्रीडया लज्जया आत्तः प्राप्तः पराभवो येन तादृशः कुत्र यात इति न ज्ञायत इत्यन्वयः ॥ **यदिति** । हे कुरङ्ग ! यद्यस्माद्धनिनां मुखं मुहुर्मुहुर्वारंवारं नेक्षसे न पश्यसि; मृषा मिथ्या चाटून् प्रियशब्दान्न वदसि; यदिति सर्वत्र संबध्यते । एषां धनिनां गर्वयुक्तवचनं

---

पाठा०—१ 'संताडितो भर्त्सितः'.
२ 'वक्त्रं'.

अत्र हरिणस्तुत्या राजसेवानिर्विण्णस्यात्मनो निन्दाभिव्यज्यते। अयमप्रस्तुतप्रशंसाविशेष इत्यलंकारसर्वस्वकारः। तेन हि सारूप्यनिबन्धनाप्रस्तुतप्रशंसोदाहरणान्तरं वैधर्म्येणापि दृश्यते। यथा,—

धन्याः खलु वने वाताः कह्लाराः[1] सुखशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥

अत्र 'वाता धन्या' इत्यप्रस्तुतार्थात् 'अहमधन्य' इति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयत इति व्युत्पादितम्। इयमेवाप्रस्तुतप्रशंसा न कार्यकारणनिबन्धनेति दण्डी। यदाह (काव्यादर्शे २।३४०)—

'अप्रस्तुतप्रशंसा स्यादप्रकाण्डे तु या स्तुतिः।
सुखं जीवन्ति हरिणा वनेष्वपरसेविनः॥
अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः।
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते॥
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना॥' इति।

वस्तुतस्त्वत्र व्याजस्तुतिरित्येव युक्तम्; स्तुत्या निन्दाभिव्यक्तिरित्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषसद्भावात्। अन्यथा प्रसिद्धव्याजस्तुत्युदाहरणेष्वप्यप्रस्तुताभ्यां निन्दा-स्तुतिभ्यां प्रस्तुते स्तुतिनिन्दे गम्येते इत्येतावता व्याजस्तुतिमात्रमप्रस्तुतप्रशंसा स्यात्। एवं चानया प्रक्रियया यत्रान्यगतस्तुतिविवक्षयान्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव। अन्यस्तुतिव्याजेन तदन्यस्तुतिरित्यर्थानुगमसद्भावात्।

---

न शृणोषि; तान्धनिकान् प्रति आशया धनाशया न धावसि; परं केवलं काले क्षुधासमये खादसि भक्षयसि; निद्राया आगमे च निद्रां प्राप्नोषि, तत्तस्मात्कुत्र तीर्थे किं नाम तपस्तप्तं तद्ब्रूहीत्यन्वयः। निर्विण्णस्य खिन्नस्य। 'तेन ही'त्यस्य इति 'व्युत्पादित'मित्यग्रेतनेनान्वयः। **धन्या इति**। कह्लारं जलपुष्पविशेषः, तत्संबन्धिनः काह्लाराः सुखयन्तीति सुखाश्च ते शीतलाश्चेत्यर्थः॥ **अप्रस्तुतेति**। अप्रकाण्डे अप्रस्तावे। तथा चाप्रस्तुता चासौ प्रशंसा चेति व्युत्पत्तिरिति भावः। न परसेविनीऽपरसेविनः। प्रशस्यते स्तूयते। मतद्वयेऽप्यस्वरसबीजं दर्शयति— **वस्तुतस्त्विति**। **अभिव्यक्तिरिति**। योऽप्रस्तुतप्रशंसातो वैचित्र्यस्य विषय आलम्बनभूतो विशेष इत्यन्वयः। अन्यथा ततो वैचित्र्येऽपि तदन्तर्भावाङ्गीकारे॥ **एवं चेति**। अन्यगतस्तुतिनिन्दाभ्यामन्यगतनिन्दास्तुत्यभि-

---

**टिप्प०**—1 इदं दशरथस्य वचनम्। अत्र वाता धन्या इति वैधर्म्येण, अहं त्वधन्य इति प्रस्तुतोऽर्थः प्रतीयते। वाक्यार्थस्य संभवासंभवोभयरूपत्वेन त्रिविधोऽयमलंकारः। 'कल्हारस्पर्शशीतलाः' इति समीचीनतरः पाठः।

यथा,—

शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि! येन तवाधरपाटलं दशति विम्बफलं शुकशावकः॥

अत्र शुकशावकस्तुत्या नायिकाधरसौभाग्यातिशयस्तुतिर्व्यज्यते॥ ७१॥

---

## व्याजनिन्दालंकारः ३१

**निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते।
विधे! स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः॥ ७२॥**

अत्र हरनिन्दया विषमविपाकं संसारं प्रवर्तयतो विधेरभिव्यङ्ग्या निन्दा व्याजनिन्दा।

यथा वा,—

विधिरेव विशेषगर्हणीयः, करट! त्वं रट, कस्तवापराधः?।
सहकारतरौ चकार यस्ते सहवासं सरलेन कोकिलेन॥

अन्यस्तुत्यान्यस्तुत्यभिव्यक्तिरिति पञ्चमप्रकारव्याजस्तुतिप्रतिबन्दीभूतेयं व्याजनिन्दा। ननु यत्रान्यस्तुत्यान्यस्तुतेरन्यनिन्दयान्यनिन्दायाश्च प्रतीतिस्तत्र

---

व्यक्त्योर्व्याजस्तुतित्वसिद्धौ चेत्यर्थः। प्रक्रियया प्रकारेण॥ **शिखरिणीति**। नायिकां प्रति नायकस्योक्तिः। हे तरुणि! असौ शुकबालकः। नाम वितर्के। क नु कस्मिञ्शिखरिणि पर्वते कियत्कालं चिरं किमभिधानं किंनामकं तपः अकरोत्? येन हेतुना तवाधरवत्पाटलं रक्तवर्णं विम्बफलं दशतीत्यन्वयः॥ ७१॥

इत्यलंकारचन्द्रिकायां व्याजस्तुत्यलंकारप्रकरणम्॥ ३०॥

व्याजनिन्दां लक्षयति—**निन्दाया इति**। यत्रान्यनिन्दयान्यस्य निन्दाया अभिव्यक्तिः पर्यवस्यति सा व्याजनिन्दा, इतरनिन्दाव्याजेन निन्देति व्युत्पत्तेः। **विधे इति**। हे विधे ब्रह्मन्! प्राक् पूर्वं ते तवैकमेव शिरो यः अहरत् अच्छिनत् स एव अर्थात् हरो निन्द्य इत्यन्वयः। निन्दयेत्यभिव्यङ्ग्येत्यनेनान्वितम्। निन्दयाभिव्यङ्ग्या विधेर्निन्दा व्याजनिन्देत्यन्वयः। विषमविपाकं दारुणपरिणामम्। **विधिरेवेति**। विशेषतो गर्हणीयः निन्दनीयः। हे करट काक! त्वं रट रटनं कुरु; योऽसौ विधिः आम्रवृक्षे सरलेन सौम्येन कोकिलेन सहवासं तव चकारेत्यन्वयः। ननु केनाप्यालंकारिकेणानुक्ताया व्याजनिन्दायाः कथमलंकारत्वेनाङ्गीकरणमित्याशङ्क्याह—**प्रतिबन्दीति**। तुल्ययुक्त्या प्रतिबन्दीस्थानीयेत्यर्थः। तथा च स्तुतिवन्निन्दायामप्यप्रस्तुतप्रशंसातो वैचित्र्यविशेषात्तदनन्तर्भावे व्याजस्तुतौ चार्थानुगमाभावादनन्तर्भावे पृथगलंकारताया औचित्यापातत्वात्प्राचीनैरनुक्तापि स्वीकर्तुमुचितेत्याशयः। प्रागुक्तयोः 'एकः कृती शकुन्तेष्वि'ति, 'आबद्धकृत्रिमे'त्यनयोरप्रस्तुतप्रशंसोदाहरणत्वासंगतिमाशङ्कते—**नन्विति**। क्रोडीकारः स्वविषयीकरणम्। अन्यत्र लब्धात्मकस्यालंकारद्वयस्य क्वचित्संकरेऽपि न दोष इत्याशयेन समाधत्ते—**यत्रेति**। एतच्च इत्यादावित्यनेनान्वितम्॥ अस्या अप्र-

व्याजस्तुतिव्याजनिन्दालंकारयोरभ्युपगमे स्तुतिनिन्दारूपा प्रस्तुतप्रशंसोदाहरणेष्वप्रस्तुतप्रशंसा न वक्तव्या। तेषामपि व्याजस्तुति-व्याजनिन्दाभ्यां क्रोडीकारसंभवादिति चेत्,–उच्यते; यत्राप्रस्तुतवृत्तान्तादस्तुतिनिन्दारूपात्तत्सरूपः प्रस्तुतवृत्तान्तः प्रतीयते, 'अन्तश्छिद्राणि भूयांसी'त्यादौ, तत्र लब्धावकाशा सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसा, अत्रापि वर्तमाना न निवारयितुं शक्या। अन्यस्तुत्याऽन्यस्तुतिरन्यनिन्दयाऽन्यनिन्देत्येवं व्याजस्तुतिव्याजनिन्दे अपि संभवतश्चेत्,–कामं ते अपि संभवेताम्; न त्वस्याः परित्यागः। यद्यपि 'विधिरेव विशेषगर्हणीय' इति श्लोके विधिनिन्दया तन्मूलकाकनिन्दया चाविशेषज्ञस्य प्रभोस्तेन च विद्वत्समतया स्थापितस्य मूर्खस्य च निन्दा प्रतीयत इति तत्र सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसाप्यस्ति, तथापि सैव व्याजनिन्दामूलेति प्रथमोपस्थिता सापि तत्र दुर्वारा, एवं च व्याजनिन्दामूलकव्याजनिन्दारूपेयमप्रस्तुतप्रशंसेति चमत्कारातिशयः; एवमेव व्याजस्तुतिमूलकव्याजस्तुतिरूपाप्यप्रस्तुतप्रशंसा दृश्यते।

यथा वा,—

लावण्यद्रविणव्ययो न गणितः, क्लेशो महानर्जितः,
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।
एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता,
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता? ॥

अत्राप्रस्तुतायास्तरुण्याः सृष्टिनिन्दाव्याजेन तन्निन्दाव्याजेन च तत्सौन्दर्यप्रशंसा प्रशंसनीयत्वेन कविविवक्षितायाः स्वकवितायाः कविनिन्दाव्याजेन तन्निन्दाव्याजेन च शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यति। अस्य श्लोकस्य वाच्यार्थविषये यद्यपि नात्यन्तसामञ्जस्यं, न हीमे विकल्पा वीतराग-

---

स्तुतप्रशंसायाः। सैव अप्रस्तुतप्रशंसैव॥ **लावण्येति**। इमां तन्वीं तन्वता सृजता वेधसा चेतसि कोऽर्थः कामनाविषयभूतो विनिहितोऽभिसंहितः? किं प्रयोजनमुद्दिश्येयं निर्मितेत्यर्थः। नन्वनायासेनातिसुन्दरतन्वीनिष्पत्तिरेव प्रयोजनं तदभावेऽपि वा लीलामात्रेण तन्निर्माणं स्यादत आह—**लावण्येत्यादि**। यतो लावण्यरूपस्य द्रविणस्य धनस्य व्ययो न गणितः महान्क्लेशोऽर्जितः कृतः। स्वेच्छाचारिणो जनस्य उदासीनस्यापि हृदये चिन्तैव ज्वरो निर्मितः। एषापि वराकी दीना स्वगुणानुरूपस्य वरस्याभावाद्धतेव हता नष्टप्राया। तथा च बह्वायाससाध्यत्वादनिष्टानुबन्धित्वाच्च न तन्व्याः प्रयोजनत्वं, नापि लीलामात्रेण तन्निर्माणं च संभवतीति भावः। तन्निन्दाव्याजेन तरुणीनिन्दाव्याजेन। तत्सौन्दर्यप्रशंसा शब्दार्थचमत्कारातिशयप्रशंसायां पर्यवस्यतीत्यन्वयः। तन्निन्दाव्याजेन स्वकवितानिन्दाव्याजेन। कविता सौन्दर्यरूपा। प्रस्तुतार्थस्यात्यन्तमस्फुटत्वात् कथमस्य पद्यस्य तत्परत्वमित्याशङ्कामपनेतुं भूमिकामारचयति—**अस्येत्यादि**।

---

पाठा०—१ 'संहृतोऽत्र विधिना तन्वीं'. २ 'सृष्टिनिन्दा'.

स्येति कल्पयितुं शक्यम् । रसाननुगुणत्वात्; वीतरागहृदयस्याप्येवंविधविषये-ष्वप्रवृत्तेश्च । नापि रागिण इति युज्यते । तदीयविकल्पेषु वराकीति कृपणता-लिङ्गितस्य हतेत्यमङ्गलोपहितस्य च वचसोऽनुचितत्वात्तुल्यरमणाभावादित्यस्या-त्यन्तमनुचितत्वाच्च स्वात्मनि [1]तदनुरूपरूपासंभावनायामपि रागित्वे हि पशु-प्रायता स्यात्; तथापि विवक्षितप्रस्तुतार्थतायां न किंचिदसामञ्जस्यम् । अत एवास्य श्लोकस्याप्रस्तुतप्रशंसापरत्वमुक्तं प्राचीनैः । वाच्यासंभवेऽप्य-प्रस्तुतप्रशंसोपपत्तेरिति ॥ ७२ ॥

---

## आक्षेपालंकारः ३२

**आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।**
**[2]चन्द्र ! संदर्शयात्मानमथवास्ति प्रियामुखम् ॥ ७३ ॥**

अत्र प्रार्थितस्य चन्द्रदर्शनस्य प्रियामुखसत्त्वेनानर्थक्यं विचार्याथवेत्यादि-सूचितः प्रतिषेध आक्षेपः ।

यथा वा,—

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः ! ।
यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं, नास्ति क्षतिः क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥

---

**रसाननुगुणत्वादिति** । वीतरागे शृङ्गारस्यासंभवादिति भावः । ननु शृङ्गा-रासंभवेऽपि तन्वीनिर्माणनिन्दया शान्तरसपरिपोषादस्त्येव रसानुगुणत्वमत आह—**वीतरागेति** । नापि रागिण इत्यनन्तरमिमे विकल्पा इत्यनुषज्यते ॥ **विवक्षितेति** । स्वकवितासौन्दर्यरूपेत्यर्थः । अत एव वाच्यार्थासामञ्जस्यादेव । वाच्यासंभवेऽपि वाच्यसामञ्जस्यासंभवेऽपि । तथा च वाच्यार्थासामञ्जस्यमेवा-स्फुटेऽपि प्रस्तुतार्थे तात्पर्यं गमयतीति भावः ॥ ७२ ॥

इत्यलंकारचन्द्रिकायां व्याजनिन्दालंकारप्रकरणम् ॥ ३१ ॥

**आक्षेप इति** । स्वयमुक्तस्यार्थस्य किंचिन्निमित्तमभिसंधाय प्रतिषेध आक्षेपः ॥ **सूचित इति** । पक्षान्तरपरिग्रहस्य पूर्वपक्षप्रतिक्षेपनियतत्वादिति भावः । न चात्र कैमर्थ्यरूपपञ्चमप्रतीपप्रभेदेन गतार्थत्वं शङ्कनीयम् । तस्यात्र प्रतिषेधप्रति-निमित्तत्वेनाप्राधान्यात् । असंदिग्धमुदाहरति—**साहित्येति** । हे कविश्रेष्ठाः ! साहित्यसमुद्ररूपाणां भारतादीनां मन्थनादिव परिशीलनादुत्थितमुत्पन्नं कर्णयो-रमृतमिवाह्लादकं काव्यं रक्षत । यद्यस्मात्तस्य लुण्ठनार्थं दैत्या इव काव्यरूपस्यार्थस्य वित्तस्य चोराः प्रगुणीभवन्ति बहुलीभवन्तीत्यन्वयः ॥ **गृह्णन्त्विति** । यदि वेत्य-

---

पाठा०—१ 'तदनुरूपतासंभावनायां'. २ 'चन्द्रं सन्द'.

अत्र प्रथमश्लोकेन प्रार्थितस्य काव्यार्थचोरेभ्यो रक्षणस्य स्वोल्लिखितवैचित्र्याणां समुद्रगतरत्नजातवदक्षयत्वं विचिन्त्य प्रतिषेध आक्षेपः ॥ ७३ ॥

**निषेधाभासमाक्षेपं बुधाः केचन मन्वते ।**
**नाहं[1] दूती तनोस्तापस्तस्याः कालानलोपमः ॥ ७४ ॥**

केचिदलंकारसर्वस्वकारादय इत्थमाहुः—न निषेधमात्रमाक्षेपः किंतु यो निषेधो बाधितः सन्नर्थान्तरपर्यवसितः कंचिद्विशेषमाक्षिपति स आक्षेपः। यथा दूत्या उक्तौ 'नाहं दूती'ति निषेधो बाधितत्वादाभासरूपः संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपति ।

यथा वा,—

नरेन्द्रमौले ! न वयं राजसंदेशहारिणः ।
जगत्कुटुम्बिनस्तेऽद्य न शत्रुः कश्चिदीक्ष्यते ॥

अत्र संदेशहारिणामुक्तौ 'न वयं संदेशहारिणः' इति निषेधोऽनुपपन्नः। 'संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन् सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः, किंतु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीयाः' इति विशेषमाक्षिपति ॥ ७४ ॥

---

थवेत्यनेन समानार्थम् । लुप्तेषु अपहृतेषु ॥ **स्वोल्लिखितेति** । स्वयमुद्भावितेत्यर्थः। वैचित्र्याणामर्थवैचित्र्याणाम् ॥ ७३ ॥ अर्थान्तरपर्यवसितः अर्थान्तरप्रतियोगिकत्वेनावसितः । विशेषं व्यङ्ग्यार्थविशेषम् ॥ **संघटनेति** । संयोजनकाले उचितं यत्कैतववचनं मिथ्यावचनं तस्य परिहारस्तेनोपलक्षिते यथार्थवादित्वे इत्यर्थः । 'नाहं दूती'त्यत्र हि 'दूती'पदेन दूतीगतमिथ्यावादित्वविशिष्टं लक्ष्यते । तदभावस्तु यद्यपि न यथार्थवादित्वं तथापि तदुपलक्ष्यत्वात्तत्पर्यवसानोक्तिः ॥ **नरेन्द्रेति** । इयं संधिकरणार्थमागतानां दूतानामुक्तिः । नरेन्द्राणां राज्ञां मौलिः श्रेष्ठः ॥ **संधीति** । संधिकाले उचितं यत्कैतववचनं तत्परिहारेणोपलक्षिते इति पूर्ववदर्थः । अत्राहुः—"संदेशहारिषु तन्निषेधस्य बाधात् 'संदेशहारि'पदेन कैतववचनप्रयोक्तृत्वविशिष्टं लक्ष्यते । तन्निषेधेन च सत्यवादित्वरूपो विशेषो व्यज्यत इत्ययमेव निषेधेन विशेषाक्षेपो न तु सर्वजगतीपालकस्येत्यादिर्विशेषो निषेधेन केवलेनाक्षेप्तुं शक्यते । तस्य 'जगत्कुटुम्बिन' इत्युत्तरार्धगम्यत्वात् । एवं स्थिते कथमुच्यते तव न कश्चिदपीत्यादि ?" इति,—तत्रोच्यते,—**न वयमिति** । निषेधाभावे केवलादुत्तरार्धान्नोक्तविशेषावगतिः स्यात् । संधिकालोचितकैतववचनत्वेनैव संभाव्यमानत्वात् । अपि तु तत्कालीनसंध्यभिप्रायमात्रावगमः । निषेधेन तु तत्परिहारे युक्त उक्तविशेषावगम इत्यनुभवसाक्षिकमेतत् । सत्यवादित्वादिकं तूक्तविशेषे व्यञ्जनीये द्वारभूतं न तु तदेव । विशेषरूपमचमत्कारि-

---

पाठा० —१ 'नायं दूति'.

**आक्षेपोऽन्यो[1] विधौ व्यक्ते निषेधे च तिरोहिते ।**
**गच्छ गच्छसि चेत्कान्त! तत्रैव स्याज्जनिर्मम ॥ ७५ ॥**

अत्र गच्छेति[2] विधिर्व्यक्तः । मा गा इति निषेधस्तिरोहितः । कान्तोद्देश्य-देशे निजजन्मप्रार्थनयात्ममरणसंसूचनेन गर्भीकृतः ।

यथा वा,—

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥

अत्रापि 'न चिरं मम तापाय' इति स्वमरणसंसूचनेन गमननिषेधो गर्भीकृतः ॥ ७५ ॥

---

## विरोधाभासालंकारः ३३

**आभासत्वे[2] विरोधस्य विरोधाभास[3] इष्यते ।**
**विनापि तन्वि! हारेण वक्षोजौ तव हारिणौ ॥ ७६ ॥**

---

त्वात्; अत एव 'नाहं दूती'त्यत्र वस्तुवादित्वादिर्विशेषो व्यज्यत इत्यलंकारसर्वस्वकारः । वस्तुवादित्वमादिर्द्वारभूतं यस्य तादृशो विशेष इति तदर्थ इति । एतेन 'नाहं दूती'ति पूर्वोदाहरणमपि व्याख्यातम् ॥ ७४ ॥ अस्यैव प्रभेदान्तरमाह—**आक्षेपोऽन्य इति ।** प्रार्थनया मरणसूचनद्वारेण । गर्भितो व्यङ्ग्यत्वेनान्तर्भावितः । एतच्च तिरोहित इत्यस्यार्थकथनम् । तदेवमपह्नुतिभिन्नत्वे सति चमत्कारकारितानिषेधत्वं सामान्यलक्षणं बोध्यम् ॥ ७५ ॥

इत्यलंकारचन्द्रिकायामाक्षेपालंकारप्रकरणम् ॥ ३२ ॥

**आभासत्व इति ।** विरोधस्याभासत्वे आपाततो भासमानत्वे सति विरोधा-

---

**टिप्प०**—1 मम्मटस्तु–'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया । वक्ष्यमाणोक्तिविषयः स आक्षेपो द्विधा मतः' इति भूतभविष्यतोरेव प्रतिषेधोक्तिराक्षेप इत्याह । दण्डी हि—'प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा । अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता' इति धर्मधर्मिकारणादीनामानन्त्यादपरिच्छिन्नतामाह । 2 हे कान्त प्रियतम! चेत् यदि गच्छसि तर्हि गच्छ; विदेशमिति शेषः । मया प्रतिरोधो न क्रियते, किंतु भवान् यत्र गतो भूयात् तत्रैव ममापि जन्म भूयात्, वदामीति शेषः । अत्र गमनस्य विधिरूपस्य 'जन्म भूयात्' इत्यनेन विधिरूपेणैव 'त्वयि गते मया मर्तव्यम्' इति मरणसूचनं गर्भीकृतम् । 3 'विरुद्धाभासत्वं विरोधः' इति सूत्रयति **वामनः** । **काव्यप्रकाशे** त्वयं विरोधालंकारनाम्ना निरूपितः; तल्लक्षणं चोक्तं–'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति । **काव्यादर्शे**ऽपि–'विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् । विशेषदर्शनायैव स विरोधः स्मृतो यथा' इत्युक्तम् ।

---

**पाठा०**—१ 'अन्यविधौ व्यक्ते प्रतिषेधतिरोहिते'. २ 'आभासत्वं'.

अत्र 'हाररहितावपि हारिणौ हृद्यौ' इति श्लेषमूलको विरोधाभासः।
यथा वा,—

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥

अत्र विरोधसमाधानोत्प्रेक्षाशिरस्को विरोधाभास इति पूर्वस्माद्भेदः ॥७६॥

---

## विभावनालंकारः ३४

### विभावना विनापि स्यात्कारणं कार्यजन्म चेत्।
### अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम् ॥ ७७ ॥

---

भासो नामालंकारः। आभासत इत्याभासः। विरोधश्चासावाभासश्चेति व्युत्पत्तेः। ईषदर्थकेन चाङा भानस्यापातरूपत्वमर्थान्तरपरिहार्यत्वरूपं बोध्यते। तथा चैकाधिकरण्येन प्रतीयमानयोः कार्यकारणत्वेनागृह्यमाणयोर्धर्मयोराभासमानापर्यवसन्नविरोधत्वं लक्षणं द्रष्टव्यम्। 'शनिरशनिश्च तमुच्चैः' इत्यादावतिव्याप्तिवारणायाद्यं विशेषणम्। 'अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम्' इति विभावनावारणाय द्वितीयम्। पर्यवसितस्य विरोधस्य दोषत्वादपर्यवसन्नत्वं विरोधविशेषणमिति दिक् ॥ **श्लेषेति**। हारोऽनयोरस्तीत्यर्थे विरोधः। मनोहारिणावित्यर्थेन तत्परिहारः॥ **प्रतीपेति**। तस्मान्नलाद्भयेन कृत्वा प्रतिकूलनृपैरिव विरुद्धधर्मैरपि भेत्तृता भेदकारिता त्यक्ता किमित्युत्प्रेक्षा। यस्मात्स नलः अमित्राणां शत्रूणां जयकृदपि ओजसा मित्रस्य रवेर्जयकृत्। अथ च मित्रजिदेव न मित्रजिदिति विरोधः। चारदृष्टिरपि विचारे दृष्टिर्यस्य तादृशः, विगतचारदृगिति च विरोधः॥ **विरोधेति**। विरोधसमाधानरूपोत्प्रेक्षा शिरः प्रधानं यस्य तादृश इत्यर्थः। यत्तु विरोधसमाधानात्मिकया मुखस्थितयोत्प्रेक्षया विरोधस्योत्थानमेव भग्नमिति कथमत्र विरोधालंकार इति केनचित्सुमनसापि विभनसेवाभिहितं,—तदसारम्; विरोधमानमन्तरेण विरुद्धधर्मैरपीत्याद्युत्प्रेक्षाया एवानुत्थानेन श्लेषमूलमाभासमानं विरोधमुपजीव्यैव विरोधत्यागोत्प्रेक्षाया अर्थान्तरानुगृहीतायास्तत्समाधानत्वेन पश्चादवस्थितत्वादिति ॥ ७६ ॥

इत्यलंकारचन्द्रिकायां विरोधाभासालंकारप्रकरणम् ॥ ३३ ॥

**विभावनेति**। प्रसिद्धे कारणाभावेऽपि कार्योत्पत्तिर्विभावनालंकारः। विभाव्यते कारणान्तरं यस्यामिति व्युत्पत्तेः। कारणाभावश्च शाब्द आर्थो वेति सर्वत्र लक्षणसमन्वयो बोध्यः। एतदेव तन्त्रेण सकलविभावनाप्रकारसाधारणं सामान्य-

---

**टिप्प०**—1 'प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित्कारणान्तरम्। यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना' इति लक्षणमुक्तमन्यत्र। 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इत्यपि।

---

**पाठा०**—१ 'अपि लाक्षा'.

अत्र लाक्षारसासेकरूपकारणाभावेऽपि रक्तिमा कथितः । स्वाभाविकत्वेन विरोधपरिहारः ।

यथा वा,—

अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥

अत्र पानादिप्रसिद्धहेत्वभावेऽपि क्षीबत्वादि निबद्धम् । विभाव्यमानशरत्समयहेतुकत्वेन विरोधपरिहारः ।

यथा वा,—

वरतनुकवरीविधायिना सुरभिनखेन नरेन्द्रपाणिना ।
अवचितकुसुमापि वल्लरी समजनि वृन्तनिलीनषट्पदा ॥

अत्र वल्लर्यां पुष्पाभावेऽपि भृङ्गालिङ्गनं निबद्धम् । तत्र वरतनुकवरीसंक्रान्तसौरभनरपतिनखसंसर्गरूपं हेत्वन्तरं विशेषणमुखेन दर्शितमिति विरोधपरिहारः ॥ ७७ ॥

**हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ।**
**अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥ ७८ ॥**

अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वं तीक्ष्णत्वादिगुणवैकल्यम् ।

यथा वा,—

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदस्रयन्ति पान्थानामस्पृशन्तो विलोचने ॥

---

लक्षणमाद्यप्रकारविशेषलक्षणं च बोध्यम् । तत्राद्यं दर्शितमेव । द्वितीयं तु कारणान्विताभावकथनपूर्वकं कार्योत्पत्तिकथनमित्युदाहरणविशेषबलादेव गम्यत इति विविच्य न दर्शितम् । प्रतिबन्धके सति कार्योत्पत्तिरूपे तृतीयप्रकारेऽतिव्याप्तेर्वारणाय–अन्वितेति । तत्र प्रतिबन्धकस्य वस्तुतः कारणाभावरूपस्य कथनेऽपि न कारणान्वितत्वेन कथनमिति तन्निरासः । प्रकारपञ्चकेऽपि कारणान्विताभावस्यार्थतो गम्यत्वात् कथनेति ॥ **अप्यलाक्षेति** । लाक्षारसेन आसमन्तात्सिक्तं लाक्षारसासिक्तम् । पश्चान्नञ्समासः । तस्याः कामिन्याः ॥ **अपीतेति** । अपीताः पानशून्याः क्षीबा मत्ताः कादम्बाः कलहंसा यत्र । तथा असंमृष्टं संमार्जनशून्यममलमम्बरमाकाशं यत्र । एवमप्रसादितं वस्त्रगालनकतकक्षोदप्रक्षेपादिना यत्प्रसादनं तच्छून्यं सूक्ष्मं लघ्वम्बु यत्र, एवंभूतं जगन्मनोहरमासीदित्यन्वयः । परमार्थतस्तु 'शुद्धाम्बु' इत्येव काव्यादर्शे दृष्टः पाठः ॥ **विभाव्यमानेति** । वर्ण्यमानेत्यर्थः ॥ **वरेति** । वरतनोः केशपाशरचनासंपादकेनात एव सुरभिनखेन राज्ञो हस्तेनावचितकुसुमा लूनपुष्पापि लता वृन्तासक्तभ्रमरा संजातेत्यर्थः ॥ ७७ ॥ **हेतूनामिति** । असमग्रत्वे हेतुतावच्छेदकस्य धर्मस्य तत्संबन्धस्य वा वैकल्ये सति । अस्त्रैरिति धर्मवैकल्योदाहरणम् । संबन्धवैकल्ये उदाहरति–**उद्यानेति** ।

अत्र बाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम् । इमां विशेषोक्तिरिति दण्डी व्याजहार । यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चम्पकरेणूनामुद्दीपकतातिशयरूपश्च विशेषः ख्याप्यत इति । अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता ॥ ७८ ॥

कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ।
नरेन्द्रानेव ते राजन्! दशत्यसिभुजङ्गमः ॥ ७९ ॥

अत्र नरेन्द्रा विषवैद्याः सर्पदंश(विष?)प्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः ।

यथा वा,—

चित्रं तपति राजेन्द्र! प्रतापतपनस्तव ।
अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥ ७९ ॥

अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ।
शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥ ८० ॥

अत्र 'शङ्ख'शब्देन कमनीयः कामिनीकण्ठस्तत्रीनिनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात् कार्यजन्म ।

यथा वा,—

तिलपुष्पात्समायाति वायुश्चन्दनसौरभः ।
इन्दीवरयुगाच्चित्रं निःसरन्ति शिलीमुखाः ॥ ८० ॥

---

विलोचने कर्मभूते । उदस्रयन्ति । उद्गताश्रूणि कुर्वन्तीत्यर्थः ॥ **क्रियेति** । धात्वर्थत्वाभिप्रायस्पर्शनस्य संयोगरूपत्वात् । इमां द्वितीयप्रकाररूपां विभावनाम् ॥ **व्याजहारेति** । 'गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् । विशेष्यदर्शनायैव सा विशेषोक्तिरिष्यते ॥' इति ग्रन्थेन व्यवहृतवानित्यर्थः । एतेन प्रथमप्रकाराद्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमिति वदन्नपास्तः । वैलक्षण्याभावे हि प्राचामलंकारान्तरत्वेन कथनमत्यन्तानुपपन्नमेव स्यात् । अस्ति च स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने सहृदयसिद्धो विच्छित्तिविशेषः । 'प्रकारान्तरास्वीकारे लाघव'मिति तु स्वीयलाघवोद्भावनमिति कृतमधिकेन ॥ ७८ ॥ **कार्योत्पत्तिरिति** । प्रतिबन्धके सत्यपि कार्योत्पत्तिकथनं तृतीया विभावना ॥ **नरेन्द्रानिति** । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति विश्वः । असिः खड्ग एव भुजंगमः ॥ **चित्रमिति** । प्रताप एव तपनः सूर्यः । आतपत्रं छत्रं, तद्रहितमनातपत्रम्; आतपत्रेण सहितं सातपत्रम् ॥ ७९ ॥ अकारणादित्यस्य सुगमत्वान्न व्याख्यानम् ॥ ८० ॥

---

पाठा०—१ 'सत्यतिप्रति'.

विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना ।
शीतांशुकिरणास्तन्वीं हन्त संतापयन्ति ताम् ॥ ८१ ॥

अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता ।

यथा वा,—

उदिते कुमारसूर्ये कुवलयमुल्लसति भाति न क्षत्रम् ।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि ॥

यथा वा,—

अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् ।
श्रुतप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥

पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम् ; इह तु श्रुतिप्रणयित्वरूपागन्तुकगुणप्रयुक्तमिति भेदः ॥ ८१ ॥

कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना ।
यशः पयोराशिरभूत्करकल्पतरोस्तव ॥ ८२ ॥

यथा वा,—

जाता लता हि शैले जातु लतायां न जायते शैलः ।
संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥ ८२ ॥

---

**उदित इति** । कस्यचिद्राजकुमारस्य प्रतापवर्णनम् । कुमाररूपे सूर्ये उदिते सति कोः पृथिव्या वलयं मण्डलमेव कुवलयं कुमुदमुल्लासं प्राप्नोति । क्षत्रं क्षत्रियकुलं न भाति । अथ च नक्षत्रं भातीति चित्रम् । तथा परेषां राजकुमाराणां पाणिकमलानि मुकुलीभवन्ति संकुचन्ति । अञ्जलिबन्धात्तदाकृतीनि भवन्तीत्यर्थः ॥ **अविवेकीति** । विवेको विशेषदर्शनं, विश्लेषश्च तच्छून्यम् । परस्परं संश्लिष्टत्वात् । कुचयुगं कर्तृ । जगत्त्रयं हन्तु नाम । श्रुतिर्वेदः कर्णश्च । प्रणयः परिचयः ॥ ८१ ॥ **यश इति** । कर एव दातृत्वात्कल्पतरुः । अत्र पयोधिजन्यात्कल्पतरोः कारणस्य पयोधेरुत्पत्तिः षष्ठी विभावना ॥ **जातेति** । जातु कदाचित् । कनकलतेव कनकलता कामिनी । गिरिद्वयमिव स्तनद्वयम् ॥ ८२ ॥

इत्यलंकारचन्द्रिकायां विभावनालंकारप्रकरणम् ॥ ३४ ॥

---

**टिप्प०**–1 'प्रसिद्धहेतुव्यावृत्त्या यत्किंचित्कारणान्तरम् । यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना' इति दण्डी लक्षणं कृतवान् । प्रकाशकारादयस्तु 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति कारणविरहेऽपि फलोत्पत्तिवर्णनं विभावनेत्याहुः.

---

**पाठा०**—१ 'तन्वी हन्त'. २ 'माम्'. ३ 'कार्याच्चेत्कारणोत्पत्तिर्दृष्टा'. ४ 'पयोधिरभवत्करः'.

## विशेषोक्त्यलंकारः ३५

**कार्याजनिर्विशेषोक्तिः[1] सति पुष्कलकारणे ।**
**हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ॥ ८३ ॥**

यथा वा ( ध्वन्या. १।१३ ),—

अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ८३ ॥

---

## असंभवालंकारः ३६

**असंभवो[2]ऽर्थनिष्पत्तेरसंभाव्यत्व[1]वर्णनम् ।**
**को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥ ८४ ॥**

यथा वा ( भल्लटशतके ),—

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ८४ ॥

---

विशेषोक्तिं लक्षयति—**कार्याजनिरिति** । पुष्कले सहकारिसंपन्ने कारणे सति । प्रसिद्धकारणसमूहे सतीति यावत् । कार्यस्याजनिरनुत्पत्तिर्विशेषोक्तिः । विशेषस्यानुत्पत्तिनिमित्तस्योक्तिरवगतिर्यत्रेति व्युत्पत्तेः । **अनुरागेति** । अनुरागो रक्तिमा, रतिश्च । पुरःसरोऽग्रवर्ती, आज्ञाकरश्च । पूर्वोदाहरणेऽनुक्तिनिमित्ता; इह दैवगतिवैचित्र्यस्य निमित्तस्योपादानादुक्तनिमित्तेति भेदः ॥ ८३ ॥

इत्यलंकारचन्द्रिकायां विशेषोक्त्यलंकारप्रकरणम् ॥ ३५ ॥

**असंभव इति** । कस्यचित्पदार्थस्य निष्पत्तेरसंभावनीयत्ववर्णनमसंभवो नामालंकारः । गोपशिशुको गोपालबालकः । निन्दायां स्वार्थे वा कप्रत्ययः । उत्पाटयेदुद्धरेत् ॥ **अयमिति** । वारां जलानां निलयः स्थानम् । तृष्णा पिपासा अर्थाभिलाषश्च । तरलितं चञ्चलीकृतम् । श्रित आश्रितः मुनिरगस्त्यः एनं समुद्रं

---

**टिप्प०**—1 मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः; 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति प्राह **मम्मटः** । 'विशेषस्य नाम नवीनप्रकारस्योक्तिर्विशेषोक्तिः' इति केचित्; अन्ये त्वस्यास्त्रैविध्यं प्रतिपादयन्ति । **दण्ड्यपि**—'गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् । विशेषदर्शनायैव सा विशेषोक्तिरिष्यते' इत्याह. 2 नेदमलंकारान्तरम्; किंतु विरोधाभासः; 'अयं वारामेको निलय' इत्यत्रोदाहृतपद्ये पानक्रियाया अगस्त्येन कर्त्रा समुद्रेण कर्मणा च द्रव्येण विरोधः; अगस्त्यमुनेर्नाम मनुजविशेषस्य समुद्रपानक्रियाऽसंभवात्; सोऽयं विरोधो हि मुनेस्तपःप्रभावातिरेकेण परास्त इति विरोधाभास एवेत्यन्ये ।

---

**पाठा०**—१ 'संभव्यत्व'.

## असंगत्यलंकारः ३७

**विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ।**
**विषं जलधरैः पीतं, मूर्च्छिताः पथिकाङ्गनाः ॥ ८५ ॥**

ययोः कार्यहेत्वोर्भिन्नदेशत्वं विरुद्धं तयोस्तन्निबध्यमानमसंगत्यलंकारः । यथात्र विषपान–मूर्च्छयोर्भिन्नदेशत्वम् ।

यथा वा,—

अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥

क्वचिदसांगत्यसमाधाननिबन्धनेन चारुतातिशयः ।

यथा वा ( नैषध. ३।१०६),—

अजस्रमारोहसि दूरदीर्घां संकल्पसोपानततिं तदीयाम् ।
श्वासान्स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतामवाप्य ॥

विरुद्धमिति विशेषणाद्यत्र कार्यहेत्वोर्भिन्नदेशत्वं न विरुद्धं तत्र नासंगतिः ।
यथा,—

भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् ।
तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ ८५ ॥

---

क्षणादासमन्तात् पास्यति, इदं को जानीत इत्यन्वयः । कीदृशम्? निजकरपुटी करसंपुटमेव कोटरं बिलं तद्गतम् । तथा ताम्यन्तो ग्लायन्तस्तिमयो मत्स्या मकराश्च यस्यैवंभूतमित्यर्थः ॥ ८४ ॥

इत्यलंकारचन्द्रिकायामसंभवालंकारप्रकरणम् ॥ ३६ ॥

**विरुद्धमिति** । अदृष्टमित्यर्थः । भिन्नदेशत्वं भिन्नाधिकरणत्वम् । विषं जलं, हालाहलं च । संगतस्य भावः सांगत्यं, तदभावोऽसांगत्यम् ॥ **अजस्रमिति** । दमयन्तीं प्रति हंसोक्तिः । हे दमयन्ति ! त्वं तदीयां नलसंबन्धिनीं दूरमत्यन्तं दीर्घां संकल्पो मनोरथस्तद्रूपसोपानपरम्परामजस्रं निरन्तरमारोहसि । स पुनर्नलोऽधिकं श्वासान्वर्षति मुञ्चतीति यत्तत्तव ध्यानात्त्वन्मयतां त्वत्स्वरूपतामवाप्येत्यन्वयः । अत्र चतुर्थपादेनासंगतिसमाधानम् । **भ्रूचापेति** । भ्रूचापवल्लीं भ्रूस्वरूपधनुर्लताम् । यावदिति परिमाणार्थम् । वक्रतां नयति । आकर्षतीति

---

टिप्प०—1 'कार्यकारणयोर्भिन्नदेशत्वे स्यादसंगतिः' इत्यन्यैरुक्तमसंगतिलक्षणम् । काव्यप्रकाशे तु 'भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः । युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगता ।' इत्याह मम्मटः । व्यधिकरणत्वेन प्रसिद्धयोः समानाधिकरणत्वोपनिबन्धने विरोधालंकारः; समानाधिकरणत्वेन प्रसिद्धयोर्द्वयोर्वैयधिकरण्येन निबन्धनेऽसंगतिरलंकार इति भावः ।

---

पाठा०—१ 'विरुद्धभिन्नदेशत्वं कार्यहेतो'.

अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥ ८६ ॥
अपारिजातां वसुधां चिकीर्षन् द्यां तथाऽकृथाः ।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः ॥ ८७ ॥

अत्र कृष्णं प्रति शक्रस्य सोपालम्भवचने भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतमित्येकाऽसंगतिः । पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्विविधापि श्लेषोत्थापिता ।

यथा वा,—

त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषा भवन्त्यभिनवा भुवनैकवीर ! ।
नेत्रेषु कङ्कणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह ! तिलकं करपल्लवेषु ॥

मोहं जगत्त्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर ! देहभाजाम् ।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥

---

यावत् । तावत्परिमाणं हृदयं भिद्यत इत्यर्थः । अत्र हृदयभेदधनुराकर्षणयोः कार्यकारणयोर्भिन्नदेशत्वमेव दृष्टमिति नासंगतिरलंकारः ॥ ८५ ॥ अन्यत्रेति । अन्यत्र कर्तव्यस्य वस्तुनस्ततोऽन्यस्मिन्नधिकरणे या कृतिः करणं तदप्यसंगतिरित्यनुषज्यते । तथा अन्यत्कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकार्यकरणं तृतीया असंगतिः । अपगतमरिजातं यस्यास्तां द्यां स्वर्गम् । तथा पारिजाततरुरहितामकृथाः कृतवान् । एवं गोत्रायाः पृथिव्या उद्धाराय पुरा वराहावतारे प्रवृत्तोऽपि त्वं गोत्राणां पर्वतानामुद्भेदं दलनमकरोः; कृतवानित्यर्थः । श्लेषोत्थापिता श्लेषमूलकाभेदाध्यवसायोत्थापिता ॥ यथा वेति । त्वत्खड्गेति । हे भुवनैकवीर चोलदेशाधिप सिंहसदृश ! तव खड्गेन खण्डिता ये सपत्नाः शत्रवस्तद्विलासिनीनामभिनवा अदृष्टपूर्वा भूषा भूषणानि भवन्ति । यथा नेत्रेषु कंकणं जलकणमेव कङ्कणं वलयं भवतीत्यनुषङ्गः । अथेति समुच्चये । ऊरुषु च पत्रयुक्ता वल्ली सैव पत्रिकारचना । करपल्लवेषु तिलयुक्तं कं जलमेव ललाटभूषणमिति ॥ मोहमिति । हे अखिलेश्वर ! जगत्त्रयवर्तिनां देहधारिणां मोहमपनेतुमेतत् रूपं कृष्णशरीरमादाय मर्यादातिक्रान्तकान्तिरूपरससमुद्रेणामुनैव रूपेण सुन्दरस्त्रीणां मोहं प्रवर्ध-

---

पाठा०—१ 'कृतिश्च यत्'. २ 'पुराऽकरोत्'.

अत्राद्योदाहरणे कङ्कणादीनामन्यत्र कर्तव्यत्वं प्रसिद्धमिति नोपन्यस्तम् । भवतिना भावनारूपा अन्यत्र कृतिराक्षिप्यत इति लक्षणानुगतिः ८६–८७

---

यसीत्यन्वयः ॥ अत्रेति । अनयोर्मध्य इत्यर्थः । आद्योदाहरणे इत्यस्य लक्षणानुगतिरित्यत्रान्वयः । भवतिना भवत्यर्थेन । भवनेनेति यावत् । भावनारूपा भवनप्रयोजकव्यापाररूपा । यत्तु—अन्यत्र करणीयस्येत्याद्यसंगतिप्रकारद्वयान्तरकथनं,–तदयुक्तम् ;'अपारिजाता'मित्युदाहरणे पारिजातराहित्यचिकीर्षारूपकारणस्य कार्येण पारिजातराहित्येन वैयधिकरण्योपनिबन्धनेन प्राथमिकासंगतितो वैलक्षण्यानुपपत्तेः । आलम्बनाख्यविषयतासंबन्धनचिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वात् । एवं 'नेत्रेषु कङ्कण'मित्यादौ कङ्कणत्वनेत्रालंकारत्वयोर्विरुद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितम् । एवं 'गोत्रोद्धारप्रवृत्तोऽपी'त्युदाहरणे 'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावने'त्युक्तविभावनाप्रकारेणैव गतार्थत्वादसंगतिभेदान्तरकल्पनानुचिता । 'मोह'मित्यादावपि मोहनिवर्तकत्वमोहजनकत्वयोर्विरुद्धयोरेकत्र वर्णनाद्विरोधाभास एवेति कैश्चिदुक्तं,–तदसंगतम् ; उक्तसंबन्धेन चिकीर्षाया हेतुत्वासिद्धेः । न हि यदधिकरणे कार्यचिकीर्षा तदधिकरणमन्तर्भाव्योक्तसंबन्धेन चिकीर्षायाः कार्यहेतुत्वं तान्त्रिकसंमतं युक्तं वा । अन्यत्र चिकीर्षितस्यापि प्रमादादिनाऽन्यत्र करणेन व्यभिचारात् । अत एवैवंविधवैयधिकरण्यस्य विरुद्धत्वादपि न प्राथमिकासंगत्यन्तर्भावसंभवः । वस्तुतस्तु— 'विषं जलधरैः पीतं मूर्च्छिताः पथिकाङ्गनाः' इत्यत्रेव नात्र कार्यकारणवैयधिकरण्यप्रयुक्तो विच्छित्तिविशेषोऽपि त्वन्यत्र कर्तव्यस्यान्यत्र करणप्रयुक्त एवेति सहृदयमेव प्रष्टव्यम् । एवं 'नेत्रेषु कङ्कण'मित्यत्र सत्यपि विरोधाभासेऽन्यत्र चमत्कारित्वेन क्लृप्तालंकारभावादन्यत्र करणरूपाऽसंगतिरपि प्रतीयमाना न शक्या निराकर्तुम् । एवं 'गोत्रोद्धारप्रवृत्तोऽपी'त्युदाहरणे गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोद्भेदरूपकार्यविरुद्धत्वात् 'विरुद्धा कार्यसंपत्तिर्विभावना' इत्यपि न युक्तम् । गोत्रोद्धारप्रवृत्तेर्गोत्रोद्भेदनिवर्तकत्वाभावेन तद्विरुद्धत्वाभावात् । कथंचित्तदभ्युपगमेऽप्यन्यत्कार्यं कर्तुं प्रवृत्तेन तद्विरुद्धकार्यान्तरकरणरूपाऽसंगतिरपि 'मोहं जगत्त्रयभुवा'मित्यादौ चमत्कारित्वेन लब्धात्मिका न निवारयितुं शक्यते । न चात्रापि मोहनिवर्तकान्मोहोत्पत्तेः सैव विभावनेति वाच्यम् । मोहनिवर्तकस्य सिद्धवदप्रतीतेः । अत एव न विरोधाभासोऽपि विशेषोक्तिकथनं त्वत्रासंगतमेव । न हि गोत्रोद्धारविषयकप्रवृत्तिरूपकारणसत्त्वेऽपि गोत्रोद्धाररूपस्य कार्यस्यानुत्पत्तिरिह प्रतिपाद्यते, किंतु विरुद्धकार्योत्पत्तिरेवेति विभावनीयम् ॥ ८६–८७ ॥

इत्यलंकारचन्द्रिकायामसंगत्यलंकारप्रकरणम् ॥ ३७ ॥

## विषमालंकारः ३८

**विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः ।**
**क्वेयं शिरीषमृद्वङ्गी, क्व तावन्मदनज्वरः ? ॥ ८८ ॥**

अत्रातिमृदुत्वेनातिदुःसहत्वेन चाननुरूपयोरङ्गनामदनज्वरयोर्घटना।

यथा वा,—

अभिलषसि यदीन्दो ! वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् ।
सुविमलमथ बिम्बं पारिजातप्रसूनैः
सुरभय, वद नो चेत्त्वं क्व तस्या मुखं क्व ॥

पूर्वत्र वस्तुसती घटना। अत्र चन्द्र-वदनलक्ष्म्योस्तर्किता घटनेति भेदः ८८

**विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।**
**कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥ ८९ ॥**

अत्र कारणगुणप्रक्रमेण विरुद्धाच्छयामाद्धवलोत्पत्तिः। कार्यकारणयोर्निवर्त्य-निवर्तकत्वे पञ्चमी विभावना । विलक्षणगुणशालित्वे त्वयं विषम इति भेदः ॥ ८९ ॥

**अनिष्टस्याप्यवाप्तिश्च[1] तदिष्टार्थसमुद्यमात् ।**
**भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाखुस्तेन भक्षितः ॥ ९० ॥**

---

**विषममिति** । परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्र घटना संबन्धो वर्ण्यते तत्र विषमनामालंकारः । संबन्धश्च संयोगादिः, उत्पाद्योत्पादकभावश्चेति सर्व-प्रकारसाधारणमेतल्लक्षणं बोध्यम् । **अभिलषसीति** । अङ्कं कलङ्कम् । संक्षालय प्रक्षालय । अथ प्रक्षालनानन्तरम् । नो चेत्तस्या मुखं क्व? त्वं क्व? इति वदेत्य-न्वयः । वस्तुसती वस्तुगत्या विद्यमाना ॥ **चन्द्रेति** । चन्द्रश्च वदनलक्ष्मीश्च तयोरित्यर्थः ॥ ८८ ॥ **विरूपकार्यस्येति** । कारणविलक्षणस्वरूपस्येत्यर्थः । कृपाणिका खड्गः ॥ **प्रक्रमेणेति** । प्रक्रमः परिपाटी स्वजातीयकार्यगुणोत्पाद-कत्वरूपा । 'विरुद्धात्कार्यसंपत्ति'[2]रिति पञ्चमविभावनाप्रकारेणाभेदमाशङ्क्याह— **कार्येति** । अयं विषमः उक्तविषमालंकारप्रभेदः ॥ ८९ ॥ तृतीयप्रकारमाह— **अनिष्टस्यापीति** । अपिर्भिन्नक्रमः । इष्टार्थसमुद्यमादनिष्टस्यावाप्तिरपि च तद्वि-षममित्यर्थः । अपिना इष्टानवाप्तिः संगृह्यते । चकारः पूर्वोक्तविषमसमुच्च-यार्थः । **भक्ष्येति** । अहिमञ्जूषां सर्पपेटिकां दृष्ट्वा भक्ष्यस्याशया प्रविष्ट आखु-

---

**टिप्प०**—1 'अनुरूपसंसर्गः समम्; अननुरूपसंसर्गो विषमम्' इति **रसगंगाधर-कृतः** । तथा च समालंकारविपर्यासस्वरूपो विषमालंकार इत्याशयः । 'क्वचिद्यदतिवैध-र्म्यान्न श्लेषो घटनामियात् । कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेत् । गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिया । क्रमेण च विरुद्धे यत् स एष विषमो मतः' इति **मम्मटः** ।

---

**पाठा०**—१ 'अवाप्तिश्चेत्तदिष्टार्थ'. २ 'विरूपा विरुद्धा कार्यसंपत्तिः'.

इष्टार्थमुद्दिश्य किंचित्कर्मारब्धवतो न केवलमिष्टस्यानवाप्तिः किंतु ततोऽनिष्टस्यापि प्रतिलम्भश्चेत्तदपि विषमम् । यथा भक्ष्यप्रेप्सया सर्पपेटिकां दृष्ट्वा प्रविष्टस्य मूषकस्य न केवलं भक्ष्यालाभः किन्तु स्वरूपहानिरपीति ।

यथा वा,—

गोपाल इति कृष्ण ! त्वं प्रचुरक्षीरवाञ्छया ।
श्रितो मातृस्तनक्षीरमप्यलभ्यं त्वया कृतम् ॥

इदमर्थावाप्तिरूपेष्टार्थसमुद्यमादिष्टानवाप्तावनिष्टप्रतिलम्भे चोदाहरणम् । अनर्थपरिहारार्थरूपेष्टार्थसमुद्यमात् । तदुभयं यथा,—

दिवि श्रितवतश्चन्द्रं सैंहिकेयभयाद्भुवि ।
शशस्य पश्य तन्वङ्गि ! साश्रयस्य ततो भयम् ॥

अत्र न केवलं शशस्य स्वानर्थपरिहारानवाप्तिः किंतु साश्रयस्याप्यनर्थावाप्तिरिति दर्शितम् । परानिष्टप्रापणरूपेष्टार्थसमुद्यमात् । तदुभयं यथा,—

दिधक्षन्मारुतेर्वालं तमादीप्यद्दशाननः ।
आत्मीयस्य पुरस्यैव सद्यो दहनमन्वभूत् ॥

'पुरस्यैव'इत्येवकारेण परानिष्टप्रापणाभावो दर्शितः । 'अनिष्टस्याप्यवाप्तिश्च' इति श्लोकेऽनिष्टावाप्तेः 'अपि'शब्दसंगृहीताया इष्टानवाप्तेश्च प्रत्येकमपि विषमपदेनान्वयः । ततश्च केवलानिष्टप्रतिलम्भः केवलेष्टानवाप्तिश्चेत्यन्यदपि विषमद्वयं लक्षितं भवति ।

---

मूषकस्तेनाहिना भक्षित इत्यन्वयः। यत्तु प्रविष्ट इत्यस्यागम्यमानत्वान्न्यूनपदत्वमिति केनचिदुक्तं,–तदभिनिवेशदुष्टस्वहृदयानुभवविकत्थनमित्युपेक्षणीयम् । अनिष्टस्यापि प्रतिलम्भ इत्यत्राप्यपिर्भिन्नक्रमो बोध्यः ॥ **गोपाल इति** । हे कृष्ण ! त्वं गोपाल इति हेतोर्बहुदुग्धवाञ्छया श्रित आश्रितः । त्वया तु मातृस्तनदुग्धमप्यलभ्यं कृतम् । मुक्तिदानेनेति भावः । पूर्वत्र इष्टानवाप्तिरर्थगम्या; इह तु 'अपि'शब्दगम्येति विशेषः। इदमिति उदाहरणमिति च जातावेकवचनम् ॥ **दिवीति** । भुवि सैंहिकेयस्य सिंहीपुत्रस्य सिंहस्य भयात् दिवि आकाशे चन्द्रमाश्रितवतः शशस्य साश्रयस्याश्रयसहितस्य ततः सैंहिकेयाद्राहोर्भयमेतत् हे तन्वङ्गि ! पश्येत्यन्वयः ॥ **परेति** । परस्यानिष्टावाप्तिरूपो य इष्टार्थ इत्यर्थः । तदुभयमिष्टानवाप्त्यनिष्टावाप्तिद्वयम् ॥ **दिधक्षन्निति** । दशाननो रावणः मारुतेर्हनुमतो वालं पुच्छं दग्धुमिच्छंस्तं वालमादीप्यद्दीपयति स्मेत्यर्थः ॥ **प्रत्येकमपीति** । अपिना इष्टानवाप्तिसमुच्चिताया अनिष्टावाप्तेर्विषमपदेनान्वयः समुच्चीयते । विषमपदेन विषमपरामर्शकेन तत्पदेन । तथा च तात्पर्यवलाद्वाक्यमावर्तनीयमिति भावः । यत्त्वनिष्टस्यैव तदुत्तरापिशब्दसमुच्चिताया इष्टानवाप्तेरप्याप्नोतिनैवान्वयो न तु तत्पदपरामृष्टेन विषमेणाव्युत्पत्तेरिति तत्प्रागेव 'अपि'शब्दान्वयव्याख्यानेन निरस्तं वेदितव्यम् ॥

तत्र केवलानिष्टप्रतिलम्भो यथा—

पद्मातपत्ररसिके सरसीरुहस्य
किं बीजमर्पयितुमिच्छसि वापिकायाम् ।
कालः कलिर्जगदिदं न कृतज्ञमङ्गे !
स्थित्वा हरिष्यति मुखस्य तवैव लक्ष्मीम् ॥

अत्र पद्मातपत्रलिप्सया पद्मबीजावापं कृतवत्यास्तल्लाभोऽस्त्येव किंतु मुखशोभाहरणरूपोत्कटानिष्टप्रतिलम्भः ।

केवलेष्टानवाप्तिर्यथा,—

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन्हरिर्जयति ॥

अत्र यद्यपि शैलस्योपरिपतनरूपानिष्टावाप्तिः प्रसक्ता तथापि भगवत्कराम्बुजसंसर्गमहिम्ना सा न जातेति शैलधारणरूपेष्टानवाप्तिमात्रम् ।

यथा वा,—

लोके कलङ्कमपहातुमयं मृगाङ्को
जातो मुखं तव पुनस्तिलकच्छलेन ।
तत्रापि कल्पयसि तन्वि ! कलङ्करेखां,
नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥

अत्रानिष्टपरिहाररूपेष्टानवाप्तिः ।

---

**पद्मेति** । दयितां प्रति नायकोक्तिः । पद्मस्यातपत्रं छत्रं तत्र रसिके हे तन्वि ! वापिकायां सरसीरुहस्य पद्मस्य कन्दमर्पयितुं किमितीच्छसि ? यतः हे अङ्गे ! कलियुगरूपः कालः, इदं जगत् कृतज्ञं च न भवति । ततः किं तत्राह—इदं सरसीरुहं स्थित्वा तवैव मुखस्य लक्ष्मीं हरिष्यति, न त्वन्यस्या इत्यर्थः ॥ **खिन्नोऽसीति** । बिभृमो धारयामः । वदत्सु गोपेषु शिथिलौ भुजौ यस्य सः । भरेण शैलभारेण भुग्ना वक्रा वितता विस्तीर्णा बाहवो येषां तथाभूतेषु सत्सु हसन् ॥ **अत्रेति** । न च भरभुग्नेत्यनेन बाहुगतास्थिसन्धिभङ्गरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वाङ्गचूर्णीभावगर्वापहाररूपायाश्च स्फुटं गम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्यत इति वाच्यम् । अस्थिसंधिभङ्गस्याशब्दार्थत्वाद्भगवद्भुजशैथिल्यप्रयुक्तभाराधिक्येन वक्रतामात्रस्य शब्दोपात्तस्य च क्लेशविशेषानाधायकत्वेनानिष्टव्यपदेशानर्हत्वात् , सुहृद्भूतानां गोपानामनिष्टप्राप्तौ हास्यानुपपत्तेश्च । अत एव न सर्वाङ्गचूर्णीभावोऽपि गम्यः, गर्वप्रसक्त्यभावाच्च न तदपहारोऽपि । यतश्चिरकालशैलधारणजन्यश्रमपरिजिहीर्षया गोपानां प्रवृत्तिरिहावगम्यत इति निरवद्यम् ॥ **लोक इति** । हे तन्वि ! लोके प्रसिद्धं कलङ्कमपहातुं निवारयितुं मृगाङ्कस्तव मुखं जातस्तत्रापि पुनस्तिलकव्याजेन कलङ्करेखां त्वं कल्पयसि करोषि । हि यस्मान्नार्यः समाश्रितजनं स्वाश्रितजनं कलङ्किनं कुर्वन्तीत्यन्वयः ॥ **शापो-**

यथा वा,—

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं दहनः करोति॥

अत्र परानिष्टप्रापणरूपेष्टानवाप्तिः। स्वतोऽनिष्टस्यापि मुनिशापस्य महापुरुषार्थपुत्रलाभावश्यंभावगर्भतया दशरथेनेष्टत्वेन समर्थितत्वात्। यत्र केनचित्स्वेष्टसिद्ध्यर्थं नियुक्तेनान्येन नियोक्तुरिष्टमुपेक्ष्य स्वस्यैवेष्टं साध्यते तत्रापीष्टानवाप्तिरूपमेव विषमम्। यथा,—

यं प्रति प्रेषिता दूती तस्मिन्नेव लयं गता।
सख्यः! पश्यत मौढ्यं मे विपाकं वा विधेरमुम्॥

'तस्मिन्नेव लयं गता' इति नायके दूत्याः स्वाच्छन्द्यं दर्शितम्। यथा वा,—

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः।
तत्तु तत्रैव रमते हताः पाणिनिना वयम्॥

एतानि सर्वथैवेष्टानवाप्तेरुदाहरणानि। कदाचिदिष्टावाप्तिपूर्वकतदनवाप्तिर्यथा मदीये वरदराजस्तवे—

भानुर्निशासु भवदङ्घ्रिमयूखशोभा-
लोभात्प्रताप्य किरणोत्करमाप्रभातम्।
तत्रोद्धृते हुतवहात्क्षणलुप्तरागे
तापं भजत्यनुदिनं स हि मन्दतापः॥

यथा वा,—

त्वद्वक्त्रसाम्यमयमम्बुजकोशमुद्रा-
भङ्गात्ततत्सुषममित्रकरोपक्लृप्त्या।

---

ऽपीति। मृगयायां प्रमादतो हतपुत्रेण तापसेन त्वमपि पुत्रशोकान्मरिष्यसीति शापे दत्ते तं प्रति दशरथस्येयमुक्तिः। अदृष्टपुत्रमुखपङ्कजशोभे मयि भगवता त्वया पातितोऽयं शापोऽपि सानुग्रहो भवति। खलु निश्चितम्। इन्धनैरिद्धो दीप्तो दहनः कृषियोग्यां क्षितिं दहन्नपि बीजाङ्कुरजननीं करोतीति दृष्टान्तः॥ **परेति।** परस्य दशरथस्यानिष्टप्रापणरूपं यदिष्टं तस्यानवाप्तिरर्थात्तापसस्येत्यर्थः। कुतस्तत्राह—**स्वत इति।** नियोक्तुः प्रेषयितुः॥ **यं प्रतीति।** मौढ्यं मूढत्वम्। एवंविधायामाप्तत्वबुद्धेः विधेर्दैवस्य विपाकं परिपाकम्। फलमिति यावत्॥ **भानुरिति।** हे हरे! भानुः सूर्यो भवच्चरणकिरणशोभाया लोभात्स्वीयकिरणसमूहं निशासु प्रभातपर्यन्तं प्रताप्य रात्रौ सूर्यकिरणानामग्नौ प्रवेशात्तापयित्वा तत्र तस्मिन्किरणोत्करे हुतवहादग्नेः सकाशादुद्धृते सति रक्ततादर्शनान्मन्दसंतापः सन् क्षणमात्रेण लुप्तरागे नष्टलौहित्ये सत्यनुदिनं तापं भजतीत्यन्वयः॥ **त्वद्वक्त्रेति।** हे हरे! अयं विधुः पर्वणि पूर्णिमायामम्बुजस्य कोशः कुड्मलः स

---

पाठा०—१ 'तां प्रति'. २ 'मन्दतातः'.

लब्ध्वापि पर्वणि विधुः क्रमहीयमानः
शंसत्यनीत्युपचितां श्रियमाशुनाशाम् ॥

अत्र ह्याद्यश्लोके सूर्यकिरणानां रात्रिष्वग्निप्रवेशनमागमसिद्धम् । सूर्यस्य निजकिरणेषु भगवच्चरणकिरणसदृशारुणिमप्रेप्सया तत्कृतं तेषामग्नौ प्रतापनं परिकल्प्य तेषामुदयकालदृश्यमरुणिमानं च तप्तोद्धृतनाराचानामिवाग्निसंतापनप्रयुक्तारुणिमानुवृत्तिं परिकल्प्य सूर्यस्य महतापि प्रयत्नेन तात्कालिकेष्टावाप्तिरेव जायते न सार्वकालिकेष्टावाप्तिरिति दर्शितम् । द्वितीयश्लोके चन्द्रस्य भगवन्मुखलक्ष्मीं लिप्समानस्य सुहृत्त्वेन 'मित्र'शब्दश्लेषवशात्सूर्यं परिकल्प्य तत्किरणस्य कमलमुकुलविकासनं चन्द्रानुप्रवेशनं च सुहृत्पाणेर्भगवन्मुखलक्ष्मीनिधानकोशगृहमुद्रामोचनपूर्वकं ततो गृहीतभगवन्मुखलक्ष्मीकस्य तया भगवन्मुखलक्ष्म्या चन्द्रप्रसाधनार्थं चन्द्रस्पर्शरूपं च परिकल्प्यैतावतापि प्रयत्नेन पौर्णमास्यामेव भगवन्मुखसाम्यरूपेष्टप्राप्तिर्जायते न सार्वकालिकीति दर्शितम् । क्वचिदिष्टानवाप्तावपि तदवाप्तिभ्रमनिबन्धनाद्विच्छित्तिविशेषः ।

यथा वा,—

बल्लालक्षोणिपाल ! त्वदहितनगरे संचरन्ती किराती
रत्नान्यादाय कीर्णान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी ।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशङ्कां करोति ॥

अत्र प्रभूताग्निसंपादनोद्योगात्तत्संपादनालाभेऽपि तल्लाभभ्रमो धूमभ्रमोपन्यासमुखेन निबद्धः ॥

---

एवाम्बुजरूपभाण्डारगृहं तस्य मुद्रा मुकुलीभावो मुद्रणं च तस्य भङ्गेनात्ता गृहीता तत्सुषमा तच्छोभा यैस्तादृशा ये मित्रकराः सूर्यकिरणाः सुहृत्पाणयश्च तेषामुपक्लृप्त्या लाभेन त्वद्वक्त्रस्य कान्तिं लब्ध्वापि क्रमेण हीयमानः क्षीयमाणः सन् अनीत्या उपचितां प्रवृद्धां श्रियमाशु नाशो यस्यास्तां शंसति कथयतीत्यन्वयः ॥ **अत्रेति ।** आगमसिद्धं 'तस्माद्दिवाग्निरादित्यं प्रविशति रात्रावादित्यस्तम्' इति श्रुतिसिद्धं प्रवेशनं तत्कृतं सूर्यकृतं तेषां किरणानामग्नौ प्रतापनरूपं परिकल्प्य उत्प्रेक्ष्य, एवं तेषां किरणानामरुणिमानमारक्तत्वं च अरुणिमानुवृत्तिरूपं परिकल्प्य इति दर्शितमित्यन्वयः । एवमग्रेऽपि सुहृत्त्वेन सूर्यं परिकल्प्य तत्किरणचन्द्रानुप्रवेशं च शास्त्रसिद्धं सुहृत्पाणेर्यथोक्तविशेषणविशिष्टस्य चन्द्रस्पर्शरूपं च परिकल्प्य इति दर्शितमित्यन्वयः ॥ **बल्लालेति ।** हे एतन्नामक भूपाल! त्वच्छत्रुनगरे संचरन्ती भिल्ली प्रकीर्णानि रत्नान्यादाय उरुतरा महती या खदिराङ्गारस्य शङ्का भ्रान्तिस्तया व्याकुलाङ्गी तदुपरि श्रीखण्डकाष्ठशकलं क्षिप्त्वा मुकुलीभूतनेत्रा फूत्कारं कुर्वती सती श्वासपरिमलेन प्रसक्तैरागतैर्भ्रमरसमूहैर्धूमशङ्कां करोतीत्यन्वयः ॥ **प्रभूतेति ।** बहुलेत्यर्थः । एतेषु च सर्वेषूपायोपादकभावरूपसंबन्ध-

## समालंकारः ३९

**सम[1]ं स्याद्[2]वर्णनं यत्र द्वयोरप्यनुरूपयोः ।**
**स्वानुरूपं कृतं सद्म[3] हारेण कुचमण्डलम् ॥ ९१ ॥**

प्रथमविषमप्रतिद्वन्द्वीदं समम् । यथा वा,—

यथा वा,—

कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम् ।
पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते ! ॥

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितघटनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः[2] ॥

पूर्वं स्तुतिपर्यवसायि; इदं तु निन्दापर्यवसायीति भेदः ॥ ९१ ॥

**सारूप्यमपि कार्यस्य[3] कारणेन समं विदुः ।**
**नीचप्रवणता लक्ष्मि[4] ! जलजायास्तवोचिता ॥ ९२ ॥**

इदं द्वितीयविषमप्रतिद्वन्द्वि समम् ।

---

गर्भेषु प्रभेदेषु कार्यकारणयोः क्वचिद्विलक्षणगुणशालित्वेनानुरूप्याभावात्क्वचिच्छेत्पादकत्वेनाभिमतस्य कारणस्येष्टानवाप्त्यनिष्टावाप्तिरूपकार्येणानुरूप्याभावात्सामान्यलक्षणसमन्वयो बोध्यः ॥ ९० ॥

इत्यलंकारचन्द्रिकायां विषमालंकारप्रकरणम् ॥ ३८ ॥

**सममिति ।** अनुरूपयोरित्यनन्तरं संबन्धस्येति शेषः । परस्परमनुरूपयोः संबन्धस्य वर्णनं समं नामालंकारः । सद्म स्थानम् ॥ **कौमुदीति ।** शशिखण्डमण्डनं चन्द्रकलाभूषणं हरम् ॥ **चित्रमिति ।** अत्र चित्र-बतशब्दयोर्वीप्सा विषयातिशयद्योतनाय । परिणतं पक्वम् । स्फीतिः समृद्धिः । एतस्याः फलसमृद्धेः । कवलनकला भक्षणचातुर्यं तत्र कोविदः पण्डितः ॥ ९१ ॥ **सारूप्यमपीति ।** कार्यस्य कारणेन सारूप्यमपि समालंकारः ॥ **नीचेति ।** नीचप्रवणता नीचासक्तता । जलजायाः समुद्ररूपजलाज्जातायाः । **उचितेति ।** जलस्य तादृशत्वादिति भावः ॥

---

**टिप्प०**—1 इष्टप्राप्तौ समम्; ईप्सितादधिकलाभे प्रहर्षणमिति भावः । अनुरूपसंसर्गः समम् इति **रसगंगाधरकारः** । 'अनुरूपसंघटनात्मकः समालंकारः' इत्यलंकार**सर्वस्वकारः** । 2 विधाता प्रजापतिः दैवात् अदृष्टवशात् उचितायाः घटनायाः संविधाता कर्ता संभूतः । यस्मात् निंबानां पारिभद्राणां परिणतफलानि पक्वफलानि तेषां समृद्धिः आस्वादनीया इदमाश्चर्यम्; एतस्याः फलसमृद्धेः भक्षणचातुर्ये काकरूपो लोकः कोविदः पण्डित इत्येतन्महदाश्चर्यम् ।

---

**पाठा०**—१ 'हिं वर्ण्यते यत्र'. २ 'स्वस्य हारेण'. ३ 'कार्य स्यात्कारणेन'. ४ 'लक्ष्मीर्जलजायाः'.

यथा वा,—

दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् ।
यच्छमयति तद्युक्तं सोऽपि हि दवमेव निर्दहति ॥

यथा वा,—

आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो
बाल्ये शम्भोर्निटिलमहसा बद्धमैत्रीनिरूढः ।
प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः
सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥

पूर्वत्र कारणस्वभावानुरूप्यं कार्यस्यात्रागन्तुकतदीयदुष्टसंसर्गानुरूप्यमिति भेदः ॥ ९२ ॥

**विनाऽनिष्टं च तत्सिद्धिर्यमर्थं कर्तुमुद्यतः ।**
**युक्तो वारणलाभोऽयं स्यान्न ते वारणार्थिनः ॥ ९३ ॥**

इदं सममनिष्टस्याप्यवाप्तिश्चेत्यपिसंगृहीतस्य त्रिविधस्यापि विषमस्य प्रतिद्वन्द्वि । इष्टावाप्तेरनिष्टस्याप्रसङ्गाच्च । अत्र गजार्थितया राजानमुपसर्पन्तं तद्दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणम् । न चात्र निवारणमनिष्टमापन्नमित्यनुदाहरणत्वं शङ्कनीयम् । राजद्वारि क्षणनिवारणं संभावितमिति तदङ्गीकृत्य प्रवृत्तस्य विषमालंकारोदाहरणेष्विवातर्कितोत्कटानिष्टापत्त्यभावात् । किंच यत्रातर्कितोत्कटानिष्टसत्त्वेऽपि श्लेषमहिम्नेष्टार्थत्वप्रतीतिस्तत्रापि समालंकारोऽप्रतिहत एव ।

---

**दवेति** । घनतां मेघरूपतां वर्षैर्जलवर्षणैः । शमयति नाशयति । हि यस्मात्सोऽपि दवदहनोऽपि दवमेव स्वोत्पादकं विनिर्दहति । तथा च कारणस्य स्वोत्पादकनाशकत्वात्कार्यस्यापि धूमस्य तथात्वमुचितमित्यर्थः ॥ **आदाविति** । विरहिण्या इयमुक्तिः । सोऽयं चन्द्रो मां किरणैस्तपतीत्येतत्प्राप्तं, न्यायप्राप्तमित्यर्थः । स कः ? यः आदौ हालाहलरूपेण हुतभुजाऽग्निना दत्तो हस्तावलम्बो यस्य सः । शम्भोःनिटिलं ललाटं तत्संबन्धिमहसा नेत्राग्निना बद्धया संबद्धया मैत्र्या निरूढः प्रसिद्धः प्रौढो युवा राहोर्मुखसंबन्धिभिर्विषैरन्तरङ्गीकृतः । ग्रहणकाले संपर्कातिशयादन्तरङ्गतां प्रापित इत्यर्थः । अत्र कार्यस्य तापस्य कारणीभूतचन्द्रगतदुष्टसंसर्गानुरूपत्वम् ॥ ९२ ॥ भेदान्तरमाह—**विनेति** । अनिष्टं विना यमर्थं कर्तुमुद्यतस्तत्सिद्धिरपि सममित्यनुवृत्त्या योज्यम् । **'यदर्थम्'** इति पाठे यश्चासावर्थश्चेत्यर्थः ॥ **युक्त इति** । वारणं निवारणम् । वारणो गजो युक्तो न स्यात्, अपि तु स्यादेवेत्यर्थः । **'शोभत'** इति क्वचित्पाठः साधुरेव । अपिसंगृहीतस्य 'अपि'शब्दसंगृहीतस्य । नर्मवचनं परिहासवचनम् । अत्रेष्टावाप्तिः श्लेषकल्पिता बोध्या ॥ **इष्टार्थत्वप्रतीतिरिति** । इष्टार्थत्वेन प्रतीतिरित्यर्थः ॥ **अप्रतिहत इति** । अनिष्टस्येष्टाभिन्नत्वेन ज्ञानकालेऽनिष्टत्वे-

---

पाठा०—१ 'विना यत्नेन तत्सिद्धिर्यदर्थम्'. २ 'जातस्ते', शोभते'. ३ 'प्रतिपत्तिः'.

यथा वा,—

उच्चैर्गजैरटनमर्थयमान एव
त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् ! ।
उच्चाटनं त्वमपि लम्भयसे तदेव
मामद्य नैव विफला महतां हि सेवा ॥

अत्र यद्यपि व्याजस्तुतौ स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालंकारस्तथापि प्राथमिकस्तुतिरूपवाच्यविवक्षायां समालंकारो न निवार्यते । एवं यत्रेष्टार्थावाप्तिसत्त्वेऽपि श्लेषवशादसतोऽनिष्टार्थस्य प्रतीतिस्तत्रापि समालंकारस्य न क्षतिः । यथा,—

शस्त्रं न-खलु कर्तव्यमिति पित्रा नियोजितः ।
तदेव शस्त्रं कृतवान् पितुराज्ञा न लङ्घिता ॥

अत्र 'पितुराज्ञा न लङ्घिता'इत्यनेन विरोधालंकाराभिव्यक्त्यर्थं न खल्वित्यत्र पदद्वयविभागात्मकरूपान्तरस्यापि विवक्षायाः सत्त्वेऽपि नखं लुनातीति 'नखलु' इत्येकपदत्वेन वस्तुसदर्थान्तरपररूपान्तरमादाय समालंकारोऽप्यस्त्येव श्लेषलब्धाऽसदिष्टावाप्तिप्रतीतिमात्रेणापि गतमुदाहरणम् । यथा,—

सत्यं तपः सुगत्यै यत्तद्वाम्बुषु रविप्रतीक्षं सत् ।
अनुभवति सुगतिमब्जं त्वत्पदजन्मनि समस्तकमनीयम् ॥

---

नाप्रतिभासादिति भावः ॥ **उच्चैरिति** । गजैरटनं तदारोहणपूर्वकं गमनम् । इह त्वन्नगरे उषितोऽस्मि वासं कृतवानस्मि । तदेव मत्प्रार्थ्यमानमेव । उच्चाटनं दूरनिरसनमेव । उच्चैर्गजैरटनं प्रति मां लम्भयसे प्रापयसि । हि यस्मात् महतां सेवा विफला न भवतीति मुखे स्तुतिः । ततो दूरनिरसनमेवार्थान्तरपरिग्रहेण विषमालंकारस्फूर्त्या निन्दायां पर्यवसितम् । एतेन वैषम्यस्य निन्दारूपस्य व्याजस्तुतिविषयत्वेन तथापवाद इति निरस्तम् । विषमस्य निन्दामूलत्वेन तद्रूपत्वाभावादिति । इष्टार्थावाप्तिसत्त्वेऽपि वास्तविकेष्टार्थप्राप्तिसत्त्वेऽपि ॥ **न क्षतिरिति** । अनिष्टप्रतीतेराभासरूपत्वेनापर्यवसानादिति भावः ॥ **शस्त्रमिति** । तदेव नखल्वेव । एकपदत्वेनेत्युपलक्षणे तृतीया । एकपदत्वोपलक्षितं यद्वस्तु सदर्थान्तरपरं रूपान्तरमित्यर्थः । अर्थान्तरं च वास्तविकं पदव्युत्पत्तिकथनेन दर्शितमेव । **श्लेषलब्धेति** । श्लेषेण लब्धा असती वस्तुतोऽविद्यमाना या इष्टावाप्तिप्रतीतिर्व्यवच्छेदः । 'युक्तो वारणलाभोऽय'मित्यत्र किंचिदनिष्टस्य 'उच्चै'रित्यत्र चोत्कटानिष्टस्य प्रतीतिसत्त्वादुदाहरणान्तरमाह—**यथेति** । नायिकां प्रति नायकस्योक्तिः । हे तन्वि ! तपः शोभनगत्यैव भवतीति सत्यम्; यद्यस्मादब्जं कमलमम्बुषु जलेषु रविं प्रतीक्षते तादृशं सत् तद्वा तपः कृत्वा त्वत्पदरूपे जन्मनि समस्तेभ्यः

---

पाठा०—१ 'रहित'.

## विचित्रालंकारः ४०

**विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया ।**
**नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ९४ ॥**

यथा वा,—
मलिनयितुं खलवदनं विमलयति जगन्ति देव ! कीर्तिस्ते ।
मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ ९४ ॥

---

## अधिकालंकारः ४१

**अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम् ।**
**ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः ॥ ९५ ॥**

अत्र 'यत्र महाजलौघेऽनन्तानि ब्रह्माण्डानि बुद्बुदकल्पानी' इत्याधारस्याति-विशालत्वं प्रदर्श्य तत्र 'न मान्ति' इत्याधेयानां गुणानामाधिक्यं वर्णितम् ।

यथा वा, (माघे १।२३)—
युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ ९५ ॥

---

कमलेभ्यः कमनीयं सुन्दरं सत् सुगतिं शोभनां गतिमनुभवतीत्यन्वयः । अत्र कमलस्योत्तमलोकरूपगतिप्राप्तये तपस्यतस्तदलाभेऽपि शोभनगमनस्य गतिशब्द-श्लेषबलादिष्टत्वेन प्रतीतेरिष्टावाप्तिप्रतीतिमात्रं नत्वनिष्टप्रतिभासोऽपीति ॥ ९३ ॥

इत्यलंकारचन्द्रिकायां समालंकारप्रकरणम् ॥ ३९ ॥

**विचित्रमिति** । फलेच्छया विपरीतः प्रयत्नश्चेद्विचित्रं नामालंकारः । इष्टविपरीताचरणमिति यावत् ॥ **नमन्तीति** । नम्रीभवन्तीत्यर्थः । समुन्नति-मुच्चताम् ॥ **मलिनयितुमिति** । मलिनीकर्तुमित्यर्थः । विमलमयति निर्मलीकरोति । जगन्ति त्रिभुवनानि । मित्रं सुहृन्मित्रः सूर्यश्च ॥ ९४ ॥

इत्यलंकारचंद्रिकायां विचित्रालंकारप्रकरणम् ॥ ४० ॥

**अधिकमिति** । पृथुलादाधेयापेक्षया विशालादाधारादाधेयस्याधिक्यवर्णन-मेकोऽधिकालंकारः ॥ **युगान्तेति** । युगान्तकाले प्रलये प्रतिसंहृतः स्वस्मिँल्लयं

---

**टिप्प०**—1 'इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीताचरणं विचित्रम्' इति **रसगंगाधरकृतः** । 'यस्य हेतोर्यत् फलं तस्य यदा तद्विपरीतं भवति तदा तद्विपरीत-फलनिष्पत्त्यर्थं कस्यचित्प्रयत्न उत्साहो विचित्रालंकारः' **इत्यलंकारसर्वस्वे** । 2 'यत्रा-धाराधेययोरन्यतरस्य न्यूनत्वाधिकत्वे कविकल्पितेऽधिकालंकारः' **इत्युद्द्योते** लक्षण-मुक्तम् । **काव्यप्रकाशे**—'महतोर्यन्महीयान्सावाश्रिताश्रययोः क्रमात् । आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्' इति लक्षणं प्राह **मम्मटः** । **दर्पणेऽपि** 'आश्रयाश्रयिणो-रेकस्याधिक्येऽधिकमुच्यते' इत्युक्तम् । 3 नारदागमने श्रीकृष्णस्य हर्षातिशयवर्णनमिदम् ।

---

**पाठा०**—१ 'विपरीतफलेच्छया'।

पृथ्व्याधेयाद्यदाधाराधिक्यं तदपि[1] तन्मतम् ।
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव ॥ ९६ ॥

अत्र 'एते' इति प्रत्यक्षदृष्टमहावैभवत्वेनोक्तानां गुणानां 'विश्राम्यन्ति' इत्यसंबाधावस्थानोक्त्या आधारस्य वाग्ब्रह्मण आधिक्यं वर्णितम् ।

यथा वा,—

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

अत्र यद्यप्युदाहरणद्वयेऽपि 'कियद्वाग्ब्रह्म' इति 'अहो विशालम्' इति चाधारयोः प्रशंसा क्रियते तथापि तनुत्वेन सिद्धवत्कृतयोः शब्दब्रह्मभुवनोदरयोर्गुणयशोराश्यधिकरणत्वेनाधिकत्वं प्रकल्प्यैव प्रशंसा क्रियत इति तत्प्रशंसा प्रस्तुतगुणयशोराशिप्रशंसायामेव पर्यवस्यति ॥ ९६ ॥

---

अल्पालंकारः ४२

अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता ।
मणिमालोर्मिका तेऽद्य करे जपवटीयते[2] ॥ ९७ ॥

अत्र मणिमालामय्यूर्मिका तावदङ्गुलिमात्रपरिमितत्वात्सूक्ष्मा सापि विरहिण्याः करे कङ्कणवत्प्रवेशिता तस्मिन् जपमालावल्लम्बत इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसूक्ष्मता दर्शिता ।

---

प्रापित आत्मा स्वविलासरूपः प्रपञ्चो येन तादृशस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ जगन्ति भुवनानि विकाशसहितं यथा स्यात्तथा आसत स्थितानि तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागमात्संभवो यासां ता मुदः प्रीतयो न ममुरित्यन्वयः ॥ ९५ ॥ **पृथ्विवत्ति** । विशालादाधेयाद्यदाधारस्याधिक्यं तदप्यधिकम् ॥ **कियदिति** । अपरिमितमित्यर्थः । वाक् शब्द एव ब्रह्म । इयं च परमेश्वरं प्रति भक्तस्योक्तिः ॥ **असंबाधेति** । असंकटेत्यर्थः । **अहो इति** । माति संमाति । मातुमशक्योऽपरिमितः । अत्र भुवनत्रयोदरे । नन्वाधारयोः शब्दब्रह्मभुवनोदरयोरप्रस्तुतत्वेनाप्रशंसनीयत्वात्तदाधिक्यवर्णनमयुक्तमित्याशङ्क्याह— **अत्रेति** । न चात्राप्रस्तुतप्रशंसा शङ्कनीया, प्रस्तुतस्याप्यभिधानादिति । इत्थं चाधाराधेयान्यतरस्य तनोरप्याधिक्यवर्णनमिति सामान्यलक्षणं बोध्यम् ॥ ९६ ॥

इत्यलंकारचन्द्रिकायामधिकालंकारप्रकरणम् ॥ ४१ ॥

**अल्पमिति** । यदिति सामान्ये नपुंसकम् । स्वापेक्षया सूक्ष्मादाधेयादाधारस्य सूक्ष्मता यत्तदल्पं नामालंकारः ॥ **मणीति** । मणिपङ्क्तिरूपा ऊर्मिका

---

पाठा०—१ 'तदपि वर्ण्यते'. २ 'जपवटायते'.

यथा वा,—

यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि! दृश्यते।
मृणालसूत्रमपि ते न संमाति स्तनान्तरे॥ ९७॥

---

अन्योन्यालंकारः ४३

**अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्।**
**त्रियामा शशिना भाति शशी भाति त्रियामया॥९८॥**

यथा वा,—

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः।
तथा प्रपापालिकापि धारां वितनुते तनुम्॥

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या विरलाङ्गुलिकरणतश्चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः। तथा प्रपापालिकयापि पानीयपानव्याजेन चिरं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणतश्चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः। अत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेऽपि परस्परोपकारोऽपि न निवार्यते॥ ९८॥

---

अङ्गुलीयकं ते करे अद्य विरहावस्थायां जपमालायत इत्यर्थः। 'वटी'शब्दस्य गुटिकापर्यायत्वात्। अतिसूक्ष्मता आधेयभूतमालापेक्षयापि सूक्ष्मता॥ **यदिति**। हे चञ्चलाक्षि! तव मध्यभागादपि यत् सूक्ष्मं दृश्यते तत् मृणालसूत्रमपि तव स्तनयोरन्तरे मध्ये न मातीत्यन्वयः॥ ९७॥

इत्यलंकारचन्द्रिकायामल्पालंकारप्रकरणम्॥ ४२॥

**अन्योन्यमिति**। यत्र परस्परमुपकारः स्यात्तत्रान्योन्यं नामालंकारः। त्रियामा रात्रिः॥ **यथेति**। ऊर्ध्वाक्ष ऊर्ध्वनयनः। प्रपापालिका पानीयदानाधिकृता काचिद्वनिता। धारां जलधाराम्। तनुं सूक्ष्माम्॥ **अत्रेति**। प्रपापालिकायाः पथिकेनोपकारः कृत इत्यन्वयः। स्वासक्त्येत्यादि प्रपापालिकाया विशेषणम्। संपादनेन करणभूतेन। एवं प्रपापालिकयापि पथिकस्योपकारः कृत इत्यन्वयः। यत्तु स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वशब्दस्य प्रपापालिकाबोधकत्वमेव न्याय्यं न पान्थबोधकत्वं यद्विशेषणघटकत्वेन स्वनिजादिशब्दा उपात्तास्तद्बोधका इति व्युत्पत्तिरिति कैश्चिदुक्तम्,–तदयुक्तम्; मुख्यविशेष्यविशेषणघटकस्यैव स्वनिजादिशब्दस्य मुख्यविशेष्यमात्रगामित्वव्युत्पत्तेः, यथा देवदत्तस्य पुत्रः स्वमातृभक्त इत्यादौ स्वशब्दस्य तादृशपुत्रगामित्वम्, नतु गुणभूतदेवदत्तगामित्वम्; अत एवेदृशस्थल एव। 'निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवोद्दण्डपादो भवान्या' इत्यत्राभवन्मतयोगत्वं दूषणमुदाहृतं मम्मटभट्टैः

## विशेषालंकारः ४४

**विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।**
**गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ९९ ॥**

यथा वा,—

कमलमनम्भसि कमले कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

अत्राद्ये सूर्यस्य प्रसिद्धाधारस्याभावेऽपि तत्कराणामन्यत्रावस्थितिरुक्ता । द्वितीये त्वम्भसः प्रसिद्धाधारस्याभावेऽपि कमल-कुवलययोरन्यत्रावस्थितिरुक्ता । क्वचित्प्रसिद्धाधाररहितानामाधारान्तरनिर्देशं विनैवाप्रलयमवस्थितेर्वर्णनं दृश्यते ।

यथा वा,—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥

अत्र कवीनामभावेऽपि तद्गिरामाधारान्तरनिर्देशं विनैवाप्रलयमवस्थितिर्वर्णिता ॥ ९९ ॥

**विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते ।**
**अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे ॥ १०० ॥**

यथा वा,—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम ! गतोऽसीति संतापेनानुमीयसे ॥ १०० ॥

---

काव्यप्रकाशिकायाम् । अन्यत्र तु न स्वविशेष्यगामित्वनियमः । स्वाश्रितानां विप्राणामयं पालकः, स्वाज्ञाकारिणां भृत्यानामयं कल्पवृक्ष इत्यादौ व्यभिचारात् । नचैवं स्वदाररतानां विप्राणामहं भक्त इत्यत्र मदीयदाररतानामिति प्रतीतिः स्यादिति वाच्यम् । तात्पर्यस्य नियामकत्वेनापत्त्यभावादिति ॥ ९८ ॥

इत्यलंकारचन्द्रिकायामन्योन्यालंकारप्रकरणम् ॥ ४३ ॥

**विशेष इति** । ख्यातं प्रसिद्धम् । तदुक्तम्—'विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः' इति । छिन्दन्ति नाशयन्ति । तत्कराः सूर्यकिरणाः । रात्रावादित्यस्याग्नौ प्रवेशश्रवणाद्दीपस्थत्वम् ॥ **कमलमिति** । अत्र कमलत्वादिना मुखादेरध्यवसानं बोध्यम् । कुवलये नेत्रे । तानि कमलकुवलयानि । कनकलतारूपायां कामिन्याम् । सा च कनकलतिका च । निर्देशः कथनम् । आप्रलयं प्रलयपर्यन्तम् ॥ **दिवमिति** । दिवमुपयातानामपि येषामनल्पगुणगणयुक्ता गिरः आकल्पं कल्पपर्यन्तं जगन्ति भुवनानि रमयन्तीत्यन्वयः ॥ ९९ ॥ प्रभेदान्तरमाह—

---

टिप्प०—1 'अस्मदुपलब्धेषु ग्रन्थेषु नेदं मम्मटोदाहृतं पद्यं दरीदृश्यते.

---

पाठा०—१ 'दीपस्थे'. २ 'दृश्यते'.

**किंचिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ।**
**त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥ १०१ ॥**

यथा वा,—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥

अत्राद्ये राजदर्शनारम्भेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वन्तरकृतिः । द्वितीये राजसृष्ट्यारम्भेण मनोभ्वादिसृष्टिरूपाऽशक्यवस्त्वन्तरकृतिः ॥ १०१ ॥

---

## व्याघातालंकारः ४५

**स्याद्[1]व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् ।**
**यैर्जगत्प्रीयते, हन्ति तैरेव कुसुमायुधः ॥ १०२ ॥**

यद् यत्साधनत्वेन लोकेऽवगतं तत्केनचित्तद्विरुद्धसाधनं क्रियेत चेत्स व्याघातः । यद्वा,—यत्साधनतया केनचिदुपात्तं तदन्येन तत्प्रतिद्वन्द्विना तद्विरुद्धसाधनं क्रियेत चेत्सोऽपि व्याघातः । तत्राद्य उदाहृतः ।

द्वितीयो यथा,—

दृशा[1] दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १०२ ॥

**सौकर्येण निबद्धापि क्रिया कार्य[2]विरोधिनी ।**
**दया चेद्बाल इति मय्यपरित्याज्य एव ते ॥ १०३ ॥**

---

**यदीति** ॥ १०० ॥ तृतीयं प्रकारमाह—**किंचिदिति** । किंचित्पदार्थारम्भेणाशक्यस्य वस्त्वन्तरस्य कृतिः, करणं च स विशेषः । **त्वामिति** । प्रभुं प्रति याचकोक्तिः ॥ **स्फुरदिति** । उत्कटः प्रतापरूपो ज्वलनोऽग्निर्यस्येत्यर्थः । उक्तविशेषणं त्वां सृजता विधिना भुवि नवो मनोभ्वादिः ससृजे सृष्ट इति सत्यमित्यन्वयः । अत्र चोक्तभेदत्रयान्यतमत्वं सामान्यलक्षणं बोध्यम् ॥ १०१ ॥

इत्यलंकारचन्द्रिकायां विशेषालंकारप्रकरणम् ॥ ४४ ॥

**स्यादिति** । तथाकारि तत्कार्यसाधनं वस्तु अन्यथाकारि तत्कार्यविरुद्धकार्यसाधनं चेत्क्रियेत तदा व्याघातोऽलंकारः स्यादित्यर्थः ॥ **यैरिति** । यैः कटाक्षविभ्रमादिभिर्जगत्प्रीयते संतुष्यति तैरेव कुसुमायुधो हन्तीत्यन्वयः । विरूपाक्षस्य हरस्य जयिनीर्विजयकारिणीः । स्तुवे स्तौमि ॥ १०२ ॥ भेदान्तरमाह—**सौकर्येणेति** । कारणस्यानुगुण्याधिक्येनेत्यर्थः । निबद्धा कविवर्णिता । कार्यविरोधिनी पराभिमतकार्यविरुद्धा ॥ **दयेति** । दिग्विजयाय प्रस्थितं राजानं प्रति युव-

**टिप्प०**—1 अत्र दृशैव दाहो नाम विनाशस्तद्विपर्यस्तं जीवनं चोक्तम्; वस्तुतस्तु विसदृशकार्ये विसदृशकारणत्वमावश्यकमिति व्याघातः ।

---

**पाठा०**—१ 'स्यादुद्घातो'. २ 'कार्यविरोधिनी'.

कार्यविशेषनिष्पादकतया केनचित्संभाव्यमानादर्थादन्येन कार्यविरोधिक्रियासौकर्येण समर्थ्यते चेत् सोऽपि व्याघातः । कार्यविरुद्धक्रियायां सौकर्यं कारणस्य सुतरां तदानुगुण्यम् । यथा जैत्रयात्रोन्मुखेन राज्ञा युवराजस्य राज्य एव स्थापने यत्कारणत्वेन संभावितं बाल्यं तत्प्रत्युत तद्विरुद्धस्य सहनयनस्यैव कारणतया युवराजेन परित्यागस्यायुक्तत्वं दर्शयता समर्थ्यते ।

यथा वा,—

लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥

अत्र पूर्वोत्तरार्धे पक्षप्रतिपक्षरूपे कयोश्चिद्वचने इति लक्षणानुगतिः ॥ १०३ ॥

---

## कारणमालालंकारः ४६

**गुम्फः कारणमाला स्याद्यथा[1]प्राक्प्रान्तकारणैः ।**
**नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥१०४॥**

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा वस्तुभिः कृतो गुम्फः कारणमाला । तत्राद्योदाहृता ।

द्वितीया यथा,—

भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भ[2]वेत् ॥ १०४ ॥

---

राजस्योक्तिः । 'बाल' इत्यतो मयि दया यौवराज्ये स्थापनरूपा चेत्तदा तस्मादेव हेतोरहं तवापरित्याज्य एव, किंतु स्वेन सह नेतव्य इत्यर्थः । अर्थादिति हेतौ पञ्चमी । अन्वयश्चास्य समर्थ्यते इत्यनेन । अन्येन वक्त्रा ॥ **जैत्रेति** । जयसाधनेनेत्यर्थः ॥ **लुब्ध इति** । तयैव शङ्कया दारिद्र्यशङ्कयैव । ननु निश्चितम् । अत्र पूर्वार्धे लुब्धस्य दानाभावसाधकत्वाभिमतदारिद्र्यशङ्कारूपपूर्वपक्षनिरूपणम् । दातुस्तु सैव विरुद्धदानसाधकत्वेन संमतेति पूर्वविरुद्धपक्षनिरूपणमुत्तरार्धे । यद्यपि दारिद्र्यस्य तात्कालिकत्वेन जन्मान्तरीयत्वेन च शङ्का भिन्ना तथाप्यभेदाध्यवसायान्न लक्षणसमन्वय इति बोध्यम् । सामान्यलक्षणं पूर्ववदन्यतमत्वघटितमनुसंधेयमिति दिक् ॥ १०३ ॥

इत्यलंकारचंद्रिकायां व्याघातालंकारप्रकरणम् ॥ ४५ ॥

**गुम्फ इति** । रचनेत्यर्थः । कैस्तत्राह—**यथेति** । प्राक् च प्रान्तं च प्राक्प्रान्ते, ते अनतिक्रम्येति यथाप्राक्प्रान्तं यानि कारणानि तैः पूर्वं पूर्वं प्रति कारणैरुत्तरोत्तरं प्रति कारणैश्चेत्यर्थः । एवं चोत्तरोत्तरेत्यादिन्व्युत्क्रमेणाभिधानमुदाहरणक्रमानुरोधेनेति ज्ञेयम् ॥ १०४ ॥

इत्यलंकारचन्द्रिकायां कारणमालालंकारप्रकरणम् ॥ ४६ ॥

---

पाठा०—१ 'यदा'. २ 'अभवत्'.

### एकावल्यलंकारः ४७

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता ।
नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भदोलितौ ॥ १०५ ॥
दोःस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ।
जानुनी रत्नमुकुराकारे तस्य हि भूभुजः ॥ १०६ ॥

उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषणभावो वा गृहीतमुक्तरीतिः । तत्राद्यः प्रकार उदाहृतः ।

द्वितीयो यथा,—

दिक्कालात्मसमैव यस्य विभुता यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा राशेः स यासामभूत् ।
यस्तत्पित्तमुषःसु योऽस्य हविषे यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु वो मूर्तयः ॥ १०५–१०६ ॥

---

### मालादीपकालंकारः ४८

दीपकैकावलीयोगान्मालादीपकमिष्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ १०७ ॥

अत्र स्थितिरिति पदमेकं, स्मरेण तस्या हृदये स्थितिः कृता तेन तस्य हृदयेन त्वयि स्थितिः कृतेत्येवं वाक्यद्वयान्वयि । अतो दीपकम्, गृहीतमुक्त-

---

**गृहीतेति** । वक्ष्यमाणया गृहीतमुक्तरीत्या निबद्धार्थपङ्क्तिरेकावलिरलंकारः ॥ **नेत्रे इति** । तस्य भूभुज इति सर्वत्र संबध्यते । दोःस्तम्भयोर्भुजस्तम्भयोर्दोलितमान्दोलनं ययोस्तौ । 'दोलिनौ' इति पाठे दोलनं दोला ययोरस्तीति विग्रहः । रत्नमुकुरो रत्नदर्पणः ॥ **दिक्कालेति** । दिक्कालात्मभिस्तुल्या यस्याकाशस्य विभुता । यश्च तत्राकाशे विशेषेण द्योतते सूर्यः । यत्र च चन्द्रे अमुष्य सूर्यस्य किरणा अमृतरूपा भवन्ति । स च चन्द्रो यासामपां राशेः समुद्रादभूत् । यश्चाग्निस्तासामपां पित्तं भवति । 'शुचिरप्पित्तम्' इति कोशात् । यश्च यजमान उषःसु प्रातःकालेऽप्यस्य वह्नेर्हविषे हविर्दानाय भवति । यश्च वायुः प्राणरूपस्तस्य यजमानस्य जीवातवे जीवनौषधाय भवति । यस्याश्च पृथिव्या गुणं गन्धमेष वायुर्वोढा ता मन्मथरिपोर्हरस्याष्टौ मूर्तयो वो युष्मान् पान्त्वित्यन्वयः ॥ १०५–१०६ ॥

इत्यलंकारचन्द्रिकायामेकावल्यलंकारप्रकरणम् ॥ ४७ ॥

**मालादीपकमिति** । मालादीपकं नामालंकारः । एकमिति वाक्यद्वयान्वयीत्यनेनान्वितम् ॥ **अत इति** । एतावन्मात्रेण दीपसादृश्याद्दीपकं न तु प्रागुक्त-

---

पाठा०—१ 'वली'. २ 'दोलनौ'. ३ 'प्रलम्बन'. ४ 'महीभुजः'. ५ 'मुच्यते'.

रीतिसद्भावादेकावली चेति दीपकैकावलीयोगः । यथा वा,—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः, शरैररिशिरस्तेनापि भूमण्डलं,
तेन त्वं, भवता च कीर्तिरतुला, कीर्त्या च लोकत्रयम् ॥

अत्र 'येन येन सहसा यद्यत्समासादित'मिति संक्षेपवाक्यस्थितमेकं 'समासादितम्' इति पदं 'कोदण्डेन शरा' इत्यादिषु पदस्वपि विवरणवाक्येषु तत्तदुचितलिङ्गवचनविपरिणामेनान्वेतीति दीपकम् । शरादीनामुत्तरोत्तरविशेषणाभावादेकावली चेति दीपकैकावलीयोगः ॥ १०७ ॥

---

## सारालंकारः ४९

**उत्तरोत्तरमुत्कर्षः सार[1] इत्यभिधीयते ।**
**मधु मधुरं तस्माच्च सुधा तस्याः कवेर्वचः ॥ १०८ ॥**

यथा वा,—

अन्तर्विष्णोस्त्रिलोकी निवसति, फणिनामीश्वरे सोऽपि शेते,
सिन्धोः सोऽप्येकदेशे, तमपि चुलुकयां कुम्भयोनिश्चकार ।
धत्ते खद्योतलीलामयमपि नभसि, श्रीनृसिंहक्षितीन्द्र !
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥

अयं श्लाघ्यगुणोत्कर्षः ।

अश्लाघ्यगुणोत्कर्षो यथा—

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥

---

दीपकालंकारः । प्रकृताप्रकृतानां सादृश्यस्य गम्यत्वे तदङ्गीकारादिति भावः ॥ **संग्रामेति ।** कोदण्डेन धनुषा शराः समासादिताः, शरैः शत्रुमस्तकं समासादितं, तेन शत्रुमस्तकेनापि भूमण्डलं, तेन भूमण्डलेन त्वं पालकः समासादितः, भवता कीर्तिरासादिता, कीर्त्या च लोकत्रयं समासादितमित्यनुषङ्गेणान्वयः ॥ १०७ ॥

इत्यलंकारचन्द्रिकायां मालादीपकालंकारप्रकरणम् ॥ ४८ ॥

**उत्तरेति ।** सार इति सारो नामालंकारः । तस्याः सुधातः ॥ **अन्तरिति ।** विष्णोरन्तरुदरे त्रयाणां लोकानां समाहारस्त्रिलोकी । सोऽपि विष्णुरपि फणिनां नागानामीश्वरे शेषे शेते निद्राति । सोऽपि शेषोऽपि सिन्धोरेकदेशे तिष्ठतीति शेषः । तमपि सिन्धुमपि कुम्भयोनिरगस्त्यश्चुलुकयां चकार पीतवान् । अयमगस्त्योऽपि नभसि गगने खद्योतशोभां धत्ते । इदं गगनमपि प्रेक्षणीयं

टिप्प०—1 दर्पणेऽपि—'उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते' इति लक्षयित्वा—'राज्ये सारं वसुधायामपि पुरं पुरे सौधम्' इत्युदाजहार विश्वनाथः ।

---

पाठा०—१ 'उच्चलित'.

उभयरूपो यथा,—

गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् ।
नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥

अत्र ब्रह्मपर्यन्तेषु महत्त्वं श्लाघ्यगुणः । प्रकृतार्थाशायामश्लाघ्यगुणः ॥ १०८ ॥

---

यथासंख्यालंकारः ५०

**यथासंख्यं[1] क्रमेणैव क्रमिकाणां समन्वयः ।**
**शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥ १०९ ॥**

यथा वा,—

शरणं किं प्रपन्नानि विषवन्मारयन्ति वा ? ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥

अमुं क्रमालंकार इति[2] केचिद्व्याजह्रुः[1] ॥ १०९ ॥

---

पर्यायालंकारः ५१

**पर्यायो[3] यदि पर्यायेणैकस्यानेकसंश्रयः ।**
**पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा[2] ॥ ११० ॥**

अत्रैकस्य[3] कामिनीवदनसादृश्यस्य क्रमेण पद्मचन्द्ररूपानेकाधारसंश्रयणं पर्यायः । यद्यपि पद्मसंश्रयणं कण्ठतो नोक्तं तथापि 'पद्मं मुक्त्वा' इति तत्परि

---

सुन्दरं त्वत्कीर्तेः कर्णभूषणं नीलोत्पलं विभातीत्यन्वयः । तूलः कार्पासः । प्रकृतार्थाशायां प्रकृतार्थरूपायामाशायाम् ॥ १०८ ॥

इत्यलंकारचन्द्रिकायां सारालंकारप्रकरणम् ॥ ४९ ॥

**यथासंख्यमिति ।** क्रमिकाणां क्रमेणोक्तानां पदार्थानां तेनैव क्रमेणान्वयो यथासंख्यं नामालंकारः ॥ **शरणमिति ।** कृपणेन धनानि यत् न त्यज्यन्ते तत्किं तानि शरणं प्रपन्नानि, यच्च न भुज्यन्ते; तत्किं विषवन्मारयन्तीति क्रमेणान्वयः । केचित् वामनादयः ॥ १०९ ॥

इत्यलंकारचन्द्रिकायां यथासंख्यालंकारप्रकरणम् ॥ ५० ॥

**पर्याय इति ।** पर्यायेण क्रमेण । अनेकसंश्रयोऽनेकाश्रितत्वम् । तदुक्तम्

---

**टिप्प०**—1 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इत्युक्तं **काव्यप्रकाशे** । 2 तथा चोक्तं **काव्यालंकारसूत्रवृत्तौ** (४।३।१७)—'उपमेयोपमानानां क्रमसंबन्धः क्रमः; उपमेयानामुपमानां चोद्देशिनामनुद्देशिनां च क्रमेण संबन्धः' इति लक्षणं विधाय 'तस्याः प्रवृद्धलीलाभिः' इति पद्यमुदाहृतं **वामनेन** । 3 'क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् । भवति क्रियते वा चेत्तदा पर्याय इष्यते' इति लक्षणमुक्तं **दर्पणे** ।

---

**पाठा०**—१ 'व्यवजह्रुः'. २ 'वदनप्रभा'. ३ 'एकस्याः कामिनीवदनभाकान्तेः'.

त्यागोक्त्या प्राक् तत्संश्रयाक्षेपेण पर्यायनिर्वाहः । अत एव ( बालभारते )—

'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥'

इत्यत्र पर्यायं काव्यप्रकाशकृदुदाजहार । सर्वत्र शाब्दः पर्यायो यथा,—

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ? ।
प्रागर्णवस्य हृदये, वृषलक्ष्मणोऽथ,
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

सर्वोऽप्ययं शुद्धपर्यायः । संकोचपर्यायो यथा,—

प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् ।
प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥

अत्र शैत्यस्योत्तरोत्तरमाधारसंकोचात् संकोचपर्यायः । विकासपर्यायो यथा,—

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि ! दृश्यते ॥

अत्र रागस्य पूर्वाधारपरित्यागेनाधारान्तरसंक्रमणमिति विकासपर्यायः ॥ ११० ॥

---

( का. प्र. १०।१८० )—'एवं क्रमेणानेकस्मिन्पर्यायः' इति ॥ **पद्ममिति** । रात्रौ पद्मसंकोचात्त्यागः । अत एव त्यागेन पूर्वसंश्रयणाक्षेपादेव ॥ **श्रोणीति** । जघनबन्धस्तनुतां कृशतां त्यजति । मध्यभागस्तां सेवते । आश्रयति । वक्षःस्थलं कुचसचिवतां कुचसहितत्वं धत्ते । वक्त्रं त्वद्वितीयम् । अत्र पूर्वं वक्षसोऽद्वितीयत्वावगमात्पर्यायसंभवो ज्ञेयः । अद्वितीयत्वं द्वितीयरहितत्वमनुपमत्वं चैकत्वेनाध्यवसितम् । एवं चोदाहरणद्वयेऽपि पूर्वाधारसमाश्रयणं गम्यम् । उत्तराधारसमाश्रयणं शाब्दमिति सर्वत्र सर्वाधारसमाश्रयणांशे ॥ **नन्विति** । हे कालकूट ! उत्तरोत्तरं विशिष्टमुत्कृष्टं पदं स्थानं यस्यां तादृशी इयमाश्रयस्थितिस्तव केनोपदिष्टेत्यन्वयः । हृदयेऽभ्यन्तरे । अवस इति शेषः । अथानन्तरं वृषलक्ष्मणो हरस्य कण्ठे । अधुना पुनरिति संबन्धः । शुद्धः संकोचविकासामिश्रितः ॥ **प्राय इति** । शैत्यं प्रायोऽशेषां वसुधां हेमन्ते चरित्वा ततो वसन्ते तरूणां छायासु विश्रम्य संप्रति ग्रीष्मे तिग्मभानौ सूर्ये प्रौढिं प्रागल्भ्यं प्राप्ते सति शनैरपां जलानामन्तरमभ्यन्तरे अयासीत् । गच्छतिस्मेत्यर्थः ॥ **बिम्बोष्ठ एवेति** । बिम्बफलसदृशे ओष्ठे । रागो रक्तिमा, अनुरागश्च । एष रागः । अत्र रागस्य भेदेऽप्यभेदाध्यवसायादेकत्वम् ।

---

**टिप्प०-1** पद्यमिदं राजशेखरप्रणीते बालभारतनाटके स्वयंवरसमये द्रुपदसभाधिष्ठितभीमसेनेन द्रौपदीं समवलोक्य भणितम् ।

---

**पाठा०**—१ 'श्रोणीभागः'. २ तद्गात्राणां'. ३ कवीनाम्.

एकस्मिन्यद्यनेकं वा पर्यायः सोऽपि संमतः ।
अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि ॥ १११ ॥

यथा वा,—

पुराऽभूदस्माकं प्रथममविभिन्ना तनुरियं,
ततो नु त्वं प्रेयान्, वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं, वयमपि कलत्रं किमपरं,
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥

अत्र दम्पत्योः प्रथममभेदः, ततः प्रेयसीप्रियतमभावः, ततो भार्यापतिभाव इत्याधेयपर्यायः ॥ १११ ॥

---

## परिवृत्त्यलंकारः ५२

परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः ।
जग्राहैकं शरं मुक्त्वा कटाक्षात्स रिपुश्रियम् ॥ ११२ ॥

यत्तु एकसंबन्धनाशोत्तरमपरसंबन्धे सत्येव लोके पर्यायपदप्रयोगाच्छ्रोणीबन्ध इति प्रकाशोदाहृते तथैव दृष्टत्वाच्च 'बिम्बोष्ठ एव' इत्यत्र पर्यायकथनमयुक्तमिति केनचिदुक्तं,—तत्प्रकाश एव 'बिम्बोष्ठ' इत्युदाहरणे पर्यायसमर्थनाक्रान्तप्रलपनमिवोपेक्षणीयम् । आलंकारिकपरिभाषितानां शब्दानां लोकव्यवहारविसंवादस्याकिंचित्करत्वाच्चेति दिक् ॥ ११० ॥ भेदान्तरमाह—**एकस्मिन्निति** । पर्यायेणेत्यनुवर्तते । एकस्मिन्नाधारे क्रमेण यद्यनेकं भवति सोऽपि पर्यायालंकारः संमत इत्यर्थः ॥ **पुरेति** । अस्माकमिति 'अस्मदो द्वयोश्च' (१।२।५९) इति द्वयोरपि बहुवचनम् । पुरेत्यनेन स्थूलोऽतीतकाल उच्यते । तत्रापि प्रथमं तनुरविभिन्नाभूत् । ततो नु वितर्के । त्वं प्रियतमः । वयं प्रियतमाः । इदानीं तु त्वं नाथः पतिः । वयं भार्याः । इतोऽपरं किमिष्टमिति शेषः । कुलिशं वज्रम् । अत्र 'त्वं प्रेयान्' इत्येकवचनेन एकरूपप्रेमपात्रत्वं व्यज्यते । 'प्रियतमाः' इत्यादिबहुवचनेनानेकरूपतद्व्यतिरेक इति बोध्यम् ॥ १११ ॥

इत्यलंकारचन्द्रिकायां पर्यायालंकारप्रकरणम् ॥ ५१ ॥

**परिवृत्तिरिति** । न्यूनाधिकयोर्मिथः परस्परं विनिमयः परिवृत्तिरलंकारः ॥

---

**टिप्प०—1** पर्यायो नाम क्रमः, 'पर्यायोऽवसरे क्रमे' इत्यमरकोशोक्तेरस्यान्वर्थता । 'एकं क्रमेणानेकस्मिन्नन्यस्ततोऽन्यथा' इति पर्यायालंकारस्य द्वैविध्यं प्राह **मम्मटः** । एकं वस्तु क्रमेणानेकस्मिन्भवति क्रियते वा स प्रथमः पर्यायालंकारः । अनेकमेकस्मिन्क्रमेण भवति क्रियते वा सोऽन्य इति । 2 अयं परिवृत्तिरलंकारो समेन समस्य विनिमयरूपो न्यूनेनोत्तमस्य विनिमयरूपश्चेति द्विविधः । तदुक्तं **काव्यप्रकाशे**—'परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समाऽसमैः' इति । एतदेव लक्षणमङ्गीकृत्य 'शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् । चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम्' इत्युदाजहार **दण्डी** ।

---

**पाठा०—१** 'श्रोतः'. २ 'कटाक्षान्स'. ३ 'रिपुश्रियम्'.

यथा वा,—

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ? ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥ ११२ ॥

---

### परिसंख्यालंकारः ५३

**परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम् ।**
**स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥ ११३ ॥**

यथा वा,—

विलङ्घयन्ति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः ॥

आद्योदाहरणे निषेधः शाब्दः; द्वितीये त्वार्थः ॥ ११३ ॥

---

### विकल्पालंकारः ५४

**विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता[1] ।**
**सद्यः शिरांसि चापान्वा नमयन्तु महीभुजः ॥ ११४ ॥**

अत्र संधिविग्रहप्रमाणप्राप्तयोः शिरश्चापनमनयोर्युगपदुपस्थितयोर्युगपत्कर्तुमशक्ययोर्विकल्पः ।

---

**जग्राहेति** । कटाक्षपूर्वकमेकं शरं मुक्त्वा रिपोः श्रियं जग्राहेत्यर्थः ॥ **तस्य चेति** । प्रवयसो वृद्धस्य जटायुषो गृध्रविशेषस्य स्वर्गं गतवतः किमिव शोचनीयम् ? न किंचित् । जर्जरं जीर्णतरं कलेवरं शरीरं तस्य व्ययो रावणेन सह युद्धे त्यागस्तस्माद्यशः क्रीतम् । शरीरं दत्त्वा यशो गृहीतमित्यर्थः ॥ ११२ ॥

इत्यलंकारचन्द्रिकायां परिवृत्त्यलंकारप्रकरणम् ॥ ५२ ॥

**परिसंख्येति** । एकं वस्तु प्रतिषिध्यापरस्मिन्वस्तुनो नियन्त्रणं नियमनं परिसंख्यालंकारः ॥ **स्नेहेति** । स्नेहस्तैलादिस्निग्धद्रव्यम्, अनुरागश्च । स्वान्तेषु चित्तेषु ॥ **विलङ्घयन्तीति** । यस्याम् उज्जयिनीपुर्याम् । श्रुतिः कर्णः, वेदश्च । वर्त्म मार्गं । वक्रिमाणं कौटिल्यं; वक्राकारतां च । महाकाल इति तत्रैव ख्यातं शिवलिङ्गम् ॥ ११३ ॥

इत्यलंकारचन्द्रिकायां परिसंख्यालंकारप्रकरणम् ॥ ५३ ॥

**संधिविग्रहप्रमाणेति** । संधिविग्रहयोः कर्तव्यताबोधकप्रमाणेत्यर्थः ११४

इत्यलंकारचन्द्रिकायां विकल्पालंकारप्रकरणम् ॥ ५४ ॥

---

टिप्प०—1 साहित्यदर्पणे तु 'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः' इति लक्षणमुक्तम् । प्रकाशकारादीनां त्वस्य पृथगलंकारत्वमसंमतम् । 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः' इत्यलंकारस्वरूपत्वविरहात् ।

यथा वा,—

पतत्यविरतं वारि नृत्यन्ति च कलापिनः ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥

प्रियसमागमश्चेन्न मरणमाशंसनीयं, मरणे तु न प्रियसमागमसंभव इति द्वयोराशंसायां विकल्पः ॥ ११४ ॥

---

## समुच्चयालंकारः ५५

**बहूनां युगपद्भावभाजां[1] गुम्फः समुच्चयः[1] ।**
**नश्यन्ति पश्चात्पश्यन्ति त्रस्यन्ति[2] च भवद्द्विषः ॥ ११५ ॥**

अविरोधेन संभावितयौगपद्यानां नाशादीनां गुम्फनं समुच्चयः ।

यथा वा,—

बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद्विदधाति सा विधुरिता साधो ! तदाकर्ण्यताम् ।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्च्छति त्रुट्यति ॥

अत्र कासांचित्क्रियाणां किंचित्कालभेदसंभवेऽपि शतपत्रपत्रशतभेदन्यायेन यौगपद्यं विरहातिशयद्योतनाय विवक्षितमिति लक्षणानुगतिः ॥ ११५ ॥

---

**बहूनामिति** । युगपद्भावो भवनं तद्भाजां बहूनां गुम्फो निबन्धः । वर्णनमिति यावत् । स समुच्चयालंकारः ॥ **बिभ्राणेति** । नायकं प्रति दूत्या इयमुक्तिः । हे साधो ! त्वया हृदये विनिहितं प्रेमाभिधानं नवं शल्यं धारयन्ती विधुरिता विरहविह्वला सा नायिका यद्विदधाति तदाकर्ण्यतामित्यन्वयः । किं तदित्यपेक्षायामाह—शेते निद्राति । ताम्यति ग्लानिं प्राप्नोति । प्रकर्षेण म्लायति । प्रेङ्खति चलति । प्रणश्यति नैर्बल्यातिशयेन मृतप्राया भवति । गलति । उन्मूर्च्छति । खेदातिशयात् । त्रुट्यति क्षीणा भवतीति । कासांचित् शयनभ्रमणादीनाम् । शत-

---

**टिप्प०**—1 'समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके । खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ॥ गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये' इति **दर्पणे.** अतादृशमपि तादृशतया विवक्षितुं यदप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत् समानगुणनिबन्धनात्सामान्यम् । यदाह **मम्मटः**—'प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया । ऐकात्म्यं बध्यते योगात्तत्सामान्यम्' इति ।

---

**पाठा०**—१ 'युगपद्भाजां भावगुम्फः'. २ 'भ्रश्यन्ति च तव द्विषः'.

अहंप्राथमिकाभाजामेककार्यान्वयेऽपि सः ।
कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम् ॥ ११६ ॥

यत्रैकः कार्यसिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्येऽपि यद्यहमहमिकया खलेकपोतन्यायेन तत्सिद्धिं कुर्वन्ति सोऽपि समुच्चयः । यथा मदे आभिजात्यमेकं समग्रं कारणं तादृगेव रूपादिकमपि तत्साधनत्वेनावतरतीति ।

यथा वा,—

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि-
निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं प्रथयति ॥ ११६ ॥

---

## कारकदीपकालंकारः ५६

क्रमिकैकगतानां तु गुम्फः कारकदीपकम् ।
गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति ॥ ११७ ॥

यथा वा,—

निद्राति स्नाति भुङ्क्ते चलति कचभरं शोषयत्यन्तरास्ते
दीव्यत्यक्षैर्न चायं गदितुमवसरो भूय आयाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान्द्वारि दीना-
नस्मान् पश्याब्धिकन्ये ! सरसिरुहरुचामन्तरङ्गैरपाङ्गैः ॥

---

पत्रस्य कमलस्य पत्रशतं दलशतम् ॥ ११५ ॥ अहंप्राथमिकेति । अहंपूर्विकेत्यर्थः । 'अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम्' इत्यमरः । एककार्यान्वये एककार्यसाधकत्वे । स समुच्चयालंकारः । अहमहमिकया परस्पराहंकारेण । आभिजात्यं कुलीनत्वम् । समग्रं पुष्कलम् ॥ प्रदानमिति । प्रच्छन्नं गुप्तं गृहं प्रत्युपगतेऽर्थादतिथौ । लक्ष्म्यां सत्यां निरुत्सेको गर्वाभावः । अभिभवो निन्दा तद्गन्धशून्याः । मौनमनुद्घाटनम् । सदसि सभायां परेण कृताया उपकृतेः कथनम् । श्रुते शास्त्रश्रवणे । सर्वप्रथमान्तानां पुरुषमभिजातं प्रथयतीत्यनेनान्वयः । अभिजातं कुलीनम् । प्रथयति कथयति ॥ ११६ ॥

इत्यलंकारचन्द्रिकायां समुच्चयालंकारप्रकरणम् ॥ ५५ ॥

क्रमिकेति । क्रमिकाणामर्थात्क्रियाणामेककारकगतानां गुम्फो निबन्धः कारकदीपकं नामालंकारः । तदुक्तम् (का०प्र०१०।१०३)—'सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' इति । सैव सकृद्वृत्तिः । पश्यति सार्थम् । पृच्छति मार्गम् ॥ निद्रातीति ।

---

टिप्प०—1 असावप्यलंकारः प्रायः सर्वेषां पृथक्त्वेनासंमतः ।

---

पाठा०—१ 'प्रथमिका', २ 'कार्यान्वयोऽपि'. ३ 'शीलं'.

१२ कुवल०

आद्योदाहरणे श्रुतस्य पान्थस्य कर्तृकारकस्यैकस्य गमनादिष्वन्वयः; द्वितीये त्वध्याहृतस्य प्रभुकर्तृकारकस्य निद्रादिष्वन्वय इत्येकस्यानेकवाक्यार्थान्वयेन दीपकच्छायापत्त्या कारकदीपकं प्रथमसमुच्चयप्रतिद्वन्द्वीदम् ॥ ११७ ॥

---

## समाध्यलंकारः ५७

**समाधिः[1] कार्यसौकर्यं कारणान्तरसंनिधेः ।**
**उत्कण्ठिता च तरुणी[1] जगामास्तं च भानुमान् ॥ ११८ ॥**

यथा वा (काव्या० २।२९९),—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥

केनचिदारिप्सितस्य कार्यस्य कारणान्तरसंनिधानाद्यत्सौकर्यं तत्सम्यगाधानात् समाधिः । द्वितीयसमुच्चयप्रतिद्वन्द्वी अयं समाधिः । तत्र हि बहूनां प्रत्येकं समर्थानां खलेकपोतकन्यायेन[2] युगपत्कार्यसाधनत्वेनावतारः । अत्र त्वेकेन कार्ये समारिप्सितेऽन्यस्य काकतालीयन्यायेनापतितस्य तत्सौकर्याधायकत्वमात्रम् । अत्रोदाहरणम्—उत्कण्ठितेति । उत्कण्ठैव प्रियाभिसरणे पुष्कलं कारणं नान्धकारागमनमपेक्षते । 'अत्यारूढो हि नारीणामकालज्ञो मनोभवः' इति न्यायात् । दैवादापतता त्वन्धकारेण तत्सौकर्यमात्रं कृतमिति । एवं द्वितीयोदाहरणेऽपि योज्यम् ॥ ११८ ॥

---

हे अब्धिकन्ये ! प्रभूणामुद्यतदण्डैर्द्वारि अधिकृतैर्द्वारपालैरित्यसकृद्वारितान् अत एव दीनानस्मान् सरसिरुहद्युतीनां परमपरिचितैरपाङ्गैः कटाक्षैः पश्येत्यन्वयः । इति किम् ? प्रभुर्निद्रातीत्यादि । अन्तः अन्तःपुरे । अक्षैः पाशैर्दीव्यति क्रीडति । भूयः पुनः । छायासादृश्यं मुख्यदीपकस्य पूर्वोक्तप्रकारेण संभवादिति भावः । प्रतिद्वन्द्वि विपरीतम् ॥ ११७ ॥

इत्यलंकारचन्द्रिकायां कारकदीपकालंकारप्रकरणम् ॥ ५६ ॥

**समाधिरिति** । कारणान्तरसंनिधेर्वशात्कार्यस्य सुकरत्वं समाधिरलंकारः । उत्कण्ठिता नायकसमीपं गन्तुम् ॥ **मानमिति** । मानं निराकर्तुमस्याः पादयोः पतिष्यतो ममोपकाराय दिष्ट्या भाग्येनेदं घनगर्जितमुदीर्णमुद्गतमित्यन्वयः । समुच्चये कारणानां तुल्यकक्षत्वम्; इह तु तद्विपरीतमतुल्यकक्षत्वमिति प्रतिद्वन्द्वित्वं तत्रेत्यादिना दर्शितम् ॥ ११८ ॥

इत्यलंकारचन्द्रिकायां समाध्यलंकारप्रकरणम् ॥ ५७ ॥

---

**टिप्प०**—1 दर्पणे तु 'समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात्' इत्युक्तम् । साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं समाधीयते स समाधिरिति फलितम् । 2 'वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति' इत्यनेन न्यायेनेति भावः ।

---

पाठा०—१ 'कुलटा'.

## प्रत्यनीकालंकारः ५८

प्रत्यनीकं[1] बलवतः शत्रोः पक्षे पराक्रमः ।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ ॥ ११९ ॥

यथा वा,—

मम रूपकीर्तिमहरद्भुवि यस्तदनु प्रविष्टहृदयेयमिति ।
त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥

एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति ।

यथा वा,—

मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन ।
बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति ॥ ११९ ॥

---

**प्रत्यनीकमिति** । बलवतः शत्रोः, पक्षे पक्षान्तःपातिनि तदीये यः पराक्रमस्तत्प्रत्यनीकं नामालंकारः, अनीकप्रतिनिधिरूपत्वात् ॥ **जैत्रेति** । उत्पलाभ्यां स्वजयकारिनेत्रानुसारिणौ कर्णावधःकृतौ तिरस्कृतौ । अवतंसतया तदुपरिस्थितत्वादधस्तात्कृतौ चेति श्लेषः ॥ **ममेति** । भुवि भूलोके मम रूपख्यातिं यो हृतवान् तस्मिन्ननुप्रविष्टमनुरक्तं हृदयं यस्याः, तस्यानुप्रविष्टं हृदयं यस्यां वा तादृगियमिति त्वयि मत्सरादिव खलु निश्चितं निरस्तदयो मदनस्तां क्षिणोति क्षीणां करोतीत्यन्वयः । अत्र 'मत्सरादिव' इति हेत्वंशे उत्प्रेक्षासत्त्वेऽपि तद्धेतुकप्रतिपक्षसंबन्धिबाधनं प्रत्यनीकालंकारस्य विविक्तो विषय इति बोध्यम् । अत एव **मम्मटभट्टै**रपि ( का. प्र. १०।१९६ )—'त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्त्वां तापयत्यनुशयादिव कामः ॥' इत्युदाहृतम् । एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारान्तरं भवितुमर्हतीति कस्यचिद्वचनमनादेयम् ॥ **कैमुतिकेति** । तत्संबन्धिबाधनापेक्षया साक्षात्तद्बाधने विशेषादिति भावः ॥ **मधुव्रति** । भ्रमरौघः स्वकीयमधुप्रपारूपस्य पद्मस्य निमीलनेन कुपितः सन् सुधांशोर्बिम्बं बलात्समाक्रम्य तस्याङ्के मध्यभागे कलङ्कं ध्रुवमातनोतीत्यन्वयः ॥ ११९ ॥

इत्यलंकारचन्द्रिकायां प्रत्यनीकालंकारप्रकरणम् ॥ ५८ ॥

---

**टिप्प०**—1 अनीकेन सदृशं प्रत्यनीकम्, सादृश्यस्य यथार्थत्वेनैव संग्रहे पुनः सादृश्यग्रहणात् गुणीभूतेऽपि सादृश्येऽव्ययीभावः । लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते; तदशक्तौ प्रतिपक्षसंबंधिनः कस्यचित्तिरस्कारः क्रियते; स चानीकसदृशप्रयुज्यमानत्वात् प्रत्यनीकमुच्यते । अत्र च प्रतिपक्षगतं बलवत्त्वं, आत्मगतं दुर्बलत्वं च गम्यत इति **रसगंगाधरकारः** ।

## अर्थापत्त्यलंकारः ५९

**कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते[1] ।**
**स जितस्त्वन्मुखेनेन्दुः, का वार्ता सरसीरुहाम् ? ॥१२०॥**

अत्र स इत्यनेन पद्मानि येन जितानि इति विवक्षितम्; तथा च सोऽपि येन जितस्तेन पद्मानि जितानीति किमु वक्तव्यमिति दण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः । तान्त्रिकाभिमतार्थापत्तिव्यावर्तनाय काव्येति विशेषणम् ।

यथा वा,—

अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः ।
अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ? ॥
स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ ।
हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ? ॥ १२० ॥

---

**कैमुत्येनेति ।** कैमुत्यन्यायेनेत्यर्थः । काव्येऽलंकाररूपार्थापत्तिः काव्यार्थापत्तिः ॥ **दण्डापूपिकेति ।** दण्डाकर्षणे तदवलम्बिनामपूपानामाकर्षणं यथार्थसिद्धं तद्वदित्यर्थः ॥ **व्यावर्तनायेति ।** लक्ष्यतावारणायेत्यर्थः ॥ **अधरोऽयमिति ।** बन्धुजीवं बन्धूकपुष्पं तत्प्रभाहरः, बन्धुभूतानां जीवानां प्रभाहरश्च । यत्त्वेतल्लक्षणमयुक्तम्, कैमुतिकन्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः । यथा—'तवाग्रे यदि दारिद्र्यं स्थितं भूप ! द्विजन्मनाम् । शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयम्' ॥ अत्र 'शनैः'शब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्रे तमोवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्यादापद्यते । ननु कैमुतिकन्यायेनेति केनचिदुक्तं, तत्रेदं वक्तव्यम्—केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिरिति तदुक्तलक्षणमयुक्तम् । 'का वार्ता सरसीरुहा'मित्यादिकैमुत्यन्यायविषयार्थापत्तावव्याप्तेः । कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्यायत्वाभावादापादनाप्रतीतेश्चेति । न चात्र कैमुत्यन्यायतामात्रं न त्वलंकारत्वमिति युक्तम्, अलंकारतत्त्वाभियुक्तानां प्राचीनानां शून्यहृदयताया अपामरेण संभावयितुमशक्यत्वात् । लोकव्यवहारेऽपि कैमुत्यन्यायस्य चमत्कारित्वानुभवेन तेनैव न्यायेन तस्यालंकारतासिद्धेश्च । इत्थं च त्वदुक्तार्थापत्त्युदाहरणे वक्ष्यमाणः संभावनालंकारो योऽन्यैः 'यद्यर्थोक्तौ च कल्पनम्' इति यद्यर्थातिशयोक्तित्वेनोक्तः । यद्यर्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थविश्रान्तत्वम्, इह त्वापादकस्य सिद्धत्वमापाद्यस्य संभाव्यमानत्वमिति वैचित्र्यं तु तदवान्तरभेदतायाः साधकं न तु तद्बहिर्भूताया इति न तत्राव्याप्तिशङ्कापीत्यलं विस्तरेण ॥ १२० ॥

इत्यलंकारचन्द्रिकायामर्थापत्त्यलंकारप्रकरणम् ॥ २७ ॥

---

**टिप्प०**—1 'कल्पनं चान्यथासिद्ध्यार्थस्यार्थापत्तिरिष्यते' इति केचित् । दर्पणे तु—'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते' इत्युक्तम् ।

## काव्यलिङ्गालंकारः ६०

**समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।**
**जितोऽसि मन्द! कन्दर्प! मच्चित्तेऽस्ति त्रिलोचनः ॥१२१॥**

अत्र कन्दर्पजयोपन्यासो दुष्करविषयत्वात्समर्थनसापेक्षः तस्य 'मच्चित्तेऽस्ति त्रिलोचन' इति स्वान्तःकरणे शिवसंनिधानप्रदर्शनेन समर्थनं काव्यलिङ्गम् । व्याप्तिधर्मतादिसापेक्षनैयायिकाभिमतलिङ्गव्यावर्तनाय काव्यविशेषणम् । इदं वाक्यार्थहेतुकं काव्यलिङ्गम् । पदार्थहेतुकं यथा,—

भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभं
हा सोपानपरम्परे ! गिरिसुताकान्तालयालंकृते !।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निलीयामहे ॥

अत्र मोक्षस्य महामोहत्वमप्रसिद्धमिति तत्समर्थने सुखालोकोच्छेदिनीति पदार्थौ हेतुः । क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः ।

यथा वा ( नैषध० २।२० ),—

चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्विभर्ति सा ।
पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छति चामरेण कः ॥

अत्र चामरस्य दमयन्तीकुन्तलभारसाम्याभावेऽपि 'विदुषी मूर्धनि यान्बिभर्ति सा' इति वाक्यार्थः, 'पशुनाप्यपुरस्कृतेने'ति पदार्थश्चेत्युभयं मिलितं हेतुः । क्वचित्समर्थनीयार्थसमर्थनार्थे वाक्यार्थे पदार्थौ हेतुः । यथा वा,—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे ! न क्वापि क्वचिदपि भवन्तं प्रणतवान् ।

---

**समर्थनीयस्येति** । समर्थनापेक्षस्यार्थस्य समर्थनं काव्यलिङ्गमलंकारः । अर्थान्तरन्यासवारणाय–समर्थनापेक्षस्येति । यदा त्वर्थान्तरन्यासप्रकरणे वक्ष्यमाणरीत्या सामान्यविशेषभावातिरिक्तत्वं निवेश्यते तदा नोपादेयमेवैतदिति बोध्यम् । दुष्करविषयत्वात् दुष्करविषयरूपत्वात् । समर्थनापेक्षस्येत्यनन्तरमर्थस्येति शेषः ॥ **नैयायिकेति** । नैयायिकाभिमतलिङ्गस्य लक्ष्यतावारणायेत्यर्थः ॥ **भस्मेति** । भस्मोद्धूलनेति संबोधनम् । शुभमस्त्विवति शेषः । गिरिसुताकान्तस्य शिवस्यालयः प्रासादस्तदलंकारभूते सोपानपङ्क्ते इत्यपि संबोधनम् । 'हा'इति दैन्ये । विभुना प्रभुणा शिवेन । युष्माकं या सपर्या पूजा तत्सुखस्यालोकः प्रकाशस्तदुच्छेदके निलीयामहे । वयमित्यर्थात् ॥ **चिकुरेति** । चिकुरप्रकराः केशपाशाः । विदुषी पण्डिता । सा दमयन्ती अपुरस्कृतेनानादृतेन पुरोभागेऽनिहितेन च । पदार्थश्चानेकपदार्थश्च ॥ **वपुरिति** । पुरा पूर्वस्मिन्क्वापि जन्मनि क्वचिदपि क्षणे

---

**टिप्प०**—1 वाक्यार्थत्वेन पदार्थत्वेन वा हेतुनिरूपणं काव्यलिङ्गमलंकारः । तदुक्तं साहित्यदर्पणे—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति ।

---

**पाठा०**—१ 'सोपानपरंपरां'. २ 'लयालंकृतिम्'. ३ 'निधीयामहे'. ४ 'प्रायः'. ५ 'क्षणमपि'.

नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमा-
नितीश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अत्र तावदपराधद्वयं समर्थनीयम्; अस्पष्टार्थत्वात्। तत्समर्थनं च पूर्वापरजन्मनोरनमनाभ्यां वाक्यार्थभूताभ्यां क्रियते। अत्र द्वितीयवाक्यार्थेऽतनुत्वमेकपदार्थो हेतुः। अत्रापि संप्रति 'नमन्मुक्त' इति वाक्यार्थोऽनेकपदार्थो वा हेतुः। क्वचित्परस्परविरुद्धयोः समर्थनीययोरुभयोः क्रमादुभौ हेतुभावं भजतः॥

यथा,—

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः।
प्रमोदं वो दिश्यात्कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः॥

अत्र शिवस्य युगपत्कृत्रिमब्रह्मचर्यवेषापनयनत्वरातदनुवर्तनेच्छयोर्विरुद्धयोः क्रमाद्गिरिजातिव्रतपसोऽसहिष्णुत्वं तत्संलापकौतुकं चेत्युभावर्थौ हेतुत्वेन निबद्धौ। क्वचित्परस्परविरुद्धयोरुभयोः समर्थनीययोरेक एव हेतुः। यथा,—

जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम्।
अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च॥

अत्र विफलत्वसफलत्वकलनयोरुभयोर्विरुद्धयोरेक एवाम्बुधितनयाधररसास्वादो हेतुः। इदं काव्यलिङ्गं इति, हेत्वलंकार इति केचिद्व्याजह्रुः॥

हे गोदावरि ! देवि ! तावकतटोद्देशे कलिङ्गः कवि-
र्वाग्देवीं बहुदेशदर्शनसखीं त्यक्त्वा विरक्तिं गतः।

---

भवन्तं न प्रणतवान्, इतीदं वपुषः शरीरस्य प्रादुर्भावादनुमितम्। संप्रति नमन्नतिं कुर्वन्मुक्तः। अतनुरशरीरः। अतोऽहमग्रेऽप्यनतिमान्नतिरहितः॥ **अत्रेति**। समर्थनीयं हेतुकथनेनोपपादनीयम्। अस्पष्टार्थत्वात् अस्पष्टहेतुकत्वात्। अत्रानयोर्वाक्यार्थयोर्मध्ये। द्वितीयवाक्यार्थे अग्रेऽप्यनतिमानिति वाक्यार्थे। अत्राप्यतनुत्वेऽपि। नमन्मुक्त इत्यस्यावाक्यत्वादाह—**अनेकपदार्थो वेति**। **असोढेति**। तपस्यन्तीमुमां प्रति बटुवेषेणागतस्य हरस्य वर्णनम्। कपटेन यो बटोर्ब्रह्मचारिणो वेषस्तस्यापनयने त्यागे त्वराशैथिल्याभ्यां युगपदभियुक्त आक्रान्तः। त्वराशैथिल्यहेतुगर्भं क्रमेण विशेषणद्वयमाह—तत्काले उल्लसन्प्रादुर्भवन्नसहभावो दुःसहत्वमर्थाद्वैर्यां यस्य तादृशस्य तपसः असोढा सहनासमर्थः शैलकन्यायाः कथानां विस्रम्भेषु विश्वासेषु रसिकश्चेति। ब्रह्मचर्यं ब्रह्मचारिवेषः॥ **जीयादिति**। अम्बुधेस्तनयाया लक्ष्म्या अधररसमास्वादयन्नयं मुरारिर्जीयात्सर्वोत्कर्षेण वर्तताम्। कीदृशः? समुद्रमथनक्लेशमेवंविधाङ्गनालाभात्सफलं कलयन् जानन् एतदधरमाधुर्ये सत्यमृतस्य वैयर्थ्याद्विफलं च कलयन्नित्यर्थः॥ **हे गोदावरीति**। अत्रार्णवमध्येत्यादिब्रह्मविशेषणस्य न्यसनं श्लेषाख्यो

---

पाठा०—१ 'संप्रत्यतनुरहमग्रे'. २ 'प्यनतिभाक् महेश'.

एनामर्णवमध्यसुप्तमुरभिन्नाभीसरोजासनं
ब्रह्माणं गमय क्षितौ कथमसावेकाकिनी स्थास्यति ॥

इत्यत्र 'ब्रह्मणः प्रापणं कथं गोदावर्या कर्तव्यम्?' इत्यसंभावनीयार्थोपपादकस्य 'अर्णवमध्ये'त्यादितद्विशेषणस्य न्यसनं श्लेषाख्यो गुण इति, 'श्लेषोऽविघटमानार्थघटकार्थस्य वर्णनम्' इति श्लेषलक्षणमिति च जयदेवेनोक्तम्। वस्तुतस्त्वत्रापि पदार्थहेतुकं काव्यलिङ्गमेव, तद्भेदकाभावात्। ननु साभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरात्काव्यलिङ्गस्य किं भेदकम्? उच्यते,—परिकरे पदार्थवाक्यार्थबलात्प्रतीयमानार्थौ वाच्योपस्कारकतां भजतः। काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजतः। ननु यद्यपि 'सुखालोकोच्छेदिनी'त्यादिपदार्थहेतुककाव्यलिङ्गोदाहरणे 'अग्रेऽप्यनतिमान्' इत्यादिवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च पदार्थ-वाक्यार्थावेव हेतुभावं भजतस्तथापि 'पशुनाप्यपुरस्कृतेन' इति पदार्थहेतुकोदाहरणे 'मच्चित्तेऽस्ति त्रिलोचनः' इति वाक्यार्थहेतुकोदाहरणे च प्रतीयमानार्थस्यापि हेतुकोट्यनुप्रवेशो दृश्यते। पशुनेति ह्यविवेकित्वाभिप्रायगर्भम्। विदुषीत्यस्य प्रतिनिर्देश्यत्वात्। त्रिलोचन इति च कन्दर्पदाहकतृतीयलोचनत्वाभिप्रायगर्भम्। कन्दर्पजयोपयोगित्वात्तस्य। सत्यम्। तथापि न तयोः परिकर एव किंतु तदुत्थापितं काव्यलिङ्गमपि ॥

प्रतीयमानाविवेकित्वविशिष्टेन पशुनाप्यपुरस्कृतत्वस्यानेकपदार्थस्य, प्रतीय-

---

गुण इति जयदेवेनोक्तमित्यन्वयः। तावकतटोद्देशे त्वदीयतीरभूमौ कलिङ्गाख्यः कविर्बहूनां देशानां दर्शने सहचारिणीम्। विरक्तिं मुक्तिम्। एनां सरस्वतीं ब्रह्माणं प्रति गमय नयेति संबन्धः। कीदृशम्? अर्णवमध्ये सुप्तो यो मुरभिन्मुरारिस्तन्नाभिकमलस्थम् ॥ श्लेषोऽविघटमानेत्यत्राकारप्रश्लेषः। अविघटमानस्यानुपपद्यमानस्यार्थस्य घटक उपपादको योऽर्थस्तस्य वर्णनं श्लेषाख्यो गुण इत्यर्थः। पदार्थहेतुकं समस्तपदार्थहेतुकम्। पदार्थवाक्यार्थेति द्वन्द्वः। प्रतीयमानोऽर्थो व्यङ्ग्योऽर्थः ॥ **प्रतिनिर्देश्यत्वादिति**। निर्दिश्यते उच्चार्यत इति निर्देशः शब्दः तेन। विपरीतार्थशब्दत्वादित्यर्थः। तस्य तादृशतृतीयलोचनत्वस्य। तथा चोभयत्र परिकरालंकारसत्त्वात्काव्यलिङ्गोदाहरणत्वमनुपपन्नमिति भावः। तयोः पशुनेत्याद्युक्तोदाहरणयोः। तदुत्थापितं परिकरोपपादितम्। व्यङ्ग्यस्य हेतुकोटावेवानुप्रवेशादिति भावः ॥ एतदेव विवृणोति—**प्रतीयमानेति**। वाच्यस्यैवेत्येवकारसूचितं व्यङ्ग्यद्वारकत्वं न हीत्यादिना विवृतम्। तदयमर्थः—यदि पश्वादिपदव्यङ्ग्यं केशपाशसाम्याभावादेरर्थस्य साक्षादुपपादकं स्यात्तदाऽत्र परिकर एव स्यात्, न काव्यलिङ्गम्। न त्वेवमस्ति; पशुपदप्रतीताविवेकित्वमात्रेण साम्याभावस्योपपादनासंभवात्। किंतु तद्विशिष्टपशुपुरस्कृतत्वाभाव एव साक्षादुपपादक इति तत्कोटिनिविष्टं व्यङ्ग्यं काव्यलिङ्गरूपस्य तस्याङ्गमेव। व्यङ्ग्यान्तरं तु

---

पाठा०—१ 'परिकराङ्कुर'.

मानकन्दर्पदाहकभावतृतीयलोचनविशिष्टस्य शिवस्य चित्ते संनिधानस्य च वाक्यार्थस्य वाच्यस्यैव हेतुभावात् । न हि तयोर्वाच्ययोर्हेतुभावे ताभ्यां प्रतीयमानं मध्ये किंचिद्द्वारमस्ति। यथा 'सर्वाशुचिनिधानस्य' इत्यादिपदार्थपरिकरोदाहरणे सर्वाशुचिनिधानस्येत्यादिनानेकपदार्थेन प्रतीयमानं शरीरस्यासंरक्षणीयत्वम् । तथा च वाक्यार्थपरिकरोदाहरणेऽपि पर्यायोक्तविधया तत्तद्वाक्यार्थेन प्रतीयमानं 'नाहं व्यास' इत्यादि। तस्मात् 'पशुने'त्यत्र 'त्रिलोचन' इत्यत्र च प्रतीयमानं वाच्यस्यैव पदार्थस्य वाक्यार्थस्य च हेतुभावोपपादकतया काव्यलिङ्गस्याङ्गमेव । 'यथा—'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्' इत्यनेकवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे 'त्वन्नेत्रसमानकान्ती' त्यादिकानि इन्दीवरशशिहंसविशेषणानि तेषां वाक्यार्थानां हेतुभावोपपादकानीति । तत्र वाक्यार्थहेतुककाव्यलिङ्गे पदार्थहेतुककाव्यलिङ्गमङ्गमिति न तयोः काव्यलिङ्गोदाहरणत्वे काचिदनुपपत्तिः ॥ १२१ ॥

---

## अर्थान्तरन्यासालंकारः ६१

उक्तिरर्थान्तरन्यासः[1] स्यात्सामान्यविशेषयोः ।
हनूमानब्धिमतरद्दुष्करं[1] किं महात्मनाम् ॥ १२२ ॥
गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण[2] सूत्रं शिरसि धार्यते ॥ १२३ ॥

सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थान्तरन्यासस्तयोश्चैकं प्रस्तुतम्, अन्यदप्रस्तुतं भवति । ततश्च विशेषे प्रस्तुते तेन सहाप्रस्तुतसामान्यरूपस्य सामान्ये प्रस्तुते तेन सहाप्रस्तुतविशेषरूपस्य वार्थान्तरस्य न्यसनमर्थान्तरन्यास इत्युक्तं भवति। तत्राद्यस्य द्वितीयार्धमुदाहरणं, द्वितीयस्य द्वितीयश्लोकः। नन्वयं काव्यलिङ्गा-

---

नोक्तकाव्यलिङ्गगम्यार्थोपपादकमस्तीति निराबाधमेव काव्यलिङ्गमिति । ननु स्वयमन्योपपादकस्य काव्यलिङ्गस्याप्युपपादकं क्व दृष्टमित्याशङ्क्योदाहरति— **यत्त्वन्नेत्रेति** । एतत्प्रतीपालंकारे प्रागुदाहृतम् ॥ **अनेकवाक्यार्थहेतुकेति** । पूर्वपादत्रयवाक्यार्थत्रयस्य चतुर्थपादार्थे हेतुत्वमिति ज्ञेयम् ॥ **हेतुभावोपपादकानीति** । इन्दीवरस्य नेत्रसमानकान्तित्वं विना पटादेरिव तददर्शनस्य दैवगतकान्तासादृश्यविनोदासहिष्णुत्वे हेतुत्वासंभवादिति भावः । समाहितमर्थमुपसंहरति—**इतीति** । तयोः पशुनापीति मच्चित्तेऽस्तीत्येतयोः ॥ १२१ ॥

इत्यलंकारचन्द्रिकायां काव्यलिङ्गालंकारप्रकरणम् ॥ २८ ॥

---

**टिप्प०—1** 'सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥ साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः' इत्युक्तं साहित्यदर्पणे ।

---

**पाठा०—१** 'दुस्तरं किं'. २ 'नुसंगेन'.

त्वातिरिच्यते। तथा हि—उदाहरणद्वयेऽप्यप्रस्तुतयोः सामान्यविशेषयोरुक्तिः प्रस्तुतयोर्विशेषसामान्ययोः कथमुपकरोतीति विवेक्तव्यम्। न हि सर्वथैव प्रस्तुतानन्वय्यप्रस्तुताभिधानं युज्यते। न तावदप्रस्तुतप्रशंसायामिव प्रस्तुतव्यञ्जकतया, प्रस्तुतयोरपि विशेषसामान्ययोः स्वशब्दोपात्तत्वात्। नाप्यनुमानालंकार इव प्रस्तुतप्रतीतिजनकतया तद्वदिह व्याप्तिपक्षधर्मताद्यभावात्। नापि दृष्टान्तालंकार इव उपमानतया,—

'विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः।
वनतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः॥'

इत्यादिषु सामान्ये विशेषस्योपमानत्वदर्शनेऽपि विशेषे सामान्यस्य क्वचिदपि तददर्शनात्, उपमानतया तदन्वये सामञ्जस्याप्रतीतेश्च। तस्मात्प्रस्तुतसमर्थकतयैवाप्रस्तुतस्योपयोग इहापि वक्तव्यः। ततश्च वाक्यार्थहेतुकं काव्यलिङ्गमेवात्रापि स्यान्न त्वलंकारान्तरस्यावकाश इति चेत्। अत्र केचित्,—समर्थनसापेक्षस्यार्थस्य समर्थने काव्यलिङ्गं निरपेक्षस्यापि प्रतीतिवैभवात्समर्थनेऽर्थान्तरन्यासः। न हि 'यत्त्वन्नेत्रसमानकान्ति' इत्यादिकाव्यलिङ्गोदाहरणेष्विव,'—

'क्षयोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम्॥'
'दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्॥
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव॥' (कुमार०१।१२)

---

प्रस्तुतव्यञ्जकतयेति। अप्रस्तुताभिधानं युज्यत इत्यनुषज्यते। एवमग्रेऽपि॥ विस्रब्धेति। खलस्य विश्वस्तघातरूपो दोषः स्वस्यैव वधाय भवति। यतो वीराणां कोपकारकः। सिंहनिद्रापहारी नवतरुभङ्गजन्यध्वनिः करिणो वधाय यथेत्यर्थः। तददर्शनात् उपमानत्वादर्शनात्। ननु महापुरुषाकृतिरिव गम्भीरेयमस्याकृतिरित्यादौ सामान्यस्याप्युपमानता दृष्टेत्यरुचेराह—उपमानेति। इवाद्यभावात्तात्पर्याभावाच्चोपमानतयाऽन्वयस्य सामञ्जस्येनाप्रतीतेरित्यर्थः। इहापीत्यपिना काव्यलिङ्गसमुच्चयः। प्रतीतिवैभवात् प्रतीतिदार्ढ्यरूपप्रयोजनवशात्। प्रयोजनस्यापि हेतुत्वविवक्षया पञ्चमी॥ उक्तवैलक्षण्यमुदाहरणनिष्ठतया दर्शयति—न हीत्यादिना। इत्यादिकाव्यलिङ्गोदाहरणेष्विव॥ अथेति। अथेत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनार्थित्वं न ह्यस्तीति संबन्धः। शरदा शशाङ्के उपगूढे आलिङ्गिते सति। अथानन्तरम्। शान्तास्तडिद्रूपाः कटाक्षा यस्याः सा प्रावृट् ययौ गतवती। उक्तं विशेषरूपमर्थं सामान्यरूपेणार्थान्तरेण समर्थयति। परिभ्रष्टपयोधराणां कासामङ्गनानां सौभाग्यगुणो न नष्ट इति। पयोधराः कुचा मेघाश्च॥ दिवाकरादिति। कुमारसंभवे हिमालयवर्णनम्। यो हिमालयः। ममत्वं मदीयताबुद्धिः। शिरो मस्तकं शिखरं च॥ समर्थनार्थित्वं समर्थनापेक्षत्वम्। अयमर्थान्तरन्यासे समर्थनानपेक्षत्वरूपः। सामान्यस्येत्यस्य बुद्धौ प्रति-

इत्याद्यर्थान्तरन्यासोदाहरणेषु प्रस्तुतस्य समर्थनापेक्षत्वमस्तीति । वस्तुतस्तु प्रायोवादोऽयम् । अर्थान्तरन्यासेऽपि हि विशेषस्य सामान्येन समर्थनानपेक्षत्वेऽपि सामान्यं विशेषेण समर्थनमपेक्षत एव 'निर्विशेषं न सामान्य'मिति न्यायेन 'बहूनामप्यसाराणां संयोगः कार्यसाधकः' इत्यादिसामान्यस्य 'तृणैरारभ्यते रज्जुस्तया नागोऽपि बध्यते' इत्यादि संप्रतिपन्नविशेषावतरणं विना बुद्धौ प्रतिष्ठितत्वासंभवात् ॥

न च तत्र सामान्यस्य 'कासां न सौभाग्यगुणोऽङ्गनाना'मित्यादिविशेषसमर्थनार्थं सामान्यस्येव लोकसंप्रतिपन्नतया विशेषावतरणं विनैव बुद्धौ प्रतिष्ठितत्वं संभवतीति श्लोके तन्न्यसनं नापेक्षितमस्तीति वाच्यम्; सामान्यस्य सर्वत्र लोकसंप्रतिपन्नत्वनियमाभावात् । न हि यो यो धूमवान् स सोऽग्निमानिति व्याप्तिरूपसामान्यस्य लोकसंप्रतिपन्नतया यथा महानस इति तद्विशेषरूपदृष्टान्तानुपादानसंभवमात्रेणाप्रसिद्धव्याप्तिरूपसामान्योपन्यासेऽपि तद्विशेषरूपदृष्टान्तोपन्यासनैरपेक्ष्यं संभवति । न चैवं सामान्येन विशेषसमर्थनस्थलेऽपि क्वचित्तस्य सामान्यस्य लोकप्रसिद्धत्वाभावेन तस्य बुद्धावारोहाय पुनर्विशेषान्तरस्य न्यासप्रसङ्ग इति वाच्यम्; इष्टापत्तेः । अत्रैव विषये विकस्वरालंकारस्यानुपदमेव दर्शयिष्यमाणत्वात् । किंच काव्यलिङ्गेऽपि न सर्वत्र समर्थनसापेक्षत्वनियमः । 'चिकुरप्रकरा जयन्ति ते' इत्यत्र तदभावादुपमानवस्तुषु वर्णनीयसाम्याभावेन निन्दायाः कविकुलक्षुण्णत्वेनात्र समर्थनापेक्षाविरहात् । न हि 'तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्वणशर्वरीश्वरः' इत्यादिषु समर्थनं दृश्यते ॥

'न विषेण न शस्त्रेण नाग्निना न च मृत्युना ।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥'

इत्यादिकाव्यलिङ्गविषयेषु समर्थनापेक्षाविरहेऽप्यप्रतीकारपारुष्या इत्यादिना समर्थनदर्शनाच्च । नहि तत्र स्त्रीणां विषादिनिर्मितत्वाभावप्रतिपादनं समर्थनसापेक्षं प्रसिद्धत्वात् । तस्मादुभयतो व्यभिचारात्समर्थनापेक्षसमर्थने काव्यलिङ्गं, तन्निरपेक्षसमर्थनेऽर्थान्तरन्यास इति न विभागः, किंतु सामर्थ्य-

---

ष्ठितत्वासंभवादित्यनेनान्वयः ॥ **संप्रतिपन्नेति** । वक्तृश्रोतृसंमतेत्यर्थः । विशेषावतरणं विशेषावगमनम् । तत्र बहूनामित्यादौ सामान्यस्येति विशेषावतरणे विनैव बुद्धौ प्रतिष्ठितत्वं संभवतीत्यग्रिमेणान्वितम् । तन्न्यसनं तृणैरित्यादिविशेषन्यसनम् । नन्वेवमप्यर्थान्तरन्यासे क्वचिदेव समर्थनापेक्षा, काव्यलिङ्गे तु सर्वत्र सेत्यस्तु भेद इत्याशङ्क्याह—**किंचेति** । कविकुलक्षुण्णत्वेन कविसमूहाभ्यस्तत्वेन । तदास्यदास्ये नलमुखदास्ये । पर्वणि पूर्णिमायां भवः पार्वणः शर्वरीश्वरश्चन्द्रः न विषेणेत्यादेः स्त्रियः कृता इत्यनेनान्वयः, अपि तु स्त्रीभिरेव । यतः प्रतीकाररहितं पारुष्यं क्रौर्यं यासां तथाभूताः । उभयतोऽन्वयव्यतिरेकाभ्याम् । समर्थनापेक्षायामपि तदास्यदास्येऽपीत्यादौ तदभावात् । न विषेणेत्यादावपेक्षा-

समर्थकयोः सामान्यविशेषसंबन्धेऽर्थान्तरन्यासः । तदितरसंबन्धे काव्यलिङ्गमित्येव व्यवस्थावधारणीया । प्रपञ्चश्चित्रमीमांसायां द्रष्टव्यः ।

एवमप्रकृतेन प्रकृतसमर्थनमुदाहृतम् । प्रकृतेनाप्रकृतसमर्थनं यथा (कुमार० ५।३६)—

यदुच्यते पार्वति ! पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने ! तपस्विनामप्युपदेशतां गतम् ॥

यथा वा,—

दानं ददत्यपि जलैः सहसाधिरूढे
को विद्यमानगतिरासितुमुत्सहेत ? ।
यद्दन्तिनः कटकटाहतटान्मिमङ्क्षो-
र्मङ्क्षूदपाति परितः पटलैरलीनाम् ॥ १२२–१२३ ॥

---

## विकस्वरालंकारः ६२

**यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः[1] ।**
**स न जिग्ये महान्तो हि दुर्धर्षाः[1] सागरा इव ॥ १२४ ॥**

---

विरहेऽपि समर्थनसत्त्वात् । **अप्रकृतेनेति** । आद्ये महात्मनां सर्वसुकरत्वेनाप्रकृतेन सामान्येन हनुमदब्धितरणस्य प्रकृतविशेषस्य समर्थनम्; द्वितीये पुष्पमालासूत्रवृत्तान्तेनाप्रकृतेन विशेषरूपेण प्रकृतस्य गुणवत्सङ्गप्रयुक्तपूज्यत्वस्य सामान्यरूपस्य समर्थनमित्यर्थः ॥ **यदुच्यत इति** । हे पार्वति! रूपमाकृतिसौन्दर्यं पापवृत्तये दुष्टाचरणाय न भवति, 'यत्राकृतिस्तत्र गुणा वसन्ति' इति न्यायादिति यदुच्यते तद्वचनमव्यभिचारि यथार्थम् । तथा हि—उदारं रमणीयं दर्शनं यस्यास्तथाभूते हे पार्वति! तव शीलमाचरणं तपस्विनामप्युपदेशरूपतां प्राप्तमिति प्रकृतेन विशेषेणाप्रकृतस्य सामान्यस्य समर्थनम् ॥ **दानमिति** । दानं वितरणं मदजलं च । जलैरुदकैः, जडैश्च । लडयोरभेदात् । अधिरूढे आक्रान्ते सति । विद्यमानगतिः समतिको बुद्धिमांश्च कः आसितुं स्थातुमुत्सहेत शक्नुयात्? । यस्मान्मिमङ्क्षोर्मज्जनं कर्तुमिच्छोर्दन्तिनो गजस्य कटो गण्ड एव कटाहस्तस्य तटादग्रादलीनां पटलैः समूहैः परितो मङ्क्षु शीघ्रमुदपाति उत्पतितमित्यन्वयः । अत्रापि पूर्वार्धोक्तमप्रकृतसामान्यमुत्तरार्धोक्तेन प्रकृतेन विशेषेण समर्थितम् ॥ १२२–१२३ ॥

इत्यलंकारचन्द्रिकायामर्थान्तरन्यासालंकारप्रकरणम् ॥ ६१ ॥

---

**टिप्प०**—1 विकस्वरो न पृथगलंकारान्तरम्, समर्थ्यसमर्थकयोः सामान्यविशेषभावसंबन्धेऽर्थान्तरन्यासस्य सद्भावात्; तदितरसंबन्धे कारणेन कार्यस्य कार्येण कारणस्य वा समर्थने काव्यलिङ्गस्याभ्युपगमात् इति केचित् ।

---

**पाठा०**—१ 'दुर्दर्शाः'.

यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्यार्थान्तरन्यासविधया वा विन्यस्यते तत्र विकस्वरालंकारः। उत्तरार्धं यथाकथंचिदुदाहरणम्। इदं तु व्यक्तमुदाहरणम् (कुमार० १।३)—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥

इदमुपमानरीत्या विशेषान्तरस्य न्यसने उदाहरणम्। अर्थान्तरन्यासविधया यथा,—

कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक! स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम्।
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालपतिते पङ्के न शङ्केत कः?॥

यथा वा,—

मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
धत्तो मुखे तु तव दक्तिलकाञ्जनाभाम्।

---

**यस्मिन्निति।** यस्मिन्काव्ये इत्यर्थात्। निबध्यत इति शेषः। समर्थ्यसमर्थकभावापन्नत्वं तु न लक्षणे निवेशनीयम्। तद्विना चमत्काराभावेन चमत्कारित्वविशेषणमवश्यवक्तव्येनैवानतिप्रसङ्गात्। एवमर्थान्तरन्यासलक्षणेऽपि बोध्यम्॥ **स नेति।** स प्रकृतो राजा न जिग्ये न जितः। अर्थात् परैरिति शेषः। तत्समर्थनं महान्तो हि दुर्धर्षा अनाक्रमणीया इति सामान्येन तस्यापि सागरा इवेति विशेषोपमयेति ज्ञेयम्। प्रसिद्धेरल्पत्वात्तत्रापरितोषो बोध्यः॥ **यथाकथंचिदिति।** महतामनाक्रमणीयत्वस्यातिप्रसिद्धत्वेन तत्समर्थनापेक्षाभावाच्चन्द्रलोकगतमेतन्न समञ्जसमिति भावः। इदं वक्ष्यमाणम्॥ **व्यक्तमिति।** गुणसमुदाये एकस्य दोषस्यानाकलनमनतिप्रसिद्धत्वेन समर्थनापेक्षमिन्दोरित्यादिविशेषेण समर्थ्यत इत्यतः स्फुटमित्यर्थः॥ **कर्णेति।** हे काक! कर्णयोररुन्तुदं पीडाजनकं रसितं शब्दितमन्तरेण विना स्वयं मकरन्दः पुष्परसस्तच्छासिनं माकन्दमाम्रवृक्षं गाहस्व आश्रय। इहाम्रतरौ त्वां वयं कोकिलं मन्महे जानीमहे। यतः स्थलवैभवेन। स्थानमाहात्म्येन कतिचिद्वस्तूनि धन्यानि भवन्तीति सामान्येन पूर्वोक्तविशेषसमर्थनम्। अत्रापि तदाकाङ्क्षायां विशेषरूपमर्थान्तरं न्यसति—नेपालभूमिपालस्य भालपतिते पङ्के कस्तूरिकां को न शङ्केत? अपि तु सर्व इति॥ **मालिन्यमिति।** मधुलिट् भ्रमरः, कलङ्कश्च; एतावब्जशशिनोर्मालिन्यं धत्तः कुरुतः। तव मुखे तु दक् च तिलकाञ्जनं च तयोराभां शोभां धत्त इत्यनुषज्यते। 'अञ्जनाभे' इति पाठे द्वितीयाद्विवचनम्। उक्तमर्थं सामान्येन समर्थयति—दोषावपि क्वचित् मेलनतो मिथो मेलनात् गुणत्वमितः प्राप्नुत

दोषावितः क्वचन मेलनतो गुणत्वं
वक्तुर्गुणौ हि वचसि भ्रमविप्रलम्भौ ॥ १२४ ॥

---

## प्रौढोक्त्यलंकारः ६३

[1]प्रौढोक्तिरुत्कर्षाहेतौ[1] तद्धेतुत्वप्रकल्पनम् ।
कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥ १२५ ॥

कार्यातिशयाहेतौ तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः। यथा तमालगतनैल्यातिशयाहेतौ यमुनातटरोहणे तद्धेतुत्वप्रकल्पनम्। यथा वा,—

कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम् ।
रचितो रजोभरपयस्तेजःश्वासान्तराम्बरैरेषः ॥

अत्र कल्पवृक्षाद्येकैकवितरणातिशायिवर्णनीयराजवितरणातिशयाहेतौ कल्पवृक्षपरागादिरूपपञ्चभूतनिर्मितत्वेन तद्धेतुत्वप्रकल्पनं प्रौढोक्तिः ॥ १२५ ॥

---

## संभावनालंकारः ६४

संभावना[2] यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥ १२६ ॥

---

इति। कथमेतत्तत्राह—हि यतः वक्तुर्वचसि भ्रमविप्रलम्भौ भ्रान्तिप्रतारणे गुणौ भवतः। घटवति घटाभावं निर्णीय परप्रतारणाय घटोऽस्तीति प्रयुक्ते वाक्ये प्रमाजनकत्वात्तयोर्गुणत्वमिति भावः ॥ १२४ ॥

इत्यलंकारचन्द्रिकायां विकस्वरालंकारप्रकरणम् ॥ ६२ ॥

**प्रौढोक्तिरिति**। उत्कर्षस्याऽहेतावुत्कर्षहेतुत्वकल्पनं प्रौढोक्तिः। कलिन्दजा यमुना। स्तोमः समूहः। मेचकाः श्यामाः। रोहणे उद्भवे ॥ **कल्पेति**। एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभिः पञ्चभी[3] रचित इत्यन्वयः। धनदः कुबेरः। शङ्खो निधिविशेषः। रजोभरः परागसमूहः। पयो दुग्धम्। श्वासः प्रसिद्धः। अन्तराम्बरं शङ्खाभ्यन्तरगतमाकाशम्। अतिशायीत्यग्रिमवितरणेनान्वितम्। अहेतौ पञ्चनिर्मितत्वे इति सामानाधिकरण्येनान्वयः ॥ १२५ ॥

इत्यलंकारचन्द्रिकायां प्रौढोक्त्यलंकारप्रकरणम् ॥ ६३ ॥

**संभावनेति**। ऊहस्तर्कः। **कस्तूरिकेति**। अहं यदि सृष्टिकर्ता स्यां

---

टिप्प०—1 प्रौढोक्तिरपि न पृथगलंकारः; असंबन्धे सम्बन्धरूपातिशयोक्त्या गतार्थत्वादिति केचिदाहुः।

---

पाठा०—१ 'रुत्कर्षहेतौ'. २ 'संभावनं यदित्थं'. ३ 'पंचभिर्भूतैः'.

यथा वा,—

कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

'यद्यर्थोक्तौ च कल्पनम्' अतिशयोक्तिभेद इति (१०।१००) काव्यप्रकाशकारः ॥ १२६ ॥

---

## मिथ्याध्यवसित्यलंकारः ६५

**किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ।**
**मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥ १२७ ॥**

अत्र वेश्यावशीकरणस्यात्यन्तासंभावितत्वसिद्धये गगनकुसुममालिकाधारणरूपार्थान्तरकल्पनं मिथ्याध्यवसितिः । यथा वा,—

अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥

अत्राद्योदाहरणं निदर्शनागर्भम् । द्वितीयं तु शुद्धम् । असंबन्धे संबन्धरूपातिशयोक्तितो मिथ्याध्यवसितेः किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनात्मना विच्छित्तिविशेषेण भेदः ॥ १२७ ॥

---

तदा कस्तूरिकामृगाणामण्डादखिलं गन्धरूपं गुणमादाय खलजिह्वायां निवेशयिष्यामीत्यन्वयः ॥ १२६ ॥

इत्यलंकारचन्द्रिकायां संभावनालंकारप्रकरणम् ॥ ६४ ॥

**किंचिदिति ।** कस्यचिदर्थस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतार्थान्तरकल्पनं मिथ्याध्यवसितिरलंकारः । वेश्यामित्युदाहरणम् । खस्रजं गगनमालाम् । अत्र खपुष्पमालाधारणमिव वेश्यावशीकरणमिति निदर्शनापि बोध्या ॥ **अस्येति ।** परार्धपरया परार्धसंख्यामतिक्रान्तया । लक्षीकृता उपलक्षिताः । प्रज्ञाचक्षुषा अन्धेनावेक्ष्यमाणाश्च ता बधिरश्राव्याश्चेति कर्मधारयः । कलयता कुर्वता । प्रकरेण समूहेन । कूर्मरमणी कच्छपी । रोधसि तीरे । 'मिथ्याध्यवसिते'रित्यस्य 'भेद' इत्यत्रान्वयः । कल्पनाविच्छित्तिविशेषेण कल्पनाप्रयुक्तविच्छित्तिविशेषेण **'कल्पनात्मना'** इति पाठे कल्पनास्वरूपेणेत्यर्थः । उपधेयसंकरेऽप्युपाधेरसंकरात् । 'विच्छित्तिविशेषेणेति च तस्यैव विशेषणम् । विच्छित्तेर्विशेषो यस्मादिति, विच्छित्तिं विशेषयति व्यावर्तयतीति वा व्युत्पत्तेः । एतेन प्रौढोक्त्यैव गतार्थतामाचक्षाणा निरस्ता वेदितव्याः । न च मिथ्याध्यवसितेरलंकारान्तरत्वे 'हरिश्चन्द्रेण संजप्ताः प्रगीता धर्मसूनुना । खेलन्ति निगमोत्सङ्गे मातर्गङ्गे! गुणास्तव ॥' इत्यादौ हरिश्चन्द्रादिसंबन्धाद्गुणानां सत्यताप्रतीतेः सत्याध्यवसितिरपि तथा स्यादिति वाच्यम् ।

## ललितालंकारः ६६

**वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम्।**
**[1]ललितं निर्गते नीरे सेतुमेषा चिकीर्षति॥ १२८॥**

प्रस्तुते धर्मिणि यो वर्णनीयो वृत्तान्तस्तमवर्णयित्वा तत्रैव तत्प्रतिबिम्बरूपस्य कस्यचिदप्रस्तुतवृत्तान्तस्य वर्णनं ललितम्। यथाकथंचिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेन तद्व्यापारप्रतिबिम्बभूतगतजलसेतुबन्धवर्णनम्। नेयमप्रस्तुतप्रशंसा, प्रस्तुतधर्मिकत्वात्; नापि समासोक्तिः, प्रस्तुतवृत्तान्ते वर्ण्यमाने विशेषणसाधारण्येन सारूप्येण वाऽप्रस्तुतवृत्तान्तस्फूर्त्यभावात्; अप्रस्तुतवृत्तान्तादेव सरूपादिह प्रस्तुतवृत्तान्तस्य गम्यत्वात्, नापि निदर्शना, प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरैक्यसमारोप एव तस्याः समुन्मेषात्। यदि विषयविषयिणोः शब्दोपात्तयोः प्रवर्तमान एवालंकारो विषयिमात्रोपादानेऽपि स्यात्तदा रूपकमेव भेदेऽप्यभेदरूपाया अतिशयोक्तेरपि विषयमाक्रमेत्। ननु तर्ह्यत्र प्रस्तुतनायकादिनिगरणेन तत्र शब्दोपात्ताप्रस्तुतनीराद्यभेदाध्यवसाय इति भेदे अभेदरूपातिशयोक्तिरस्तु। एवं तर्हि सारूप्यनिबन्धना अप्रस्तुतप्रशंसाविषयेऽपि सैवातिशयोक्तिः स्यात्।

---

सत्यताप्रतीत्यर्थं कस्याप्यर्थस्य कविप्रतिभाकल्पितत्वाभावेन शब्दमात्रेणालंकारताया असंभवात्। कविप्रतिभामात्रकल्पिता अर्थाः काव्ये अलंकारपदास्पदमिति विषमालंकारप्रकरणे त्वयैवाभिधानादित्यलं विस्तरेण॥ १२७॥

इत्यलंकारचन्द्रिकायां मिथ्याध्यवसित्यलंकारप्रकरणम्॥ ६५॥

**प्रस्तुत इति**। ललितमिति लक्ष्यनिर्देशः। निर्गत इत्युदाहरणम्। दाक्षिण्येत्यादिक्तप्रत्ययान्तचतुष्टयं नायकविशेषणम्। दाक्षिण्यमनुरोधशीलत्वम्॥ **तद्व्यापारेति**। सखीप्रेषणरूपनायिकाव्यापारस्वरूपेत्यर्थः। सारूप्यं चात्र नैरर्थक्यम्। क्लृप्तालंकारेष्वन्तर्भावमाशङ्क्य निराकरोति—**नेयमित्यादिना**। **प्रस्तुताप्रस्तुतेति**। तथा च प्रकृतेऽप्रस्तुतवृत्तान्तस्यैवोपादानान्निदर्शना न युक्तेति भावः॥ ननूभयोः शब्दोपात्तत्व इवाप्रस्तुतमात्रस्य तत्त्वेऽपि निदर्शनाऽस्त्वित्याशङ्क्याह—**यदीति**। प्रतिवन्द्या तावत्परिहरति—**तर्हि सारूप्येति**। 'एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते' इत्यादावित्यर्थः॥ **अप्रस्तुतेति**।

---

**टिप्प०**—1 नेदं पृथगलंकारान्तरम्, किं तु आर्थी निदर्शनेति दण्डी-मम्मटादयः। 'अत्र ललितालंकार इत्युक्तमप्पय्यदीक्षितादिभिस्तद्दूषितमस्माभिरलंकारसारोद्धारे' इत्युक्तं सुधासागरकारैः। 'प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन निरूप्यमाणोऽप्रकृतव्यवहारसंबन्धो ललितालंकारः' इति पण्डितराजः।

---

**पाठा०**—१ 'प्रस्तुते वर्ण्यवाक्यार्थे'.

अप्रस्तुतधर्मिकत्वान्न भवतीति चेत्,—तत्राप्यप्रस्तुतधर्मिवाचकपदस्यापि प्रसिद्धातिशयोक्त्युदाहरणेष्विव प्रस्तुतधर्मिलक्षकत्वसंभवात् ॥ नन्वप्रस्तुतप्रशंसायां सरूपादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यते, नत्वतिशयोक्ताविव विषयवाचकैस्तत्तत्पदैर्विषया लक्ष्यन्त इति भेद इति चेत्तर्हि इहापि प्रस्तुतगतादप्रस्तुतवृत्तान्तरूपाद्वाक्यार्थात्तद्गतप्रस्तुतवृत्तान्तरूपो वाक्यार्थोऽवगम्यत इत्येवातिशयोक्तितो भेदोऽस्तु । वस्तुतस्तु,—

'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं[1]
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा? ।
पूर्वं निश्चितवानसि भ्रमर! हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः[2]! क एष ग्रहः? ॥' (भल्ल.श.१८)

इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथमप्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थोऽवगम्यत इत्येतन्न घटते; अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिरासकरणस्य हेतुत्वसंभवेऽपि रसनाविपर्ययान्तःशून्यकरत्वयोर्हेतुत्वासंभवेन मदस्य प्रत्युत तत्सेव्यत्व एव हेतुत्वेन च रसनाविपर्ययादीनां तत्र हेतुत्वान्वयार्थं वारणपदस्य दुष्प्रभुरूपविषयक्रोडीकारेणैव प्रवृत्तेर्वक्तव्यत्वात् । एवं सत्यपि यद्यप्रस्तुतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रस्तुतप्रशंसाया अतिशयोक्तितो भेदो घटते, तदात्रापि प्रस्तुतं धर्मिणं स्वपदेन निर्दिश्य

---

अप्रस्तुतस्य शकुन्तादेस्तत्र वर्णनीयत्वादतिशयोक्तिस्थले च वापी कापीत्यादौ वापीत्वादिना प्रस्तुतनाभ्यादेर्वर्ण्यत्वान्नातिशयोक्तिस्तत्रापादयितुं शक्येति भावः । अप्रसिद्धोऽयं हेतुरित्याह—**तत्रेति** । **प्रसिद्धेति** । 'वापी कापी'त्यादिसर्वसंमतेत्यर्थः ॥ **तद्गतेति** । प्रस्तुतगतेत्यर्थः । अप्रस्तुतप्रशंसायां क्वचित्प्रस्तुताप्रस्तुतयोरभेदाध्यवसानमप्यप्रस्तुतवाक्यार्थप्रतीतिकाले दृश्यते । ललिते तु न क्वापीति सुतरामतिशयोक्तितो भेद इत्याह—**सोऽपूर्व इत्यादिना** । रसनाविपर्ययः अग्निशापात्करिणां जिह्वापरिवृत्तिः, पूर्वं विपरीताभिधानं च । कर्णचापलं प्रसिद्धं, पिशुनप्रतार्यत्वं च । मदः प्रसिद्धः, गर्वश्च । तेन विस्मृत्या स्वपरयोर्दिङ्मार्गः, आप्तानाप्तविभागश्च यया सा दृष्टिः । वारणो गजः, वारकश्च । शून्यः सरन्ध्रः, धनरहितश्च । करः शुण्डा, हस्तश्च । ग्रह आग्रहः । कुतो न घटते तत्राह—**अप्रस्तुत इति** । एतच्च भ्रमरासेव्यत्व इत्यस्य विशेषणम् । भ्रमरनिरासकरणस्येति च कर्णचापलमात्रस्येत्यस्य क्रोडीकारः । स्वार्थेन सममभेदाध्यवसायः । **अप्रस्तुतसंबोधनादीति** । आदिना सारूप्यनिबन्धनप्रस्तुतवाक्यार्थाव-

---

**टिप्प०**—1 अत्र रसनाविपर्ययो नाम अग्निशापजो वाजिनां जिह्वाविपर्यासः, कथानकमिदं भारतेऽनुशासनिके पर्वणि ८५ त्तमाध्याये वरीवर्ति ।

---

**पाठा०**—१ 'सर्व' इति समीचीनतरः पाठः. २ 'भ्रान्तः'.

तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य सद्भावात्ततो भेदः सुतरां घटते। 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति', 'वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या' इत्यादिषु तु प्रस्तुतस्य कस्यचिद्धर्मिणः स्ववाचकेनानिर्दिष्टत्वादतिशयोक्तिरेव। एतेन गतजलसेतुबन्धवर्णनादिष्वसंबन्धे संबन्धरूपातिशयोक्तिरस्त्विति शङ्कापि निरस्ता। तथा सति 'कस्त्वं भोः! कथयामी'त्यादावपि तत्प्रसङ्गात्सारूप्यनिबन्धनप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषेणालंकारान्तरत्वकल्पनं त्विहापि तुल्यम्। तस्मात्सर्वालंकारविलक्षणमिदं ललितम्।

यथा वा (रघु. १।१),—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥

अत्रापि निदर्शनाभ्रान्तिर्न कार्या। अल्पविषयया मत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रस्तुतवृत्तान्तानुपन्यासात्तत्प्रतिबिम्बभूतस्य उडुपेन सागरं तितीर्षुरस्मीत्यप्रस्तुतवृत्तान्तस्य वर्णनेनादौ विषमालंकारविन्यसनेन च केवलं तत्र तात्पर्यस्य गम्यमानत्वात्। यथा वा (नैषध. ८।२५),—

अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसंकेततया कृतार्था श्राव्यापि नानेन जनेन संज्ञा॥

अत्र[1] 'कतमो देशस्त्वया परित्यक्तः?' इति प्रस्तुतार्थमनुपन्यस्य 'वसन्तमुक्तस्य वनस्य दशामनायी'ति प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालंकारः॥ १२८॥

---

गतिपरिग्रहः। अत्रापि ललितालंकारेऽपि॥ **वर्णनारूपस्येति**। चमत्कारितारूपाया विच्छित्तेस्तदवच्छेदकवर्णनारूपत्वमित्यभिप्रायः। कस्यचित् नेत्रद्वन्द्वादेः। स्ववाचकेन नेत्रादिपदेन। अनिर्दिष्टत्वादप्रतिपादितत्वात्॥ **अतिशयोक्तिरस्त्विति**। अतिशयोक्तिरेवास्तीत्यर्थः। तत्प्रसङ्गात्संबोध्यत्वोच्चारयितृत्वयोरसंबन्धेऽपि संबन्धवर्णनादतिशयोक्तिमात्रप्रसङ्गात्। अलंकारान्तरं 'कस्त्व'मित्यादावप्रस्तुतप्रशंसा, प्रकृते तु ललितमिति। **तत्प्रतिबिम्बेति**। प्रस्तुतार्थप्रतिबिम्बरूपस्याप्रस्तुतार्थस्येत्यर्थः। आदौ पूर्वार्धे॥ **विषमेति**। स्वमतिसूर्यवंशयोरत्यन्ताननुरूपत्वरूपेत्यर्थः। तात्पर्यस्य तादृशमतिकरणकसूर्यवंशवर्णनेच्छाभिप्रायस्य॥ **अनायीति**। नलं प्रति दमयन्त्या उक्तिः। हे नल! अद्य त्वया

---

**टिप्प०**—1 अत्र कथमन्यस्य दशामन्यो नेतुं शक्य इति वसन्तमुक्तवनदशां निःश्रीकत्वलक्षणामनायीति हि पर्यवसन्नोऽर्थः; तत्र निःश्रीकत्वरूपकार्यद्वारा कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानं पर्यायोक्तेर्विषयः। दशयोरेकत्वाध्यवसानं तु पदार्थनिदर्शनाया अतिशयोक्तेर्वेत्यन्यदेतत्। एवं च पदार्थनिदर्शनोपबृंहितस्य पर्यायोक्तस्यैवात्र विषयो न ललितस्येत्यन्ये प्राहुः।

## प्रहर्षणालंकारः ६७

उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ १२९ ॥

उत्कण्ठा=इच्छाविशेषः ।

'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते ।
तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः ॥'

इत्युक्तलक्षणात्तद्विषयस्यार्थस्य तदुपायसंपादनयत्नं विना सिद्धिः प्रहर्षणम् । उदाहरणं स्पष्टम् । यथा वा ( गीतगोविन्दे १।१ ),—

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
नक्तं भीरुरयं त्वमेव तदिमं राधे ! गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र राधामाधवयोः परस्परमुत्कण्ठितत्वं प्रसिद्धतरम् । अग्रे च ग्रन्थकारेण निबद्धमित्यत्रोदाहरणे लक्षणानुगतिः ॥ १२९ ॥

वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥ १३० ॥

---

कतमो देशो वसन्तमुक्तस्य वनस्य दशामनायि प्रापितः? त्वयि प्राप्तसंकेततया कृतार्था संज्ञा नामाप्यनेन मल्लक्षणेन जनेन न श्राव्या न श्रवणार्हा, अपि तु श्राव्यैवेति । अत्र च तादृशवनदशारूपस्याप्रस्तुतार्थस्य प्रस्तुते देशे कथनात्प्रस्तुतवृत्तान्तस्योक्तरूपस्य प्रतीतिः । न चात्र वारणेन्द्रलीलामितिवत्पदार्थनिदर्शना युक्तेति वाच्यम् । तत्र पूर्वार्धेन प्रकृतवृत्तान्तोपादानेन, सादृश्यपर्यवसानरूपनिदर्शनासत्त्वेऽप्यत्र तदनुपादानेन । तद्व्यङ्ग्यताप्रयुक्तविच्छित्तिविशेषवत्त्वेन ललितालंकारस्यैवोचितत्वात् । एतेन दशापदलक्षितनिःश्रीकत्वरूपकार्यद्वारेण कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानात्पर्यायोक्तमित्यपि निरस्तम् । उपधेयसंकरेऽप्युपाधेरसंकराच्चेति संक्षेपः ॥ १२८ ॥

इत्यलंकारचंद्रिकायां ललितालंकारप्रकरणम् ॥ ६६ ॥

**तामेवेति** । दूतिकामेवेत्यर्थः । निसृष्टा प्रेषिता । ससंकल्पां मनोरथसहिताम् । **मेघैरिति** । मेदुरं तुन्दिलम् । नक्तं रात्रिः, अस्तीति शेषः । नन्दनिदेशतो नन्द-

---

टिप्प०—1 'साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम्' इति जगन्नाथपण्डितः ।

---

पाठा०—१ 'विसृष्टा'. २ 'दीपमुद्दीपयेद्यावत्'.

स्पष्टम् । यथा वा,—

चातकस्त्रिचतुरान्पयःकणान् याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १३० ॥

**यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ।**
**निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥ १३१ ॥**

फलोपायसिद्ध्यर्थाद्यत्नान्मध्ये उपायसिद्धिमनपेक्ष्यापि साक्षात्फलस्यैव लाभोऽपि प्रहर्षणम् । यथा निध्यञ्जनसिद्ध्यर्थं मूलिकां खनतस्तत्रैव निधेर्लाभः ।

यथा वा,—

उच्चित्य प्रथममधःस्थितं मृगाक्षी पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं पदमदधादशोकयष्टावामूलं पुनरपि तेन पुष्पिताभूत् ॥

अत्र पुष्पग्रहणोपायभूतारोहणसिद्ध्यर्थात्पदनिधानात्तत्रैव पुष्पग्रहणलाभः ॥ १३१ ॥

---

---

स्याज्ञावशात् । प्रत्यध्वकुञ्जद्रुममध्वसंबन्धिकुञ्जद्रुमं द्रुमं प्रति । ग्रन्थकारेण गीतगोविन्दकृता ॥ १२९ ॥ **चातक इति** । यत्तु चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकेणाम्भसा विश्वपूरणेन हर्षाधिक्याभावादयुक्तमुदाहरणमिति,—तत्तुच्छम्; हेत्वसिद्धेः । न हि क्षुदुपशमाय तत्पर्याप्तान्नमात्रार्थिनस्तदधिकान्नलाभे हर्षाधिक्यं नास्तीति वक्तुं शक्यते । तदानीमुपयोगाभावेऽपि स्वस्यैव कालान्तरे तदुपयोगसत्त्वात् । न च चातकस्य जलसंग्रहानुपयोगाद्वैषम्यं शङ्कनीयम् । चातकवृत्तान्तस्याप्रस्तुततया तद्व्यङ्ग्ये प्रस्तुतदातृयाचकवृत्तान्ते काव्यस्य पर्यवसानादिति ॥ १३० ॥ तृतीयं प्रभेदमाह—**यत्नादिति** । प्रहर्षणमित्यनुवर्तते ॥ **निध्यञ्जनेति** । निधिदर्शनसाधनं यदञ्जनं तत्साधनौषधीमूलमित्यर्थः । साधितो लब्धः ॥ **उच्चित्येति** । अधःस्थितं वृक्षस्याधोदेशे स्थितम् । **'अवस्थितम्'** इति पाठे समीपाशोकयष्टाववस्थितमित्यर्थः । श्रिता आश्रिता विटपाः शाखा येनेति पुष्पौघविशेषणम् । अदधादाहितवती । यष्टिः स्कन्धः । तेन पादाघातेन । पुनरप्यामूलं पुष्पिताऽभूत् । अर्थादशोकयष्टिः । अत्र च तदसाध्यकयत्नात्तल्लाभ इति प्रकारत्रयसाधारणं सामान्यलक्षणं बोध्यम् ॥ १३१ ॥

इत्यलंकारचन्द्रिकायां प्रहर्षणालंकारप्रकरणम् ॥ ६७ ॥

---

**टिप्प०—1** अत्र चातकस्य न कथमपि संतोषाधिक्यं वक्तुं शक्यते; त्रिचतुरकणमात्रार्थित्वात्; न हि संसिद्धिपदेन निष्पत्तिमात्रं वक्तुं युक्तं; सत्यामपि निष्पत्तौ वाञ्छितुस्तल्लाभकृतसंतोषानतिशये 'प्रहर्षण'शब्दयोगार्थासंगत्या तदलंकारायोगत्वात् । किंतु लाभेन कृतः संतोषातिशयः इति केचित्प्राहुः ।

---

**पाठा०—१** 'सिद्धार्थात्'. २ 'चेत्'. ३ 'खलता'. ४ 'आसादितो'.

## विषादनालंकारः ६८

इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ।
दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥ १३२ ॥

यथा वा,—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥ १३२ ॥

---

## उल्लासालंकारः ६९

एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ।
अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी ॥१३३॥
काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः ।
निन्दन्ति च विधातारं त्वद्धाटीष्वरियोषितः ॥ १३४ ॥
तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ।
लाभोऽयमेव भूपालसेवकानां न चेद्वधः ॥ १३५ ॥

---

इष्यमाणविरोधो योऽर्थस्तत्संप्राप्तिर्विषादनमलंकारः । उद्योजयेदुद्दीप्तं कुर्यात् । 'उद्योजयेद्यावत्' इत्यनेन तदिच्छामात्रं नतु तत्करणमिति विषमाद्भेदः । एवमग्रिमोदाहरणेऽपीच्छामात्रं न त्विष्टोत्पत्त्यनुकूलाचरणमिति ॥ १३२ ॥

इत्यलंकारचन्द्रिकायां विषादनालंकारप्रकरणम् ॥ ६८ ॥

**एकस्येति ।** एकस्य गुणदोषाभ्यामन्यस्य तौ गुणदोषौ यदि भवतस्तदोल्लासालंकारः ॥ **अपीति ।** अपिः संभावनायाम् । साध्वी पतिव्रता स्नात्वा मां पावयेदिति जाह्नवी इच्छतीत्यन्वयः । तव धाटीषु युद्धयात्रासु कुचयोः स्रष्टुं काठिन्यं पादपद्मयोर्वाञ्छन्त्योऽरियोषितो विधातारं निन्दन्तीत्यन्वयः । **'स्रष्टुम्'** इति पाठे कुचयोः काठिन्यं पादयोः स्रष्टुमिच्छन्त्य इत्यन्वयः ॥ **लाभोऽयमिति ।**

---

**टिप्प०**—1 'अभीष्टार्थविरुद्धलाभो विषादनम्' इति **रसगंगाधरकाराः** । 2 उल्लासालंकारोऽपि न पृथगलंकारः; अन्यदीयगुणेनान्यत्र गुणवत्ताबुद्धिरूपोऽन्यदोषेणान्यत्र दोषवत्ताबुद्धिरूपोऽयमलंकारः काव्यलिङ्गालंकारेण गतार्थं इति केचिदाहुः ।

---

**पाठा०**—१ 'प्राप्तिश्च'. २ 'उद्दीपयेत्'. ३ 'तावन्निर्वाण एव सः'. ४ 'कुचयोर्द्रष्टुं'. ५ 'विश्वधातारं'.

यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो गुणेन दोषो दोषेण गुणो वा वर्ण्यते स उल्लासः । द्वितीयार्धमाद्यस्योदाहरणम् । तत्र पतिव्रतामहिमगुणेन तदीयस्नानतो गङ्गायाः पावनत्वगुणो वर्णितः । द्वितीयश्लोके द्वितीयस्योदाहरणम् । तत्र राज्ञो धाटीषु वने पलायमानानामरातियोषितां पादयोर्धावनपरिपन्थिमार्दवदोषेण तयोः काठिन्यमसृष्ट्वा व्यर्थं कुचयोस्तत्सृष्टवतो धातुर्निन्द्यत्वदोषो वर्णितः । तृतीयश्लोकस्तृतीयचतुर्थयोरुदाहरणम् । तत्र सज्जनमहिमगुणेन धनस्य, तदनाश्रयणं दोषत्वेन राज्ञः, क्रौर्यदोषेण तत्सेवकानां वधं विना विनिर्गमनं गुणत्वेन वर्णितम् ।

अनेनैव क्रमेणोदाहरणान्तराणि,—

यदयं रथसंक्षोभादंसेनांसो निपीडितः ।
एकः कृती मदङ्गेषु, शेषमङ्गं भुवो भरः ॥

अत्र नायिकासौन्दर्यगुणेन तदंसनिपीडितस्य स्वांसस्य कृतित्वगुणो वर्णितः॥

लोकानन्दन ! चन्दनद्रुम ! सखे ! नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला
न स्वान्येव कुलानि केवलमहो सर्वं दहेयुर्वनम् ॥

अत्र वेणूनां परस्परसंघर्षणसंजातदहनसंकुलत्वदोषेण वननाशरूपदोषो वर्णितः ।

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥

अत्र भ्रमराणामलंकरणत्वगुणेन गजस्य तत्प्रतिक्षेपो दोषत्वेन वर्णितः ।

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ।
हे सद्रत्न ! तवैतदेव कुशलं यद्वानरेणादरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नाश्मना ॥

---

भूपालसेवकानामयमेव लाभो यदि वधो न भवतीत्यन्वयः ॥ यदयमिति । रथस्य संक्षोभाच्चलनाद्यदयमंसोऽसेनार्थाद्दयिताया निपीडितः संघृष्टो ममाङ्गेषु मध्ये स एवैकः कृती कुशलः । अवशिष्टमङ्गं भूमेर्भारमित्यर्थः । दुर्वंशैर्दुष्टवेणुभिर्दुष्कुलैश्चेत्यादिः श्लेषो बोध्यः । वननाशरूपो वनसंबन्धिनाशरूपः । 'वनस्य' इति युक्ततरः पाठः । तत्प्रतिक्षेपो भ्रमरनिरासो गजस्य दोषत्वेनेति संबन्धः ॥ आघ्रातमिति । मुहुः परिलीढमास्वादितम् । नीरसेन मनसा करणभूतेन । वानरेण

---

पाठा०—१ 'इदं सर्वं'.

अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णनाभावो गुणत्वेन वर्णितः। अत्र प्रथमचतुर्थयोरुल्लासोऽन्वर्थः। मध्यमयोश्छत्रिन्यायेन लाक्षणिकः ॥१३३-१३५॥

---

## अवज्ञालंकारः ७०

**ताभ्यां तौ यदि न स्यातामवज्ञालंकृतिस्तु सा[1]।**
**स्वल्पमेवाम्बु लभते प्रस्थं[1] प्राप्यापि सागरम् ॥**
**मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥ १३६ ॥**

ताभ्यां गुणदोषाभ्याम्। तौ गुणदोषौ। अत्र कस्यचिद्गुणेनान्यस्य गुणालाभे द्वितीयार्धमुदाहरणम्। दोषेण दोषस्याप्राप्तौ तृतीयार्धम्। यथा,—

मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरस[2]पुरुषानादरभरैः।
यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ॥

त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि।
मूर्धन्यं कुरुषे जलांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥

अत्राद्ये कवितारमणीगुणाभ्यामरस[3]बालर्क[4]योर्हृदयोल्लासरूपगुणाभावो वर्णितः। द्वितीये परमेश्वरानङ्गीकरणदोषेण दिग्गजादीनां लघुतादिदोषाभावो वर्णितः ॥ १३६ ॥

---

कर्त्रा। तत्र तस्मिन्सति। विचारणव्यसनिना विचारणतत्परेण। अश्मना पाषाणेन। प्रथमचतुर्थयोर्गुणेन गुणदोषेण वा गुण इति भेदयोः। उल्लास उल्लासशब्दः ॥ **अन्वर्थ इति**। उत्कृष्टोल्लासः। सुखं यत्रेत्यर्थानुगत इत्यर्थः। **छत्रिन्यायेनेति**। केषुचिच्छत्रसंबन्धाच्छत्र्यच्छत्रिसमुदाये 'छत्रिणो यान्ति' इतिवदित्यर्थः ॥ १३३-१३५ ॥

इत्यलंकारचन्द्रिकायामुल्लासालंकारप्रकरणम् ॥ ६९ ॥

प्रस्थं प्रस्थपरिमाणपात्रम् ॥ **मदुक्तिरिति**। ममोक्तिः कविता। सुधियोऽन्तःकरणं सुधीभूयामृतीभूय चेन्मदयति तोषयति तदाऽस्या मदुक्तेः अरसानां नीरसानां पुरुषाणामनादरसमूहैः किं नाम स्यात्? न किंचिदित्यर्थः। क्वचित् **'अलस–'** इति पाठः। परमरमणीयापि। केव? रमणी स्त्री यूनस्तरुणस्य यथान्तःकरणहरणं कुरुते, न तद्वत्कुमाराणां बालानामित्यन्वयः ॥ **त्वं चेदिति**। शिवं

**टिप्प०**—1 उल्लासस्य विपर्ययोऽवज्ञेति सामान्यलक्षणम्। अन्यस्यान्यदीयगुणदोषप्रयुक्तगुणदोषाधानाभाव इति पर्यवसितोऽर्थः।

**पाठा०**—१ 'पान्थं प्राप्यापि'. २-३ 'दलस'. ४ 'बालिश'.

अनुज्ञालंकारः ७१

दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् ।
विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः ॥ १३७ ॥

यथा वा,—

मय्येव जीर्णतां यातु यत्त्वंयोपकृतं हरे ! ।
नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति ॥

इयं हनुमन्तं प्रति राघवस्योक्तिः । अत्र प्रत्युपकाराभावो दोषस्तदभ्युपगमे हेतुर्गुणो विपत्त्याकाङ्क्षाया अप्रसक्तिः । सा च व्यतिरेकमुखप्रवृत्तेन सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन दर्शिता । यथा वा,—

व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसंपदः प्रमथनाथ ! नाथामहे ।
भवद्भवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ॥ १३७ ॥

---

लेशालंकारः ७२

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।
अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ॥
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ १३८ ॥

---

प्रति कस्यापि कवेरुक्तिः । जलांशुं चन्द्रं पक्षे जडांशुम् । अम्बुजबान्धवः सूर्यः उल्लासरूपगुणाभाव उल्लासरूपस्य गुणस्याभावः ॥ १३३ ॥

इत्यलंकारचन्द्रिकायामवज्ञालंकारप्रकरणम् ॥ ७० ॥

**दोषस्येति** । अभ्यर्थना इच्छा । तत्रैव दोष एव । अनुज्ञेति लक्ष्यनिर्देशः । शश्वन्निरन्तरं संकीर्त्यत इत्यनेनान्वयि ॥ **मय्येवेति** । जीर्णतां प्रत्युपकाराक्षमताम् । 'हरि'शब्दो वानरार्थः ॥ **व्यतिरेकमुखेति** । वैधर्म्यमुखेत्यर्थः । अस्य चार्थान्तरन्यासेनेत्यनेनान्वयः ॥ **दर्शितेति** । वैधर्म्यविपर्यये प्रत्युपकारानभिलाषी विपत्तिं नाकाङ्क्षतीत्यर्थपर्यवसानादिति भावः ॥ **व्रजेमेति** । हे प्रमथनाथ हर! पैशाचिकीं पिशाचसंबन्धिनीं प्रकृतिं पिशाचतामेत्य प्राप्य भवतोऽन्तिकं समीपदेशं भजेम । अमरसंपत्तीः किमिति प्रार्थयामहे ? यतो मघवदादिभिरिन्द्रप्रमुखैरपि भवद्भवनदेहलीषु विकटतुण्डस्य वक्रतुण्डस्य दण्डाघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यर्थः ॥ १३७ ॥

इत्यलंकारचन्द्रिकायामनुज्ञालंकारप्रकरणम् ॥ ७१ ॥

लेश इति लक्ष्यनिर्देशः । प्रवसतीति सतिसप्तम्यन्तम् । शुकस्य निन्दाया

---

पाठा०—१ 'यत्त्वयैव कृतं'. २ अस्य पद्यस्य क्वचित्पूर्वार्धोत्तरार्धयोर्वैलोम्येन पाठः. ३ 'संपदं'.

दोषस्य गुणत्वकल्पनं गुणस्य दोषत्वकल्पनं च लेशः। उदाहरणं—राज्ञोऽभिमते विदुषि पुत्रे चिरं राजधान्यां प्रवसति तद्दर्शनोत्कण्ठितस्य गृहे स्थितस्य पितुर्वचनमप्रस्तुतप्रशंसारूपम्। तत्र प्रथमार्धे इतरविहगानामवक्तृत्वदोषस्य स्वच्छन्दचरणानुकूलतया गुणत्वं कल्पितम्। द्वितीयार्धे मधुरभाषित्वस्य गुणस्य पञ्जरबन्धहेतुतया दोषत्वं कल्पितम्। न चात्र व्याजस्तुतिराशङ्कनीया। न ह्यत्र विहगान्तराणां स्तुतिव्याजेन निन्दायां शुकस्य निन्दाव्याजेन स्तुतौ च तात्पर्यम्। किंतु पुत्रदर्शनोत्कण्ठितस्य पितुर्दोषगुणयोर्गुणदोषत्वाभिमान एवात्र श्लोके निबद्धः। यथा वा,—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

दण्डी त्वत्रोदाजहार ( काव्या० २।२६९ )

'युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि॥
चपलो निर्दयश्चासौ जनः किं तेन मे सखि!।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥'

अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः। कन्याया निरन्तरं संभोगनिर्विवर्तिषया दोषत्वेन प्रतिभासतामित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहीर्षया स एव दोषो गुणत्वेन वर्णितः। उत्तरश्लोके सखीभिरुपदिष्टं मानं कर्तुमशक्तयापि तासामग्रतो मानपरिग्रहणानुगुण्यं प्रतिज्ञाय तदनिर्वाहमाशङ्कमानया सखीनामुपहासं परिजिहीर्षन्त्या नायिकया नायिकस्य चाटुकारितागुण एव दोषत्वेन वर्णितः। न चाद्यश्लोके स्तुतिर्निन्दापर्यवसायिनी, द्वितीयश्लोके च निन्दा स्तुतिपर्यवसायिनीति व्याजस्तुतिराशङ्कनीया। राजप्रकोपादिपरिहारार्थमिह निन्दास्तुत्योरन्याविदिततया लेशत एवोद्घाटनेन ततो विशेषादिति।

---

निन्दाव्याजेन स्तुतौ चेत्यन्वयः॥ **सन्त इति**। सच्चरितस्योदयो वृद्धिस्तद्व्यसनिनस्तत्पराः। प्रादुर्भवद्यन्त्रणं स्वेच्छाचरणनिरोधो येषां ते। सर्वत्रैव विषये। दुःखमिति क्रियाविशेषणम्। अव्युत्पन्नमतिरनिपुणमतिः। सता समीचीनेन कृतेनाचरणेन। प्राकृतो नीचः॥ **युवैष इति**। वरार्थिनीं कन्यकां प्रति सखीवचनम्॥ **चपल इत्यादि** च नायिकायाः सखीं प्रति। **'उत्सेक—'** इति पाठेऽप्युत्कर्ष एवार्थः। कन्याया दोषत्वेन भासतामित्यन्वयः। निर्वर्तितुमिच्छा निर्विवर्तिषा, तद्रूपदोषत्वेनेत्यर्थः। **'निर्विवित्सोः'** इति पाठे राज्ञो विशेषणम्। कुतस्तर्हि गुणत्वेन वर्णनं तत्राह—**राजप्रकोपेति**। अन्येनाविदितं यथा स्यादिति क्रियाविशेषणम्॥ **लेशत एवेति**। तदुक्तं दण्डिनैव (काव्या. २।१६८)—'लेशमेके

---

पाठा०—१ 'निर्विवित्सोर्दोषत्वेन'. २ 'तदग्रतो मानपरिग्रहानुगुण्यं'.

वस्तुतस्त्विह व्याजस्तुतिसद्भावेऽपि न दोषः। न ह्येतावता लेशमात्रस्य व्याजस्तुत्यन्तर्भावः प्रसज्जते; तदसंकीर्णयोरपि लेशोदाहरणयोर्दर्शितत्वात्। नापि व्याजस्तुतिमात्रस्य लेशान्तर्भावः प्रसज्जते। भिन्नविषयव्याजस्तुत्युदाहरणेषु 'कस्त्वं वानर! रामराजभवने लेखार्थसंवाहकः, यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा' इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात्। तत्रान्यगुणदोषाभ्यामन्यत्र गुणदोषयोः प्रतीतेः॥

विषयैक्येऽपि—

'इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
र्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि।
अद्याप्युर्वीवलयतिलक! श्यामलिम्नानुलिप्ता-
न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः॥'

इत्याद्युदाहरणेषु लेशास्पर्शनात्। अत्र हीन्दुलक्ष्मादीनां धवलीकरणाभावदोष एव गुणत्वेन न पर्यवसति किंतु परिसंख्यारूपेण ततोऽन्यत्सर्वं धवलितमित्यन्यो गुणः प्रतीयते। क्वचिद्व्याजस्तुत्युदाहरणे गुणदोषीकरणसत्त्वेऽपि स्तुतेर्विषयान्तरमपि दृश्यते। यथा,—

सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः॥

अत्र हि वाच्यया निन्दया परिसंख्यारूपेण ततोऽन्यत्सर्वमर्थिनामभिमतं दीनारादि दीयते इति स्तुत्यन्तरमपि प्रतीयते। एवं च येषूदाहरणेषु 'कस्ते शौर्यमदो योद्धु'मित्यादिषु गुणदोषादिषु गुणदोषीकरणादिकमेव व्याजस्तुतिरूपतयावतिष्ठते, तत्र लेशव्याजस्तुत्योः संकरोऽस्तु। इत्थमेव हि व्याजस्तुत्यप्रस्तुतप्रशंसयोरपि प्राक्संकरो वर्णितः॥ १३८॥

---

विदुर्निन्दां स्तुतिं वा लेशतः कृताम्' इति। लेशमात्रस्येति कृत्स्नार्थकम्। उदाहरणयोः अखिलेष्वित्याद्योः॥ **भिन्नविषयेति**। अन्यनिन्दयाऽन्यस्य स्तुतिरन्यस्तुत्याऽन्यनिन्देत्यादिरूपेत्यर्थः। ननु तथाप्येकविषया व्याजस्तुतिर्न लेशाद्भिद्येतेत्याशङ्क्याह—**विषयैक्येऽपीति**। लेशास्पर्शनादित्यग्रेतनेनान्वयः॥ **इन्दोरिति**। हे उर्वीवलयतिलकरूप राजन्! त्वदीयैर्यशोभिः किं धवलितं तद्वद। यतोऽद्यापि इन्दुलक्ष्मादीनि श्यामलिम्ना श्यामवर्णेनानुलिप्तान्याभासन्ते इत्यन्वयः। लक्ष्म लाञ्छनम्। दिङ्नागानां दिग्गजानां मदजलमेव मषी तद्भाञ्जि तद्युक्तानि॥ **परिसंख्येति**। एतान्येव श्यामानीत्येवंरूपेत्यर्थः। विषयान्तरं दोषीकृताद्भिन्नं गुणरूपमालम्बनम्॥ **सर्वदेति**। अरयः पृष्ठमर्थात्तव न लेभिरे न प्राप्तवन्तः; पलायनाभावात्। दीनारः परिमाणविशेषपरिच्छिन्ना सुवर्णमुद्रा। एवं च लेशव्याजस्तुत्योरसंकीर्णविषयसत्त्वे च 'गुणदोषीकरणादिक'मित्यादिपदेन दोषगुणीकरणसंभवः।

---

पाठा०—१ 'रामचन्द्रभवने'.

## मुद्रालंकारः ७३

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।
नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ १३९ ॥

अत्र नायिकावर्णनपरेण 'युग्मविपुला'पदेनास्यानुष्टुभो युग्मविपुलानामत्व-रूपसूच्यार्थसूचनं मुद्रा । यद्यप्यत्र ग्रन्थे वृत्तनाम्नो नास्ति सूचनीयत्वं तथाप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दःशास्त्रमध्यपातित्वेन तस्य सूचनीयत्व-मस्तीति तदभिप्रायेण लक्षणं योज्यम् । एवं नवरत्नमालायां तत्तद्रत्ननामनि-वेशेन तत्तन्नामकजातिसूचनम् । नक्षत्रमालायामश्यादिदेवतानामभिर्नक्षत्र-सूचनमित्यादावयमेवालंकारः । एवं नाटकेषु वक्ष्यमाणार्थसूचनेष्वपि ॥१३९॥

---

## रत्नावल्यलंकारः ७४

क्रमिकं[1] प्रकृतार्थानां न्यासं रत्नावलीं[1] विदुः ।
चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ! ॥ १४० ॥

अत्र चतुरास्यादिपदैर्वर्णनीयस्य राज्ञः ब्रह्मविष्णुरुद्रात्मता प्रतीयत इति प्रसिद्धसहपाठानां ब्रह्मादीनां क्रमेण निवेशनं रत्नावली ।

---

येष्वित्युपक्रमात् तत्रेति पाठो युक्ततरः । अत्रेत्यपि युक्त एव । इदमोऽपि यच्छब्दार्थपरामर्शकत्वात् ॥ १३८ ॥

इत्यलंकारचन्द्रिकायां लेशालंकारप्रकरणम् ॥ ७२ ॥

सूच्यार्थेति । सूचनीयस्यार्थस्येत्यर्थः । मुद्रेति लक्ष्यनिर्देशः । दृग्युग्मं विपुलं यस्याः सा । अत्र ग्रन्थे अस्मिन्नलंकारग्रन्थे । 'रत्नमाला'शब्देन भगवत्स्तुति-पद्यावलीविशेष उच्यते । रत्ननामनिवेशेन प्रकृतार्थपररत्नवाचिपदघटनेन । तत्तन्नामकजातिसूचनं तत्तन्नामप्रवृत्तिनिमित्तरत्नजातिसूचनम् । नक्षत्रमाला-शब्दार्थोऽपि पूर्वोक्त एव । अश्न्यादिदेवतानामभिर्नक्षत्राणां तद्दैवत्यानां सूचनं बोध्यम् ॥ वक्ष्यमाणेति । यथा अनर्घराघवे—'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' ॥ इति सूत्रधारवचनेन वक्ष्यमाणरामरावणवृत्तान्तसूचनमिति बोध्यम् ॥ १३९ ॥

इत्यलंकारचन्द्रिकायां मुद्रालंकारप्रकरणम् ॥ ७३ ॥

क्रमिकमिति । प्रकृतार्थानां क्रमिकं प्रसिद्धक्रमानुसारि न्यसनं प्रतिपादनं रत्नावल्यलंकारः । प्रकृतत्वं च यथाकथंचित्प्रकृतसंबन्धवत्त्वं बोध्यम् ॥ चतु-

टिप्प०—1 इदमपि न पृथगलंकारान्तरम्, यतोऽत्र वर्ण्यस्य रूपकेणैवोपस्कारो न तु क्रमकृतोऽपि इत्युद्द्योतकारादिभिरुक्तम् ।

---

पाठा०—१ 'क्रमिका'.

यथा वा,—

रत्याप्तप्रियलाञ्छने कठिनतावासे रसालिङ्गिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ।
कोकस्पर्धिनि भोगभाजि जनितानङ्गे खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बाले ! भवत्याः स्तने ॥

यथा वा,—

लीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः
कुम्भावेतौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥

अत्र पत्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानि बुधजनप्रसिद्धक्रमेण न्यस्तानि । प्रसिद्धसहपाठानां प्रसिद्धक्रमानुसरणेऽप्येवमेवालंकारः ।

यथा वा,—

'यस्य वह्निमयो हृदयेषु जलमयो लोचनपुटेषु मारुतमयः श्वसितेषु क्षमामयोऽङ्गेष्वाकाशमयः स्वान्तेषु पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामन्तान्तःपुरेषु प्रतापः ।'

---

रेति । चतुरमास्यं यस्य सः, चतुर्मुखश्च ॥ रत्याप्तेति । हे बाले! भवत्याः स्तने श्रीरमणस्य विष्णोरवतारदशकं भातीत्यन्वयः । कीदृशे ? रतावाप्तं प्राप्तं प्रियस्य लाञ्छनं चिह्नं नखक्षताङ्गरागादिकं येन तथाभूते । कठिनताया आवासे स्थानभूते । रसेनालिङ्गिते प्रकृताह्लादैकरसे तत्परे । क्रमाद्बदरामलकादिपरिमाणलाभेनोपचिते प्रवृद्धे । भूभृतां पर्वतानां गुरुत्वमपहन्ति नाशयति तादृशे ततोऽपि महत्त्वात् । चक्रवाकस्पर्धाशीले तत्सदृशत्वात् । भोगः सुखं शरीरं वा तद्भाजि । जनितमदने । खेष्विन्द्रियेषु लीना आसक्ता उन्मुखा यस्मिंस्तादृशे । एतैरेव विशेषणैरवतारदशकरूपतापि स्तनस्य बोध्या । तद्यथा—रत्या आप्तः प्रियः कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे । कठिनताया आवासे कूर्मे । रसया पृथिव्या स्वोद्धरणकाल आलिङ्गिते वराहे । प्रह्लादे एको रसः प्रीतिर्यस्य तस्मिन्नृसिंहे । क्रमः पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने । भूभृतां राज्ञां गौरवनाशके भार्गवे । कोकस्पर्धिनि सीतावियोगातुरतया चक्रवाकशापदे रामे । भोगः फणा तद्भाजि शेषावतारे बलभद्रे । जनितमनङ्गमङ्गस्य शरीरस्य विरुद्धं मौनभोगत्यागसमाधिप्रभृति येन तस्मिन् बुद्धे । खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति ॥ क्रमानुसरणेऽपीति । तथा च प्रसिद्धसहपाठानामर्थानां न्यसनं रत्नावलीति सामान्यलक्षणम् ॥ सक्रमाक्रमत्वे तत्प्रभेदाविति भावः ॥ यस्येति । यस्य प्रतापो निहतानां प्रतिशत्रुभूतानामन्तःपुरेषु पञ्चमहाभूतमयो मूर्त इवादृश्यतेत्यन्वयः । पञ्चमहाभूतमयत्वमेव विशेषणैर्दर्शयति—वह्निमय इत्यादि । अङ्गेषु

---

पाठा०—१ 'कुम्भावेमौ'.

एवमष्टलोकपालनवग्रहादीनां प्रसिद्धसहपाठानां यथाकथंचित्प्रकृतोपमानोपरञ्जकतादिप्रकारेण निवेशने रत्नावल्यलंकारः। प्रकृतान्वयं विना क्रमिकतत्तन्नाम्ना श्लेषभङ्ग्या निवेशने क्रमप्रसिद्धरहितानां प्रसिद्धसहपाठानां नवरत्नादीनां निवेशनेऽप्ययमेवालंकारः ॥ १४० ॥

---

## तद्गुणालंकारः ७५

**तद्गुणः[1] स्वगुणत्यागाद्[1]न्यदीयगुणग्रहः।**
**पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥ १४१ ॥**

यथा वा,—

वीर! त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य।
न हरति वनभुवि निजकररुहरुचिखचितानि पाण्डुपत्रधिया ॥ १४१ ॥

---

क्षमामयः पृथ्वीमयः पीडाभरसहिष्णुत्वात् स्वान्तेष्वन्तःकरणेषु आकाशमयः तेषां शून्यताश्रयत्वात्। यथाकथंचिदित्यस्य प्रपञ्चनम्—**प्रकृतोपमानेत्यादि**। उपमानं चोपरञ्जकं चोपमानोपरञ्जके तयोर्भावस्तत्ता प्रकृतं प्रत्युपमानता उपरञ्जकता चेत्यर्थः। उपरञ्जकता चारोप्यमाणता; तदुक्तम्—'उपरञ्जकतामेति विषयी रूपकं तदा' इति। तत्रोपमानता रविरिव प्रतिदिवसोपजायमानोदय इत्यादिवत्। उपरञ्जकता तु 'चतुरास्य' इत्याद्युदाहरणे वह्निमय इत्यादिप्रतापवर्णने च स्पष्टेति ॥ **प्रकृतान्वयं विनेति**। 'मित्र! चन्द्रमुखी बाला लोहिताधरपल्लवा' इत्यादाविति भावः। क्रमिकेत्युपलक्षणम्। तदभावेऽपि 'गुरुणा जघनेनैषा तरुणी मन्दगामिनी' इत्यादावप्ययमलंकार इति बोध्यम् ॥ १४० ॥

इत्यलंकारचन्द्रिकायां रत्नावल्यलंकारप्रकरणम् ॥ ७४ ॥

**तद्गुण इति**। स्वगुणत्यागादनन्तरमन्यदीयगुणग्रहणं तद्गुणालंकारः ॥ **पद्मेति**। तव नासामौक्तिकमधरकान्त्या पद्मरागवदाचरतीत्यर्थः। **वीरेति**। हे वीर! त्वदरिकामिनी वनभुवि परिधानं कर्तुं पल्लवानि करेण संस्पृश्य पाण्डुपत्रबुद्ध्या न हरति न गृह्णाति। कीदृशानि? निजकररुहाणां नखानां रुच्या श्वेतकान्त्या खचितानि व्याप्तानीत्यर्थः ॥ १४१ ॥

इत्यलंकारचन्द्रिकायां तद्गुणालंकारप्रकरणम् ॥ ७५ ॥

---

**टिप्प०**—1 मीलिते प्रकृतवस्तुनो वस्त्वन्तरेणाच्छादनम्; इह तु विजातीयोत्कृष्टगुणेनापकृष्टगुणाच्छादनमिति भेदः। यथोक्तमन्यत्र—'तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः' इति। मम्मटस्तु—'स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्। वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः' इति।

---

**पाठा०**—१ 'दन्योत्कृष्टगुणग्रहः'.

## पूर्वरूपालंकारः ७६

**पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम् ।**
**हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १४२ ॥**

यथा वा,—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥

अयमेव तद्गुण इति केचिद्व्यवजह्रुः ॥ १४२ ॥

**पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ।**
**दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥ १४३ ॥**

लक्षणे चकारात्पूर्वरूपमिति लक्ष्यवाचकपदानुवृत्तिः ।

यथा वा,—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥ १४३ ॥

---

**पुनरिति ।** स्वगुणत्यागानन्तरं पुनः स्वगुणप्राप्तिः पूर्वरूपमलंकारः ॥ **हरेति । 'नीलोऽपि'** इति युक्तः पाठः ॥ **विभिन्नेति ।** माघे रैवतकगिरिवर्णनम् । गरुडाग्रजेनारुणेन विभिन्नवर्णा मिश्रितवर्णाः सूर्यस्य रथ्या अश्वा यत्र गिरौ वंशाङ्कुरवन्नीलै रत्नैः परितः स्फुरन्त्या रुचा स्वां रुचं नीलद्युतिमानिन्यिरे आनीतवन्तः । रुचा विभिन्नवर्णा इति वाऽन्वयः । केचिदित्यस्वरसबीजं तु 'पद्मरागायते' इत्युदाहरणे तद्गुणालंकारो न स्यात् । न चेष्टापत्तिः । अनुभवसिद्धचमत्कारस्य निरालम्बनत्वापत्तेरित्यूहनीयम् । अथवाऽयं तद्गुण एवेत्येवकारक्रमभङ्गेन काव्यप्रकाशकारादिमतोपन्यासपरत्वेन व्याख्येयम् । तैरत्र तद्गुणस्योदाहृतत्वात् । अत्र हि पूर्वमश्वानामरुणगुणत्वं, अनन्तरं रैवतकरत्नैरुभयेषां तद्गुणत्वमिति तद्गुणद्वयमिति तेषामभिमतम् ॥ १४२ ॥ **पूर्वेति ।** वस्तुनि विकृते विगते सत्यपि पूर्वावस्थाया अनुवृत्तिरपि पूर्वरूपमलंकारः । महः प्रकाशः ॥ **द्वारमिति ।** हे राजन् ! तव विद्विषां मन्दिरे शून्येऽपि चिरंतनः प्रणयो यस्याः, सैव राज्यस्य स्थितिर्मर्यादा । अस्तीति शेषः । यतो द्वारं खड्गिभिर्गण्डकाख्यपशुभिरेव खड्गधारिभिरावृतम् । बहिरपि भूमयो मदप्रस्विन्नगण्डैर्गजैरध्यासिताः । अन्तःपुरभूमयो विलसन्मणिधारिभिः कञ्चुकिभिः सर्पैरेव सौविदल्लैरध्यासिताः । शयनं तल्पं महिषीभिर्वनिताभिरेव महिषस्त्रीभिराक्रान्तमित्यन्वयः ॥ १४३ ॥

**इत्यलंकारचन्द्रिकायां पूर्वरूपालंकारप्रकरणम् ॥ ७६ ॥**

---

पाठा०—१ 'शेषस्तु शशिना सितः'. २ 'आश्रितं'.

## अतद्गुणालंकारः ७७

**संगतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।**
**चिरं रागिणि मच्चित्ते निहितोऽपि न रञ्जसि ॥ १४४ ॥**

यथा वा,—

गण्डाभोगे विहरति मदैः पिच्छिले दिग्गजानां
वैरिस्त्रीणां नयनकमलेष्वञ्जनानि प्रमार्ष्टि ।
यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी ते
कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंहक्षितीन्द्र ! ॥

ननु चान्यगुणेनान्यत्र गुणोदयानुदयरूपाभ्यामुल्लासावज्ञालंकाराभ्यां तद्गुणातद्गुणयोः को भेदः ? उच्यते,—उल्लासावज्ञालक्षणयोर्गुणशब्दो दोषप्रतिपक्षवाची। अन्यगुणेनान्यत्र गुणोदयतदनुदयौ च न तस्यैव गुणस्य संक्रमणासंक्रमणे किंतु सद्गुरूपदेशेन सदसच्छिष्ययोर्ज्ञानोत्पत्त्यनुत्पत्तिवत्तद्गुणजन्यत्वेन संभावितयोर्गुणान्तरयोरुत्पत्त्यनुत्पत्ती । तद्गुणातद्गुणयोः पुनर्गुणशब्दो रूपरसगन्धादिगुणवाची । तत्रान्यदीयगुणग्रहणाग्रहणे च रक्तस्फटिकवस्त्रमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरञ्जनाननुरञ्जने विवक्षिते । तथैव चोदाहरणानि दर्शितानि। यद्यप्यवज्ञालंकृतिरतद्गुणश्च विशेषोक्तिविशेषावेव । 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति तत्सामान्यलक्षणाक्रान्तत्वात् । तथाप्युल्लासतद्गुणप्रतिद्वन्द्विना विशेषालंकारेणालंकारान्तरतया परिगणिताविति ध्येयम् ॥ १४४ ॥

---

**संगतेति** । संगतः स्वसंबद्धो योऽन्यः पदार्थस्तद्गुणानङ्गीकारमतद्गुणालंकारमाहुः ॥ **चिरमिति** । रागिण्यनुरागिणि मञ्जिष्ठादिरञ्जनद्रव्ययुक्ते च । निहितोऽपि त्वं न रञ्जसि, रक्तोऽनुरागयुक्तश्च न भवसीति श्लिष्टम् ॥ **गण्डेति** । हे श्रीमन्नृसिंहाख्यभूपते ! एषा तव कीर्तिर्मदैः पिच्छिले पङ्किले दिग्गजानां गण्डप्रदेशे यद्यपि विहरति तथा वैरिस्त्रीणां नयनकमलेषु स्थितान्यञ्जनानि प्रमार्ष्टि प्रोञ्छति तदपि तथापि दिक्षु हिमकरस्य चन्द्रस्य यत्किरणाद्वैतं तस्य सौवस्तिकी । स्वस्तीत्याहेत्यर्थे 'तदाहेति माशब्दादिभ्यष्ठग्वाच्यः' (वा० २९५१) इत्यनेन ठक्प्रत्ययः । तत्सदृशीति यावत् । स्फुरति प्रकाशत इत्यर्थः ॥ **विशेषाकारेणेति** । प्रागलक्षितविशेषरूपेणेत्यर्थः ॥ १४४ ॥

इत्यलंकारचन्द्रिकायामतद्गुणालंकारप्रकरणम् ॥ ७७ ॥

---

**टिप्प०**—1 स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः । तद्विपर्ययोऽतद्गुणः' इति **पण्डितराजः** । 'तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः' इति दर्पणे ।

---

**पाठा०**—१ 'तानुगुणा'. २ 'निहितापि न रज्यसि'.

## अनुगुणालंकारः ७८

**प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ।**
**नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥ १४५ ॥**

यथा,—

कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः ।
अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥

अत्र कपित्वजात्या स्वतःसिद्धस्य वैकृतस्य मद्यसेवादिभिरुत्कर्षः ॥१४५॥

---

## मीलितालंकारः ७९

**मीलितं[1] यदि सादृश्याद्भेद एव न लक्ष्यते[2] ।**
**रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ १४६ ॥**

यथा वा,—

मल्लिकामाल्यभारिण्यः[3] सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥

अत्राद्ये चरणालक्तकरसयोररुणिमगुणसाम्याद्भेदानध्यवसायः । द्वितीयोदाहरणे चन्द्रिकाभिसारिकाणां धवलिमगुणसाम्याद्भेदानध्यवसायः ॥१४६॥

---

**प्रागिति** । परसंनिधिवशात्पूर्वसिद्धस्य स्वगुणस्योत्कर्षोऽनुगुणो नामालंकारः । नीलोत्पलानि कर्णावतंसीकृतानि ॥ **कपिरिति** । कापिशायनं मद्यम् ॥ १४५ ॥

इत्यलंकारचन्द्रिकायामनुगुणालंकारप्रकरणम् ॥ ७८ ॥

**मीलितमिति** । मीलितमिति लक्ष्यनिर्देशः ॥ **रस इति** । स्वभावलोहिते चरणे लाक्षाया रसो नालक्षि न ज्ञातः ॥ **मल्लिकेति** । क्षौमं दुकूलं तद्धारिण्यः ॥ १४६ ॥

इत्यलंकारचन्द्रिकायां मीलितालंकारप्रकरणम् ॥ ७९ ॥

---

**टिप्प०—1** सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं तद्द्वारेण यत्किंचित् केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते तन्मीलितमिति **मम्मटः** ।

---

**पाठा०—१** 'सिद्धत्वगुणो', 'सिद्धेः स्वगुणो'. २ 'दृश्यते'. ३ 'माल्यभारिण्यः'.

## सामान्यालंकारः ८०

**सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते।**
**पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ १४७ ॥**

यथा वा,—

रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः।
लङ्केश्वरः सभामध्ये न ज्ञातो वालिसूनुना ॥

मीलितालंकारे एकेनापरस्य भिन्नस्वरूपानवभासरूपं मीलनं क्रियते। सामान्यालंकारे तु भिन्नस्वरूपावभासेऽपि व्यावर्तकविशेषो नोपलक्ष्यत इति भेदः। मीलितोदाहरणे हि सहजारुण्याच्चरणादेर्वस्त्वन्तरत्वेनागन्तुकं यावकारुण्यं न भासते। सामान्योदाहरणे तु पद्मानां मुखानां च व्यक्त्यन्तरतया भानमस्त्येव। यथा रावणदेहस्य तत्प्रतिबिम्बानां च, किंत्विदं पद्ममिदं मुखमयं बिम्बोऽयं प्रतिबिम्ब इति विशेषः परं नोपलक्ष्यते। अत एव भेदतिरोधानान्मीलितं, तदतिरोधानेऽपि साम्येन व्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता। केचित्तु वस्तुद्वयस्य लक्षणसाम्यात्तयोः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधाने मीलितं, स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधाने सामान्यम्।

एवं च,—

अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

---

**सामान्यमिति**। सामान्यमिति लक्ष्यनिर्देशः। विशेषो व्यावर्तकधर्मः। पद्मानामाकरः॥ **रत्नस्तम्भेष्विति**। वालिसूनुना अङ्गदेन। एकेन चरणज्योत्स्नादिना। अपरस्य लाक्षारसाऽभिसारिकादेः॥ **भिन्नस्वरूपेति**। मुखपद्मादेर्भिन्नस्य स्वरूपस्यावभासेऽपीत्यर्थः। उक्तमेवार्थमुदाहरणारूढतया विशदयति—**मीलितोदाहरणे हीत्यादिना**। वस्त्वन्तरत्वेन न भासत इत्यन्वयः। तत्प्रतिबिम्बानां च व्यक्त्यन्तरया भानमस्त्येवेत्यनुषङ्गः। केचिदित्यस्याहुरित्यग्रिमेणान्वयः। केचित् प्रकाशकारादयः। तदुक्तम्—'समेन लक्ष्मणा वस्तु वस्तुना यन्निगृह्यते। निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥' इति। तयोर्मध्ये। 'एवं चेत्यस्ये'त्यत्र 'मीलितालंकार' इत्यग्रेतनेनान्वयः॥ **अपाङ्गेति**। अपाङ्गस्तरलो ययोस्ते। तरलाः सत्वरोच्चारणात् वक्रा वक्रोक्तिगर्भा वर्णा यासु ता गिरो

---

**टिप्प०**—1 'प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाग्रहणं सामान्यम्' इति **रसगंगाधरकाराः**।

---

**पाठा०**—१ 'नैव लक्ष्यते'. २ 'संक्रान्तैः'. ३ 'यावकादि न'. ४ 'मधुरवक्रवर्णा'. ५ 'मृगदृशः'.

इत्यत्र मीलितालंकारः । अत्र हि दक्तारल्यादीनां नारीवपुषः सहजधर्मत्वान्मदोदयकार्यत्वाच्च तदुभयसाधारण्यादुत्कृष्टतारल्यादियोगिना वपुषा मदोदयस्य स्वरूपमेव तिरोधीयते । लिङ्गसाधारण्येन तज्ज्ञानोपायाभावात् । 'मल्लिकामालभारिण्य' इत्यादिषु तु सामान्यालंकार इत्याहुः । तन्मते 'पद्माकरप्रविष्टाना'मित्यादौ भेदाध्यवसायेऽपि व्यावर्तकास्फुरणेनालंकारान्तरेण भाव्यं, सामान्यालंकारावान्तरभेदेन वा । पूर्वस्मिन्मते स्वरूपतिरोधानेऽलंकारान्तरेण भाव्यं मीलितावान्तरभेदेन वा ॥ १४७ ॥

---

उन्मीलित-विशेषालंकारौ ८१-८२

भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ[1] ।
हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ॥
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ १४८ ॥

मीलितन्यायेन भेदानध्यवसाये प्राप्ते कुतोऽपि हेतोर्भेदस्फूर्तौ मीलितप्रतिद्वन्द्व्युन्मीलितम् । तथा सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कार-

---

वाक्यरूपाः । इति प्रकारेण मृगदृशामङ्के लीलया स्वतः स्वभावात्स्फुरितं प्रकटीभूतं तत्तस्मादत्राङ्के कृतपदः कृतस्थितिः ॥ **भेदाध्यवसायेऽपीति** । मुखपद्मयोर्भेदावभासेऽपीत्यर्थः । व्यावर्तकास्फुरणेन हेतुना ॥ **अलंकारान्तरेणेति** । स्वरूपातिरोधानेन मीलितासंभवाद्भेदातिरोधानेन च सामान्यस्याप्यसंभवादिति भावः ॥ **सामान्येति** । तथा च 'गुणसाम्याद्विशेषाग्रह' इति सामान्यालंकारसामान्यलक्षणम् । विशेषाग्रहश्च क्वचिद्भेदे गृह्यमाणे क्वचिच्चागृह्यमाण इत्याद्यप्रकारान्तरगतिरत्र तन्मते स्यादिति भावः । 'अवान्तरभेदे'न वेत्यनन्तरं भाव्यमित्यनुषज्यते ॥ **पूर्वस्मिन्निति** । 'मीलितं यदि सादृश्यात्' इत्यादिपूर्वोक्तचन्द्रालोककृन्मत इत्यर्थः । स्वरूपतिरोधानेऽपाङ्गतरल इत्यादिस्वरूपतिरोधानस्थले ॥ **अलंकारान्तरेणेत्यादि** । स्वरूपतो ज्ञायमाने सादृश्याद्भेदाग्रहणं मीलितमित्यङ्गीकारे प्रथमः पक्षः । सादृश्याद्भेदाग्रहणमित्येतावन्मात्रमीलितलक्षणाङ्गीकारे द्वितीय इति भावः ॥ १४७ ॥

इत्यलंकारचन्द्रिकायां सामान्यालंकारप्रकरणम् ॥ ८० ॥

**भेदेति** । वैशिष्ट्यं वैजात्यम् । उन्मीलितं विशेषकश्च क्रमेणालंकारौ । मग्नं भेदाग्रहात्तदन्तर्गतम् ॥ **लक्षितानीति** । संकुचितत्वादिति भावः । सामान्यरीत्या सामान्यालंकारन्यायेन । एवं च 'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि । भृङ्गाः सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥'

---

**टिप्प०**–1 उन्मीलितालंकारो मीलितालंकारान्तर्भूत एवेति प्राहुरुद्द्योतकारादयः । 2 'यदाधेयमनाधारमेकं चानेकगोचरम् । किंचित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा । कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः' इत्युक्तं दर्पणे ।

णाद्विशेषस्फूर्तौ तत्प्रतिद्वन्द्वी विशेषकः। क्रमेणोदाहरणद्वयम्। तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते। यथा,—

नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-
र्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र !।
नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्य-
द्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः॥
काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः॥

इदं विशेषकस्योदाहरणान्तरम्। अत्र द्वितीयौ काक-पिकशब्दौ काकत्वेन ज्ञातः पिकत्वेन ज्ञात इत्यर्थान्तरसंक्रमितवाच्यौ॥ यथा वा,—

वाराणसीवासवतां जनानां साधारणे शंकरलाञ्छनेऽपि।
पार्थप्रहारव्रणमुत्तमाङ्गं प्राचीनमीशं प्रकटीकरोति॥ १४८॥

---

## उत्तरालंकारः ८३

**किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्[1]।**
**यत्रासौ वेतसी पान्थ ! तत्रेयं सुतरा सरित्॥ १४९॥**

सरित्तरणमार्गं पृच्छन्तं प्रति तं कामयमानाया उत्तरमिदम्। वेतसीकुञ्जे स्वाच्छन्द्यमित्याकूतगर्भम्।

---

इत्यपि विशेषकोदाहरणं बोध्यम्। यत्त्वनुमानालंकारेणैव गतार्थत्वान्नानयोरलंकारान्तरत्वमिति,—तदयुक्तम्; उदाहृतस्थले भेदविशेषस्फूर्त्योर्विशेषदर्शनहेतुकप्रत्यक्षरूपत्वात्। अथापि स्वकपोलकल्पितपरिभाषयानुमानालंकारतां ब्रूषे, तथापि सादृश्यमहिम्ना प्रागनवगतयोर्भेदवैजात्ययोः स्फुरणात्मना विशेषाकारेण मीलितसामान्यप्रतिद्वन्द्विना युक्तमेवालंकारान्तरत्वम्। अतद्गुणावज्ञयोरिव विशेषोक्त्यलंकारादित्यलं विस्तरेण॥ **नृत्यदिति**। नृत्यं कुर्वतो भर्गस्य हरस्य योऽट्टहासस्तत्प्रसरस्य समूहस्य विस्तारस्य वा सहचरैः। सदृशैरित्यर्थः। ईदृक्कीर्तिवच्छुक्ल एष कमलाकामुको नाभिकमलपरिमलस्य प्रौढिं समृद्धिं यदि नासादयिष्यन्नाधारयिष्यदित्यन्वयः॥ यत्तु तद्गुणस्यात्र निर्बाधकत्वात्कथं तत्प्रतिद्वन्द्वित्वमुन्मीलितस्येति तदनुक्तोपालम्भरूपत्वादुपेक्ष्यम्। तद्गुणेन भेदानध्यवसायमात्रस्योक्तत्वात्॥ **वाराणसीति**। तृतीयलोचनादिचिह्ने साधारणेऽपि सतीत्यन्वयः। पार्थोऽर्जुनस्तेन कृतो यः प्रहारस्तेन व्रणो यत्र तादृशमुत्तमाङ्गं शिरः। पूर्वत्र स्वाभाविकगुणसाम्यम्, इह त्वागन्तुकगुणसाम्यमिति भेदः॥ १४८॥

इत्यलंकारचन्द्रिकायामुन्मीलित-विशेषालंकारप्रकरणम्॥ ८१-८२॥

**किंचिदिति**। किंचिदभिप्रायसहितं गूढमुत्तरमुत्तरं नामालंकारः। वेतसी

---

टिप्प०-1 'प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम्' इति रसगङ्गाधरकृतः। 'उत्तरं प्रश्नस्योत्तरादुन्नयो यदि। यच्चासकृदसंभाव्यं सत्यपि प्रश्न उत्तरम्।' इति दर्पणे।

यथा वा,—

ग्रामेऽस्मिन्प्रस्तरप्राये न किंचित्पान्थ ! विद्यते ।
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥

आस्तरणादिकमर्थयमानं पान्थं प्रत्युक्तिरियम् । स्तनोन्नतिं दृष्ट्वा रन्तुमिच्छसि चेद्वस । अविदग्धजनप्रायेऽस्मिन्ग्रामे कश्चिदवगमिष्यतीत्येतादृशं प्रतिबन्धकं किंचिदपि नास्तीति हृदयम् । इदमुन्नेयप्रश्नोत्तरस्योदाहरणम् ।

निबद्धप्रश्नोत्तरं यथा,—

कुशलं तस्या ? जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति ॥

ईर्ष्यामानानन्तरमनुतप्ताया नायिकायाः सखीमागतां प्रति 'तस्याः कुशलम् ?' इति नायकस्य प्रश्नः । 'जीवती'ति सख्या उत्तरम् । जीवन्त्याः कुतः कुशलमिति तदभिप्रायः । अन्यत्पृष्टमन्यदुत्तरमिति नायकस्य पुनः 'कुशलं पृच्छामी'ति प्रश्नः । पृष्टस्यैवोत्तरमुक्तमित्यभिप्रायेण जीवतीत्युक्तमिति सख्या वचनम् । सखीवचनस्याभिप्रायोद्घाटनार्थं 'पुनरपि तदेव कथयसी'ति नायकस्याक्षेपः । 'मृतां नु कथयामि या श्वसिती'ति सख्याः स्वाभिप्रायोद्घाटनम् । सति मरणे खलु तस्याः कुशलं भवति, मदागमनसमयेऽपि श्वासेषु संचरत्सु कथं मृतां कथयेयमित्यभिप्रायः ॥ १४९ ॥

अथ चित्रोत्तरम्—

**प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते ।**
**केदारपोषणरताः, के खेटाः, किं चलं वयः ॥१५०॥**

अत्र 'केदारपोषणरता' इति प्रश्नाभिन्नमुत्तरं 'के खेटाः, किं चलम् ?' इति प्रश्नद्वयस्य 'वयः' इत्येकमुत्तरम् । उदाहरणान्तराणि विदग्धमुखमण्डने द्रष्टव्यानि ॥ १५० ॥

---

वेतसलता । सुखेन तरितुं योग्या सुतरा ॥ **ग्राम इति** । प्रस्तरप्राये पाषाणबहुले पाषाणतुल्ये च । 'प्रायो बाहुल्यतुल्ययोः' इति कोशात् । किंचिदास्तरणादिकं समागमप्रतिबन्धकं च । पयोधरो मेघः स्तनश्च । कश्चिदवगमिष्यति ज्ञास्यतीत्येतादृशमित्यादिरूपम् । उन्नेयः कल्प्यः प्रश्नो येन तादृशस्योत्तरस्य ॥ **ईर्ष्यामानेति** । ईर्ष्याहेतुकमानेत्यर्थः । अनुतप्तायाः पश्चात्तापयुतायाः ॥ १४९ ॥ **प्रश्नोत्तरेति** । प्रश्नश्च उत्तरान्तरं च प्रश्नोत्तरान्तरे, ताभ्यामभिन्नमुत्तरं चित्रमित्युच्यत इत्यर्थः ॥ **केदारेति** । दाराणां पोषणे रताः के इति प्रश्नः, केदारस्य क्षेत्रस्य पोषणे रता इति तदेवोत्तरम् । के

---

**टिप्प०**—1 'तच्चित्रं यत्र वर्णानां खङ्गाद्याकृतिहेतुता । संनिवेशविशेषेण शक्तिमात्रप्रकाशकाः' इति प्रकाशकाराः ।

## सूक्ष्मालंकारः ८४

सूक्ष्मं पराशयाभिज्ञेतरसाकूतचेष्टितम् ।
मयि पश्यति सा केशैः सीमन्तमणिमावृणोत् ॥ १५१ ॥

कामुकस्यावलोकनेन संकेतकालप्रश्नभावं ज्ञातवत्याश्चेष्टेयम् । अस्तं गते सूर्ये संकेतकाल इत्याकूतम् ।

यथा वा,—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ १५१ ॥

---

## पिहितालंकारः ८५

पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् ।
प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ १५२ ॥

रात्रौ सपत्नीगृहे कृतजागरणेन श्रान्तोऽसीति तल्पकल्पनाकूतम् ।

यथा वा,—

वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्र स्वेदानुमितं पुरुषायितं पुरुषोचितखड्गलेखालेखनेन प्रकाशितम् ॥ १५२॥

---

खेऽटाः खे आकाशे अटन्तीति प्रश्नस्य यदुत्तरं वयः पक्षिण इति तत् 'किं चलम्?' इति प्रश्नस्य यदुत्तरान्तरं 'वयः' तारुण्यादीति तेनाभिन्नम् ॥ १५० ॥

इत्यलंकारचन्द्रिकायामुत्तरालंकारप्रकरणम् ॥ ८३ ॥

**सूक्ष्ममिति** । पराशयाभिज्ञस्येतरस्मिन्परविषये साभिप्रायं चेष्टितं सूक्ष्मालंकारः । पराशयाभिज्ञश्चासावितरश्च तस्य साकूतचेष्टितमर्थात्परविषय इति चार्थः ॥ **संकेतेति** । संकेतकाले मनो यस्य तज्जिज्ञासुमिति यावत् । विटं जारं नेत्राभ्यामर्पितमाकूतं यस्मिन् तादृशं लीलासंबन्धि पद्मम्, नेत्रेत्यादि क्रियाविशेषणं वा ॥ १५१ ॥

इत्यलंकारचन्द्रिकायां सूक्ष्मालंकारप्रकरणम् ॥ ८४ ॥

**पिहित**मिति लक्ष्यनिर्देशः । तल्पं शयनम् ॥ **वक्रेति** । वक्रे प्रस्रवणशीलानां स्वेदबिन्दूनां प्रबन्धैर्धाराभिः कण्ठे भिन्नं लग्नं कुङ्कुमं दृष्ट्वा कापि वयस्या सखी

---

**टिप्प०**—1 'कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते । धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते' इति प्रकाशकाराः । 'इंगिताकारलक्ष्योऽर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः' इति दण्डी । 2 उद्द्योतकारास्तु—सूक्ष्मालंकारान्तभूतत्वान्न पिहितालंकारः पृथगलंकार इत्याहुः ।

### व्याजोक्त्यलंकारः ८६

**व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम्।**
**सखि! पश्य गृहारामपरागैरसि धूसरा॥ १५३॥**

अत्र चौर्यरतकृतसंकेतभूपृष्ठलुण्ठनलग्नधूलिजालस्य गोपनम्।
यथा वा,—

कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे।
सभृङ्गं पद्ममाघ्रासीर्वारितापि मयाधुना॥

उपपतिना खण्डिताधराया नायिकायाः सकाशमागच्छन्तं प्रियमपश्यन्त्येव सख्या नायिकां प्रति हितोपदेशव्याजेन तं प्रतिनायिकापराधगोपनम्। छेकापह्नुतेरस्याश्चायं विशेषः–तस्यां वचनस्यान्यथानयनेनापह्नवः। अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति। लक्षणे लक्ष्यनाम्नि चोक्तिग्रहणमाकारस्य गोपनार्थं हेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षणम्। ततश्च,—

आयान्तमालोक्य हरिं प्रतोल्यामाल्याः पुरस्तादनुरागमेका।
रोमाञ्चकम्पादिभिरुच्यमानं भामा जुगूह प्रणमन्त्यथैनम्॥

इत्यत्रापि व्याजोक्तिरेव। अत्र ह्यनुरागकृतस्य रोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणामेन गोपनं कृतम्। सूक्ष्मपिहितालंकारयोरपि चेष्टितग्रहणमुक्तिसाधारणव्यापारमात्रोपलक्षणम्। ततश्च,—

नलिनीदले बलाका मरकतपात्र इव दृश्यते शुक्तिः।
इति मम संकेतभुवि ज्ञात्वा भावं तदाब्रवीदालीम्॥

इत्यादिष्वपि सूक्ष्मालंकारः प्रसरति। अत्र श्लोके तावत् 'किमावयोः संकेतस्थानं भविष्यति?' इति प्रश्नाशयं सूचयति कामुके तदभिज्ञया विदग्धया तदा सखीं प्रति साकूतमुक्तमिति सूक्ष्मालंकारो भवति। यतोऽत्र बलाकाया मरकतपात्रप्रतिष्ठितशुक्त्युपमया तस्या निश्चलत्वेनाश्वस्तत्वं तेन तस्य प्रदेशस्य

---

स्मित्वा स्मितं कृत्वा पुंस्त्वं व्यञ्जयन्ती सती तन्व्याः पाणौ खड्गलेखां लिलेखेत्यन्वयः। सूक्ष्मालंकारे पराभिप्रायमवगत्य साकूतचेष्टितेनोत्तरसमर्पणम्। पिहितालंकारे तु गूढं परवृत्तान्तं ज्ञात्वा साकूतचेष्टया तत्प्रकाशनमिति भेदो बोध्यः॥ १५२॥

इत्यलंकारचन्द्रिकायां पिहितालंकारप्रकरणम्॥ ८५॥

**व्याजोक्तिरिति।** लक्ष्यनिर्देशः। चौर्यरते कृतं यत्संकेतभूतभूमिपृष्ठलुण्ठनमित्यन्वयः। उपपतिना जारेण। तस्यां छेकापह्नुतौ॥ **आयान्तमिति।** प्रतोल्यां रथ्यायाम्। एका काचिद्भामा वनिता सख्याः पुरस्ताद्रोमाञ्चकम्पादिभिरनुभावैर्व्यज्यमानमनुरागमेनं हरिं प्रणमन्ती सती जुगूह गोपितवतीत्यन्वयः। लक्ष्यते व्यज्यते॥ **एवमिति।** सूक्ष्मालंकारवदुक्तिरूपव्यापारवर्णनमित्यर्थः॥ **उदाहर्त-**

---

**टिप्प०**—1 निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिरित्याह **मम्मटः**।

निर्जनत्वं तेन 'तदेवावयोः संकेतस्थानम्' इति कामुकं प्रति सूचनं लक्ष्यते। न चात्र ध्वनिराशङ्कनीयः। दूरे व्यज्यमानस्यापि संकेतस्थानप्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात्। एवं पिहितालंकारेऽप्युदाहार्यम्। इदं चान्यदत्रावधेयम्—'यत्रासौ वेतसी पान्थे'त्यादिषु गूढोत्तरसूक्ष्मपिहितव्याजोक्त्युदाहरणेषु भावो न स्वोक्त्याविष्कृतः किंतु वस्तुसौन्दर्यबलाद्वक्तृबोद्धव्यविशेषविशेषिताद्गम्यः। तत्रैव वस्तुतो नालंकारत्वं, ध्वनिभावास्पदत्वात्। प्राचीनैः स्वोक्त्याविष्करणे सत्यलंकारास्पदतास्तीत्युदाहृतत्वादस्माभिरप्युदाहृतानि। शक्यं हि 'यत्रासौ वेतसी पान्थ! तत्रेयं सुतरा सरित्। इति पृच्छन्तमध्वानं कामिन्याह ससूचनम्॥' इत्याद्यर्थान्तरकल्पनया भावाविष्करणमिति। अतः प्राक् लिखितेषु येषूदाहरणेषु संकेतकालमनसं पुंस्त्वं तन्व्या व्यञ्जयन्ती भामा जुगूहेति भावाविष्करणमस्ति तेष्वेव तत्तदलंकार इति॥ १५३॥

---

## गूढोक्त्यलंकारः ८७

**गूढोक्तिरन्योद्देश्यं[1] चेद्यदन्यं प्रति कथ्यते।**
**वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः॥ १५४॥**

यं प्रति किंचिद्वक्तव्यं तत्तटस्थैर्माज्ञायीति तदेव तदन्यं कंचित्प्रति श्लेषेणोच्यते चेत् सा गूढोक्तिः। वृषेत्याद्युदाहरणम्। इह परकलत्रमुपभुञ्जानं कामुकं प्रति वक्तव्यं परक्षेत्रे सस्यानि भक्षयन्तं कंचिदुक्षाणं समीपे चरन्तं निर्दिश्य कथ्यते। नेयमप्रस्तुतप्रशंसा। कार्यकारणादिव्यङ्ग्यत्वाभावात्। नापि श्लेषमात्रम्। अप्रकृतार्थस्य प्रकृतार्थान्वयित्वेनाविवक्षितत्वात्। तस्य केवलमितरवञ्चनार्थं निर्दिष्टतया विच्छित्तिविशेषसद्भावात्।

---

**व्यमिति**। 'यथा वक्रस्यन्दी'ति पद्य एव 'आलीं बालां सस्मितं प्राह मन्दं मुग्धाक्षि! त्वामद्य पश्यामि नाथम्' इत्युत्तरार्धनिर्माणे 'नाथम्' इत्युक्त्वा प्रकाशनमिति बोध्यम्॥ **वस्तुसौन्दर्येति**। वेतसीनिकुञ्जरूपवस्तुसौन्दर्येत्यर्थः॥ ध्वनिभावास्पदत्वाद्ध्वनित्वाश्रयत्वात्॥ उपसंहरति—**अत इति**। येष्वित्यस्य भावाविष्करणमस्तीत्यनेनान्वयः॥ १५३॥

इत्यलंकारचन्द्रिकायां व्याजोक्त्यलंकारप्रकरणम्॥ ८६॥

**गूढोक्तिरिति**। यद्यन्योद्देशकं वाक्यं तत्तदन्यं प्रति कथ्यते चेद्गूढोक्तिरलंकारः। क्षेत्रं सस्यादेः, कलत्रं च। अपेहि दूरीभव॥ **अविवक्षिततत्वादिति**। अयं भावः—प्रकृताप्रकृतश्लेषे 'असावुदयमारूढः' इत्यादावप्रकृतार्थस्य प्रकृतार्थोपमानतयान्वयः स्वीक्रियते। सर्वथैव प्रकृतासंबद्धस्याप्रकृतार्थस्य कथनेऽसं-

---

**टिप्प०**—1 नायं पृथगलंकारः, क्वचिद्गुणीभूतत्वाद्ध्वनित्वाक्रान्तत्वादिति केचित्।

---

**पाठा०**—१ 'अन्योद्देश्याशीर्यदन्यं'.

यथा वा,—

नाथो मे विपणिं गतो, न गणयत्येषा सपत्नी च मां,
त्यक्त्वा मामिह पुष्पिणीति गुरवः प्राप्ता गृहाभ्यन्तरम्।
शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते,
स्वामिन्नागमलालनीय! रजनीं लक्ष्मीपते! रक्ष माम्॥

अत्र 'लक्ष्मीपति'नाम्नो जारस्यागमनं प्रार्थयमानायास्तटस्थवञ्चनाय भगवन्तं प्रत्याक्रोशस्य प्रत्यायनम्॥ १५४॥

---

## विवृतोक्त्यलंकारः ८८

## विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि।
## वृषापेहि परक्षेत्रादिति वक्ति ससूचनम्॥ १५५॥

श्लिष्टगुप्तं वस्तु यथाकथंचित्कविनाविष्कृतं चेद्विवृतोक्तिः। 'वृषापेही'त्युदाहरणे पूर्ववद्गुप्तं वस्तु ससूचनमिति कविनाविष्कृतम्।

यथा वा,—

वत्से! मा गा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः॥

इदं परवञ्चनाय गुप्ताविष्करणम्।

---

बन्धार्थाभिधायकत्वापत्तेः। अतः प्रकृतेऽपि श्लेषवादिनाऽप्रकृतस्य प्रकृतसंबन्धो वाच्यः। स च न संभवति, विवक्षाविरहादिति॥ कुतस्तर्हि अप्रकृतार्थकथनं तत्राह—**तस्येति**। अप्रकृतार्थस्येत्यर्थः। ननु तादृशविवक्षाविरहेऽपि नानार्थविन्यासमात्रेणास्तु श्लेष एवेत्याशङ्क्याह—**विच्छित्तिविशेषेति**। तथा च श्लेषसत्त्वेऽपि विच्छित्तिविशेषाद्गूढोक्तिरवश्यमङ्गीकार्येत्याशयः। अत एव श्लेषमात्रमिति तन्मात्रनिराकरणमेवोपक्रान्तं, नतु श्लेषनिराकरणमिति॥ **नाथ इति**। विपणिः पण्यवीथिका। पुष्पिणी रजस्वला। आगमेन वेदेन लालनीयः स्तुत्यः, आगमनेन लालनीयश्च। रजनीं व्याप्येति अत्यन्तसंयोगे द्वितीया॥ १५४॥

इत्यलंकारचन्द्रिकायां गूढोक्त्यलंकारप्रकरणम्॥ ८७॥

**श्लिष्टगुप्तमिति**। श्लिष्टेत्युपलक्षणम्। अर्थशक्तिमूलगुप्तस्यापि 'गच्छाम्यच्युते'त्यादौ संग्राह्यत्वात्॥ **वत्से इति**। वत्से लक्ष्मि! विषादं खेदं, हरं च; उरुजवं महावेगमूर्ध्वं प्रवृत्तं श्वसनं श्वासं, पवनं च संत्यज; कं जलं पातीति तथा वरुणः कम्पश्च। गुरुर्महान्, बृहस्पतिश्च। बलं प्रसिद्धं, तद्भिदा नाशकेन; बलाख्यदैत्यनाशकेनेन्द्रेण च। अत्र श्रीकृष्णसंनिधौ याहि इति प्रकारेण भयनिवारणव्याजेन

---

**टिप्प०—1** अस्यापि पृथगलंकारत्वं प्रायः प्रकाशकृतादीनां न संमतम्; तस्य केवलगुणीभूतव्यंग्यत्वात्।

त्रपागुप्ताविष्करणं यथा,—

दृष्ट्या केशव ! गोपरागहृतया किंचिन्न दृष्टं मया
तेनेह स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

अत्र कृष्णस्य पुरतो विषमे [1]परिस्खलनमभिहितवत्यास्तं कामयमानाया गोपिकाया वचने विषमपथस्खलनपतनत्राणसंप्रार्थनारूपेण झटिति प्रतीयमानेनार्थेन गुप्तं विवक्षितमर्थान्तरं सलेशं ससूचनमित्यनेनाविष्कृतम् । एवं नैषधादिषु, 'चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्' इति दमयन्तीवाक्यादिकमप्युदाहरणम् । इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणम् ।

अर्थशक्तिमूलगुप्तार्थाविष्करणं यथा,—

गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं चैवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

अत्र 'गच्छाम्यच्युत !' इत्यामन्त्रणेन '[2]त्वया रन्तुं कामेच्छया स्थितं तन्न लब्धं' इत्यर्थशक्तिलभ्यं वस्तु तृतीयपादेनाविष्कृतम् । सर्वमेतत्कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणम् ।

---

सुराणां प्रत्याख्यानं वर्जनं कारयित्वा मन्थो मन्थनं तेन मुग्धः पयोधिः यस्मै लक्ष्मीमदात्स वो दुरितं दहत्वित्यन्वयः ॥ **परेति** । परवञ्चनाय गुप्तस्य आविष्करणमित्यर्थः ॥ **त्रपेति** । लज्जया गुप्तस्येत्यर्थः । **दृष्ट्येति** । गोपे त्वयि यो राग आसक्तिस्तद्धृतयाऽपहृतया, गवां परागैर्धूलिभिर्व्याप्तया च । गोपेति संबोधनं वा । किंचित्समविषमं, युक्तायुक्तं च । इह त्वयि, भूमौ च । पत्युर्भावः पतिता तां, पतनं प्राप्तां च । विषमेषुः पञ्चशरस्तेन खिन्नमनसां, विषमेषु संकटेषु खिन्नमनसां च । अबलानां स्त्रीणां, बलरहितानां च । सलेशं ससूचनम् । गोष्ठं गोस्थानम् ॥ **चेतो नलमिति** । लङ्कां न अयते न गच्छतीत्यर्थे नलं कामयते इच्छतीत्यर्थो गुप्तस्तदाविष्करणं च ह्रीणां हृष्टां चेत्यनेनेति बोध्यम् ॥ **शब्दशक्तीति** । शब्दश्लेषवशेनेत्यर्थः । क्रोडीकृतः संगृहीतः ॥ **गच्छामीति** । अच्युत ! मद्विषये अस्खलितेति गुप्तोऽर्थः । चिरकालं त्वद्दर्शनेनापि न तृप्तिरित्यर्थेन 'दर्शनेन न तृप्तिरपि तु संभोगेन' इत्यर्थो गुप्तः । विजनस्थयोरेकान्तगतयोः । हतश्चासौ जनश्च । अन्यथा रत्यर्थं स्थिताविति संभावयति । तेन द्वयोरकीर्तिर्जातैव वृथैवात्मानं वञ्चयाव इति गुप्तोऽर्थः । आमन्त्रणस्याच्युतेत्यादेर्भङ्ग्या रचनया सूचितो यो वृथावस्थानखेदस्तेनालसाम् ॥ **कविनिबद्धेति** । कविनिबद्धेन वक्त्रा गुप्तस्येत्यर्थः ॥

---

पाठा०—१ 'पथि स्खलनमभिनीय हस्तावलम्बं कामयमानाया'. २ 'रन्तुमेतावत्कालं स्थितं'.

कविगुप्ताविष्करणं यथा,—

सुभ्रु ! त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव विवर्जिताः सुरभयः स्रग्गन्धधूपादयः।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते ! सर्वा ममान्धा दिशः॥

अत्र तावदीर्ष्यामानकलुषितदयिताप्रसादनव्यापारविधिः प्रतीयते। दृष्टिरोगार्तस्य दृष्टिं प्रत्याक्रोशो विवक्षितार्थः। स च 'दृष्टे' इत्यस्य पदस्य प्लुतोच्चारणेन संबुद्धिरूपतामवगमय्याविष्कृतः। कविनिबद्धवक्तृगुप्तं परवञ्चनार्थं, कविगुप्तं स्वप्रौढिकथनार्थमिति भेदः॥ १५५॥

---

## युक्त्यलंकारः ८९

**युक्तिः[1] परातिसन्धानं क्रियया मर्मगुप्तये।**
**त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत्॥१५६॥**

अत्र 'पुष्पचापलेखनक्रियया मन्मथो मया लिखित' इति भ्रान्त्युत्पादनेन स्वानुरागरूपमर्मगोपनाय परवञ्चनं विवक्षितम्।

यथा वा,—

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम्॥

अत्र शुकवाङ्मुद्रणया तन्मुखेन स्वकीयरहस्यवचनशुश्रूषुजनवञ्चनं[2] कृतम्। व्याजोक्तावाकारगोपनं युक्तौ तदन्यगोपनमिति भेदः। यद्वा,—व्याजोक्ताव-

---

**सुभ्रु त्वमिति।** शोभनभ्रूर्दयिता, दृष्टिश्च; तयोः संबोधनम्। कोपो रोषः, विकारश्च। रागिण्यनुरागिणीति। अवनते नम्रे इति च मयीत्यस्य विशेषणम्। पक्षे रागिणि रक्तिमशीले। नम्रे इति दृक्संबोधनम्। एवं दृष्टे इत्यपि॥ **उच्चारणेनेति।** स्वरविशेषसहकृतोच्चारणेनेत्यर्थः॥ १५५॥

इत्यलंकारचन्द्रिकायां विवृतोक्त्यलंकारप्रकरणम्॥ ८८॥

**युक्तिरिति।** स्वस्य मर्मगोपनाय क्रियया यत्परस्यातिसंधानं वञ्चनं सा युक्तिरलंकारः॥ **त्वामिति।** नायकं प्रति दूतीवचनम्। पुष्पस्येदं पौष्पम्। **दम्पत्योरिति।** तस्य शुकस्य अतिमात्रमत्यर्थं निगदत इति संबन्धः। फलशब्दो बीजपरः। गोपनीयविषयभेदस्य विच्छित्तिभेदाप्रयोजकत्वादाह—**यद्वेति।** नन्वेवं सति 'आयान्तमालोक्ये'त्यादौ व्याजोक्तिरेवेति प्रागुक्तं विरुध्येतेत्या-

---

**टिप्प०—1** अयमपि न पृथगलंकार इति प्रायः सर्वेषामभिप्रायः।

---

**पाठा०—१** 'पराभिसंधानं'. **२** 'शुश्रूषुश्वशुरजन'.

प्युक्त्या गोपनमिह तु क्रियया गोपनम्; इति भेदः । एवं च 'आयान्त-मालोक्य हरिं प्रतोल्याम्' इति श्लोकेऽपि युक्तिरेव ॥ १५६ ॥

---

### लोकोक्त्यलंकारः ९०

**लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते[1] ।**
**सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥ १५७ ॥**

अत्र लोचने मीलयित्वेति लोकवादानुकृतिः ।

यथा वा मदीये वरदराजस्तवे—

नामैव ते वरद ! वाञ्छितदातृभावं
व्याख्यात्यतो न वहसे वरदानमुद्राम् ।
विश्वप्रसिद्धतरविप्रकुलप्रसूते-
र्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यम् ॥

अत्रोत्तरार्धं लोकवादानुकारः ॥ १५७ ॥

---

### छेकोक्त्यलंकारः ९१

**छेकोक्तिर्यत्र[2] लोकोक्तेः स्यादर्थान्तरगर्भिता[3] ।**
**भुजङ्ग एव जानीते भुजङ्गचरणं सखे ! ॥ १५८ ॥**

केनचित्कस्यचिद्वृत्तान्तं पृष्टस्य समीपस्थमन्यं निर्दिश्य 'अयमेव तस्य वृत्तान्तं जानाती'त्युक्तवतोऽयमहेः पादानहिरेव जानातीति लोकवादानुकारः। अत्र स चायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदित-विषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहस्येऽप्यनङ्गव्यापारे तस्यायं सहचर इति मर्मोद्घाटनमपि तेन गर्भीकृतम् ।

---

शङ्काह—**एवं चेति** । यद्वेति पक्षाङ्गीकारे चेत्यर्थः । एवं च पूर्वग्रन्थ आद्य-पक्षाभिप्रायेणेति भावः ॥ १५६ ॥

इत्यलंकारचन्द्रिकायां युक्त्यलंकारप्रकरणम् ॥ ८९ ॥

**लोकेति** । अनुकृतिरनुकरणम् ॥ **सहस्वेति** । अर्थाद्विरहं मासानभिव्याप्ये-त्यर्थः ॥ **नामैवेति** । हे वरद ! तव नामैव वाञ्छितदातृत्वमाख्याति कथयति । अतस्त्वं वरदानमुद्रां इतरदैवतवन्न धारयसि । यतो विश्वप्रसिद्धतरे विप्रकुले प्रसू-तिरुत्पत्तिर्यस्य तादृशस्येत्यर्थः ॥ १५७ ॥

इत्यलंकारचन्द्रिकायां लोकोक्त्यलंकारप्रकरणम् ॥ ९० ॥

**छेकोक्तिरिति** । लक्ष्यनिर्देशः । अर्थान्तरगर्भिता अर्थान्तरव्यञ्जकता । समीपस्थं यद्वृत्तान्तः पृष्टस्तत्समीपस्थम् ॥ **स चायं चेति** । पृच्छ्यमानवृत्तान्तस्त-

---

पाठा०—१ 'कथ्यते'. २ 'यदि लोकोक्तेः'. ३ 'गर्भता'.

यथा वा,—

मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि ।
घन ! घटय तं त्वं निःस्नेहं य एव निवर्तने
प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ॥

अत्र धनलिप्सया प्रोषिताङ्गनासखीवचने 'य एव गवां निवर्तने प्रभवति स एव धनंजयः' इत्यान्ध्रजातिप्रसिद्धलोकवादानुकारः । अत्रातिसौन्दर्यशालिनीमिमामपहाय धनलिप्सया प्रस्थितो रसानभिज्ञत्वाद्गोप्राय एव । तस्य निवर्तकस्तु धनस्य जेता धनेनाकृष्टस्य तद्विमुखीकरणेन प्रत्याक्षेपकत्वादित्यर्थान्तरमपि गर्भीकृतम् ॥ १५८ ॥

---

## वक्रोक्त्यलंकारः ९२

**वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ।**
**मुञ्च मानं दिनं प्राप्तं नेह नन्दी हरान्तिके ॥ १५९ ॥**

अत्र 'मानं मुञ्च, प्रयाता रात्रि'रित्याशयेनोक्तायां वाचि नन्दिनं प्राप्तं मा मुञ्चेत्यर्थान्तरं श्लेषेण परिकल्पितम् ।

यथा वा,—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ? ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

इदमविकृतश्लेषवक्रोक्तेरुदाहरणम् । विकृतश्लेषवक्रोक्तेर्यथा,—

भवित्री रम्भोरु ! त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः ।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लंघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥

सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम् ।

---

त्समीपस्थश्चेत्यर्थः । तेन लोकोक्त्यनुवादेन ॥ **मलयेति** । व्राताः समूहाः । यात गताः । विकासितानां मल्लिकाकुसुमानां परिमलस्य भरो यस्मिन् तादृशो ग्रीष्मो भग्नो नष्टः । हे घन ! त्वं यद्युत्सहसे उत्साहवान्भवसि तदा तं निःस्नेहं नायकं घटयाऽनया संयोजय । गवां निवर्तने परापहृतानां व्यावर्तने य एव प्रभवति स एव धनंजयोऽर्जुन इत्यन्वयः । लिप्सया प्रोषितस्य याऽङ्गना तत्सखीवचन इति संबन्धः । आन्ध्रास्तैलङ्गाः । इमां मत्सखीम् । गोप्रायो गोतुल्यः ॥ १५८ ॥

इत्यलंकारचन्द्रिकायां छेकोक्त्यलंकारप्रकरणम् ॥ ९१ ॥

**वक्रोक्तिरिति** । काकुर्ध्वनेर्विकारः । अपरार्थस्याभिप्रेतादर्थादर्थान्तरस्य । नन्दी हरस्य गणविशेषः ॥ **अहो इति** । दारुणा क्रूरेत्यभिप्रेतं, काष्ठेनेति कल्पनम् । विकृतत्वं च कस्यचिद्वर्णस्यावापोद्वापाभ्याम् ॥ **भवित्रीति** । सीतां प्रति रावणोक्तिः

---

पाठा०—१ 'मपूर्वार्थप्र'.

अर्थश्लेषमूलाया वक्रोक्तेर्यथा,—

भिक्षार्थी स क यातः सुतनु! बलिमखे ताण्डवं क्वाद्य भद्रे!
मन्ये वृन्दावनान्ते क नु स मृगशिशुर्नैव जाने वराहम्।
बाले! कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः॥

काक्वा यथा,—

असमालोच्य कोपस्ते नोचितोऽयमितीरिता[1]।
नैवोचितोऽयमिति तं ताडयामास मालया॥

अत्र नैवोचितोऽयमिति काकुस्वरविकारेणोचित एवेत्यर्थान्तरकल्पनम्॥१५९॥

---

## स्वभावोक्त्यलंकारः ९३

**स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्।**
**कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्ष्यते[2]॥ १६०॥**

---

पादत्रयम्। चतुर्थस्तं प्रति सीतायाः। ते तव पतिः स रामो युधि संग्रामे पुरतोऽग्रतो न स्थाता। न स्थास्यतीत्यर्थः। अतिशयेन लघुर्लघिष्ठस्तत्संबोधनम्। इदं पादत्रयं षष्ठाक्षरात्पराणां सप्तमानां 'त्रि-न-वि' इति वर्णानां विलोपो यत्र तादृशं पुनः पठेत्यर्थः॥ **शब्दश्लेषेति**। शब्दस्य परिवृत्त्यसहत्वादिति भावः॥ **भिक्षेति**। जलनिधिश्च हिमवांश्च तत्कन्ययोर्लक्ष्मीपार्वत्योः क्रमेण इत्थं लीलया संलापो मिथोभाषणं नोऽस्मान् त्रायतामित्यन्वयः। इत्थं कीदृक् तदाह—**भिक्षार्थीति**। हरमभिप्रेत्य लक्ष्म्या वाक्यम्। बलेर्दैत्यस्य मखे यज्ञे इति वामनाभिप्रायं पार्वत्याः। भद्रे शोभने! ताण्डवं नृत्यमद्य क वर्तत इति लक्ष्मीप्रश्नस्योत्तरम्। वृन्दावनस्यान्ते मध्ये इति श्रीकृष्णाभिप्रायम्। मृगशिशुर्महादेवेन करे धृतः 'परशुमृगवराभीतिहस्तं प्रसन्नम्' इति ध्यानश्रवणात्। इदं लक्ष्म्या वाक्यम्। नैवेति पार्वत्याः। 'मृगः पशौ कुरङ्गे च' इति विश्वः। कच्चिदिति प्रश्ने। जरठो जीर्णः वृषपतिर्वृषश्रेष्ठ इति हरवृषभाभिप्रायं लक्ष्मीवाक्यम्। गोपो गवां पालक इति कृष्णाभिप्रायमुत्तरमिति। अत्र भिक्षादिपदानां परिवृत्तिसहत्वादर्थश्लेषमूलत्वम्॥ **असमालोच्येति**। अविचार्येत्यर्थः। मालया पुष्पमालया। 'भिक्षुः क्वास्ति बलेर्मखे पशुपतिः क्वास्ते परं गोकुले क्वास्ते पन्नगभूषणः सखि! सदा शेते च शेषोपरि। मुग्धे! मुञ्च विषादमेनमधुना नाहं प्रकृत्या चलास्मीत्येवं गिरिजासमुद्रतनयाहास्योद्गमः पातु वः॥' अस्मिन्नपि पद्येऽयमेवालंकारः॥ १५९॥

इत्यलंकारचन्द्रिकायां वक्रोक्त्यलंकारप्रकरणम्॥ ९२॥

**स्वभावोक्तिरिति** लक्ष्यनिर्देशः। जात्यादिस्थस्य जात्यादिसंबन्धिनः। आदि-

---

**टिप्प०—1** दर्पणे तु 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्' इत्याह **विश्वनाथः**।

---

**पाठा०—१** 'ईरितम्'. २ 'उदीक्षितम्'.

यथा वा,—

तौ संमुखप्रचलितौ सविधे गुरूणां
मार्गप्रदानरभसस्खलितावधानौ ।
पार्श्वोपसर्पणमुभावपि भिन्नदिक्कं
कृत्वा मुहुर्मुहुरुपासरतां सलज्जम् ॥ १६० ॥

---

भाविकालंकारः ९४

भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ।
अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ॥ १६१ ॥

स्थानभीषणत्वोद्भावनपरमिदम् ।

यथा वा,—

अद्यापि तिष्ठति दृशोरिदमुत्तरीयं
धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते ।
वाचं निशम्य नयनं नयनं ममेति
किंचित्तदा यदकरोत्स्मितमायताक्षी ॥ १६१ ॥

---

उदात्तालंकारः ९५

उदात्तमृद्धेश्चरितं श्लाघ्यं चान्योपलक्षणम् ।
सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ १६२ ॥

इदं श्लाघ्यचरितस्यान्याङ्गत्वे उदाहरणम् ।

---

पदेन क्रियादिपरिग्रहः । उत्तरङ्गाणि तरङ्गायमाणान्यक्षीणि येषां तैः । **तावित्ति** । तौ प्रक्रान्तौ वधूवरौ गुरूणां सविधे अन्योन्याभिमुखं प्रचलितौ परस्परस्य मार्गप्रदाने यो रभसो वेगस्तेन स्खलितं भ्रष्टमवधानं सावधानत्वं ययोस्तादृशावुभावपि भिन्नदिक्कं वामदक्षिणरूपदिक्संबन्धि परस्परपार्श्वभागोपसर्पणं मुहुर्मुहुः कृत्वा सलज्जं यथा स्यात्तथोपसरताम् । उपसर्पणं चक्रतुरित्यर्थः । पूर्वोदाहरणे कुरङ्गजातिस्वभाववर्णनम्, अत्र सलज्जक्रियास्वभाववर्णनमिति भेदः ॥ १६० ॥

इत्यलंकारचंद्रिकायां स्वभावोक्त्यलंकारप्रकरणम् ॥ ९३ ॥

**भाविकमिति** । लक्ष्यनिर्देशः ॥ **अद्यापीति** । मम नयनं नयनमिति तस्य वाचं निशम्य स्तनतटात्पतितमुत्तरीयं धर्तुं पुरः प्रवृत्ते मयि सति तदा आयताक्षी यत्किंचित्स्मितमकरोत् । इदमद्यापि मम दृशोः पुरस्तिष्ठतीत्यन्वयः । अत्र नयनपदेन स्ववाचकत्वरूपशक्यसंबन्धेन नेत्रपदं लक्ष्यते; तस्माच्च वस्त्रप्रतीतिः । किंवा स्ववाचकवाच्यत्वरूपशक्यसंबन्धेन वस्त्रमेव लक्षयतीति 'वचोवाणै'रित्यादिवल्लक्षितलक्षणा वा बोध्या । 'नेत्रं पथि गुणे वस्त्रे' इति विश्वः ॥ १६१ ॥

इत्यलंकारचन्द्रिकायां भाविकालंकारप्रकरणम् ॥ ९४ ॥

---

पाठा०—१ 'मृद्धिचरितं'. २ 'यत्राभवत्'.

ऋद्ध्युदाहरणं यथा,—

[ विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः
शशदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ ]

रत्नस्तम्भेषु संक्रान्तैः[2] प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लंकेश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥ १६२ ॥

---

## अत्युक्त्यलंकारः ९६

**अत्युक्तिरद्भुतातथ्य[3]शौर्यौदार्यादिवर्णनम् ।**
**त्वयि दातरि राजेन्द्र ! याचकाः[4] कल्पशाखिनः ॥१६३॥**

इयमौदार्यात्युक्तिः । शौर्यात्युक्तिर्यथा,—

राजन् ! सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिता[5]बाष्पपूरेण पूरिताः ॥

संपदत्युक्तावुदात्तालंकारः । शौर्यात्युक्तावत्युक्त्यलंकार इति भेदमाहुः ।

अनयोरनवद्याङ्गि ! स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥
अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनमण्डलम्[6] ॥

इति सदसदुक्तितारतम्येनातिशयोक्त्यत्युक्त्योर्भेदः ॥ १६३ ॥

---

**उदात्तमिति** । ऋद्धेः समृद्धेश्चरितमुदात्तमलंकारः । तथा श्लाघ्यं चरितम् । अन्यस्योपलक्षणमङ्गं चेत्तदपि तथा । सानौ शिखरे । यस्य पर्वतस्य । किरीटी अर्जुनः । कृच्छ्रात् कष्टात् । आञ्जनेयेन हनूमता ॥ १६२ ॥

इत्यलंकारचन्द्रिकायामुदात्तालंकारप्रकरणम् ॥ ९५ ॥

**अत्युक्तिरिति** । लक्ष्यनिर्देशः । अद्भुतं च तदतथ्यं मिथ्यारूपम् । अकूपाराः समुद्राः ॥ **आहुरिति** । स्वमते तु तथ्यत्वातथ्यत्वाभ्यां भेद इति भावः । अतथ्ये अद्भुतत्वविशेषणस्य कृत्यं दर्शयति—**अनयोरित्यादि** । एतत्पद्यं 'योगेऽप्ययोगोऽसंबन्धातिशयोक्ति'रित्यत्र प्रागुदाहृतम् ॥ **असदुक्तितारतम्येनेति** । अनयोरित्यत्रासदुक्तिमात्रम् । अल्पमिति पद्ये त्वत्यन्तासदुक्तिरिति तारतम्येनेत्यर्थः। तथा चाद्भुतेति विशेषणादत्यन्तातथ्यरूपत्वलाभान्नातिशयोक्तावतिव्याप्तिरिति भावः । अत एव 'अनयो'रिति पद्यानन्तरं दण्डिनोक्तम्–'इति संभाव्यमेवैतद्वि-

---

**पाठा०**—१ इदं पद्यं पं० हालास्यनाथशास्त्रिभिर्मुद्रितकुवलयानन्दे दृश्यते. २ 'संक्रान्तः'. ३ 'तथ्यम्'. ४ 'याजकाः'. ५ 'त्वद्वैरिराजवनिता'. ६ 'स्तनजृंभणम्'.

## निरुक्त्यलंकारः ९७

निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्॥ १६४॥

यथा वा,—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥ १६४॥

---

## प्रतिषेधालंकारः ९८

प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम्।
न द्यूतमेतत्कितव! क्रीडनं निशितैः शरैः॥ १६५॥

निर्ज्ञातो निषेधः स्वतोऽनुपयुक्तत्वादर्थान्तरं गर्भीकरोति। तेन चारुत्वान्वितोऽयं प्रतिषेधनामालंकारः। उदाहरणं युद्धरङ्गे प्रत्यवतिष्ठमानं शाकुनिकं प्रति विदग्धवचनम्। अत्र युद्धस्याक्षद्यूतत्वाभावो निर्ज्ञात एव कीर्त्यमानस्तत्रैव तव प्रागल्भ्यं न युद्धे व्युत्पत्तिग्रहोऽस्तीत्युपहासं गर्भीकरोति, तच्च 'कितव'इत्यनेनाविष्कृतम्।

यथा वा,—

न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥

अत्र स्त्रीणां विषादिनिर्मितत्वाभावः प्रसिद्ध एव कीर्त्यमानस्तासां विषा-

---

शेषाख्यानसंस्कृतम्' इति। एवम् 'लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः। योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे यथा॥' इत्युक्त्वा 'अल्पं निर्मित'मित्याद्युदाहृत्य इदमत्युक्तिरित्युक्तमिति च॥ १६३॥

इत्यलंकारचन्द्रिकायामत्युक्त्यलंकारप्रकरणम्॥ ९६॥

निरुक्तिरिति लक्ष्यम्। योगवशान्नाम्नामर्थविशेषाभिधायिनामर्थान्तरोपवर्णनमिति लक्षणम्॥ **ईदृशैरिति**। चन्द्रं प्रति विरहिण्या उक्तिः। ईदृशैर्जनसंतापनरूपैः। दोषाया रात्रेः कर्ता, दोषाणामाकरश्च॥ **पुरेति**। कनिष्ठिकाऽङ्गुलिविशेषः। अधिष्ठितः कालिदासो यस्यां सा अङ्गुलिविशेषरूपा। अर्थवती न विद्यते कविनाम यस्यां सेत्यन्वर्थनामवती॥ १६४॥

इत्यलंकारचन्द्रिकायां निरुक्त्यलंकारप्रकरणम्॥ ९७॥

कितवो द्यूतकृत्। 'धूर्तोऽक्षदेवी कितव' इत्यमरः। ननु प्रसिद्धानुवादस्याचमत्कारित्वात्कथमलंकारत्वमत आह—**निर्ज्ञात इति**। शकुनैः पाशकैर्दीव्यतीति शाकुनिकः। आविष्कृतमिति ध्वनित्वशङ्कानिवारणम्। एवमग्रेऽपि॥१६५॥

इत्यलंकारचन्द्रिकायां प्रतिषेधालंकारप्रकरणम्॥ ९८॥

घ्यतिशायि क्रौर्यमित्यमुमर्थं व्यक्तीकरोति, स चाप्रतीकारपारुष्या इति प्रतीकारवद्भ्यो विषादिभ्यस्तासां विशेषं दर्शयता विशेषणेनाविष्कृतः ॥ १६५ ॥

---

## विध्यलंकारः ९९

**सिद्धस्यैव विधानं यत्तमाहुर्विध्यलंकृतिम् ।**
**पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभवत् ॥ १६६ ॥**

निर्ज्ञातविधानमनुपयुक्तिबाधितं सदर्थान्तरगर्भीकरणेन चारुतरमिति तं विधिनामानमलंकारमाहुः । उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदतिमधुरपञ्चमध्वनिशालितया सकलजनहृद्यत्वं गर्भीकरोति । तच्च 'पञ्चमोदञ्चने' इति कालविशेषणेनाविष्कृतम् ।

यथा वा, (उ० राम० २।१० )—

हे हस्त दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ? ॥

अत्र रामस्य स्वहस्तं प्रति 'रामस्य गात्रमसी'ति वचनमनुपयुक्तं सत् रामस्य' इत्यनेन स्वस्यात्यन्तनिष्करुणत्वं गर्भीकरोति । तच्च 'निर्भरे'त्यादिविशेषणेनाविष्कृतम् । यद्यप्यनयोर्विधिनिषेधयोरुदाहरणेषु व्यङ्ग्यान्यर्थान्तरसंक्रमितवाच्यरूपाणि तथापि न ध्वनिभावास्पदानि । स्वोक्त्यैव व्यङ्ग्यविशेषाविष्करणात् । व्यङ्ग्याविष्करणे चालंकारत्वमेवेति प्राक्प्रस्तुताङ्कुरप्रकरणे व्यवस्थित-

---

पञ्चमस्य स्वरविशेषस्योदञ्चनमाविष्करणं यत्र तादृशे काले कोकिलः कोकिलो मधुरध्वनिरभवदित्यर्थः । द्वितीयकोकिलपदस्यानुपयुक्तार्थत्वेनार्थान्तरे संक्रमितत्वात् । सकलजनहृद्यत्वप्रतीतिश्च प्रयोजनम् । एवं च शालितयेत्यनन्तरं लक्षितयेति शेषो बोध्यः । पूर्ववद्ध्वनित्वाशङ्कानिवारणाय तच्चेत्याद्युक्तम् ॥ **हे हस्तेति ।** शूद्रतपस्याजनिताधर्मवशादपूर्णायुषि द्विजबालके मृते तद्वधोद्यतस्य रामस्य स्वहस्तं प्रतीयमुक्तिः । जीवातवे जीवनाय । शूद्र एव तपश्चरणान्मुनिरिव मुनिस्तस्मिन्कृपाणं खड्गं विसृज निक्षिप । यतो रामस्याकरुणस्य गात्रं शरीरमसि । निर्भरमतिशयेन गर्भखिन्नायाः सीताया विवासनं निर्वासनं तत्र पटोर्दक्षस्येत्यर्थः । अत्र रामपदमकरुणत्वरूपार्थान्तरसंक्रमितम् । तदतिशयो व्यङ्ग्यः । स चात्यन्तमित्यनेनोक्तः । ध्वनिभावास्पदानि ध्वनित्वप्रयोजकानि ॥ **व्यवस्थितत्वादिति ।** 'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः । यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥' इति ध्वनिकारवचनेन निर्णीतत्वादित्यर्थः ॥ **उक्ताविति ।** 'निषेधाभासमाक्षेपं बुधाः केचन मन्वते । आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च

---

पाठा०—१ 'यत्तदाहुः'. २ 'भवेत्'. ३ 'निवासन', 'प्रवासन'.

त्वात् । पूर्वं बाधितौ विधिप्रतिषेधौ आक्षेपभेदत्वेनोक्तौ । इह तु प्रसिद्धौ विधिप्रतिषेधौ तत्प्रतिद्वन्द्विनावलंकारत्वेन वर्णिताविति भेदः ॥ १६६ ॥

---

हेत्वलंकारः १००

हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १६७ ॥

यथा वा,—

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नो तनुते तन्वि ! पिपासाकुलितं मनः ? ॥

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे ! त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यत्स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥

इत्याद्युदाहरणम् ॥ १६७ ॥

हेतुहेतुमतोरैक्यं हेतुं [1]केचित्प्रचक्षते ।
लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥ १६८ ॥

अत्र च कार्यावश्यंभावतच्छैघ्र्यादिप्रत्यायनार्थः कार्यकारणाभेदव्यपदेशः । रूपके सादृश्यादभेदव्यपदेशः । इह कार्यकारणभावादिति भेदः ॥

---

तिरोहिते ॥' इत्येताभ्यां 'नाहं दूती', 'गच्छ गच्छसी'त्युदाहरणयोः प्रतिपादिताविर्थः । प्रसिद्धत्वाद्बाधितप्रतिद्वन्द्वित्वम् ॥ १६७ ॥

इत्यलंकारचन्द्रिकायां विध्यलंकारप्रकरणम् ॥ ९९ ॥

**हेतोरिति** । हेतुमता कार्येण । मानच्छेदः कार्यम् ॥ **एष इति** । विद्रुमच्छायः प्रवालकान्तिर्विगततरुच्छायश्च । मरुर्निर्जलदेशः ॥ **माने इति** । माने नेच्छति अनिच्छति सति । एवमुपशमे वारयति सति । ह्रियां लज्जायां क्ष्मां भूमिमालिखन्त्याम् । भूम्युल्लेखनस्य तदनुभावत्वात् । स्वातन्त्र्ये च परिवृत्य पराङ्मुखीभूय तिष्ठति सति । धैर्ये करौ व्याधूय मम नानुमतमिति सूचनाय हस्तधूननं कृत्वा गते सति । हे तृष्णे ! त्वामनुसरताऽमुना जनेनैतावत्फलं प्राप्तम् । यत्पादेनापि यो न स्पृष्टः स एव चरणौ स्वीयौ स्प्रष्टुं न सम्यक् मन्यते अनुजानातीत्यन्वयः । अत्र तृष्णारूपहेतुतत्कार्ययोः स्पष्टमभिधानम् ॥ १६८ ॥ भेदान्तरमाह—**हेतुहेतुमतोरिति** । केचिद्भट्टोद्भटप्रभृतयः । तदुक्तम्—'हेतुमता सह हेतोरभिधानमभेदताहेतुः' इति ॥ **लक्ष्मीति** । कटाक्षा विदुषां लक्ष्मीविलासा इत्यन्वयः । अत्र विलासहेतोर्विलासाभिन्नत्वेनाभिधानम् । एवंविधलक्षणायाः प्रयोजनमाह—**अत्रेति** । कार्यावश्यंभावश्च तच्छैघ्र्यं चेति विग्रहः । आदिना अपथ्याशनं

---

पाठा०—१ 'कंचित्'.

यथा वा,—

आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमा-
न्विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः ।
आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं
धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥

अत्र दानमहोत्सवायुष्करत्वादिनाध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः ॥ १६८ ॥

**इत्थं शतमलंकारा लक्षयित्वा निदर्शिताः ।**
**प्राचामाधुनिकानां च मतान्यालोच्य सर्वतः ॥ १६९ ॥**

---

अथ रसवदाद्यलंकाराः—

**रसभावतदाभासभावशान्तिनिबन्धनाः ।**
**चत्वारो रसवत्प्रेय ऊर्जस्वि[1] च समाहितम् ॥ १७० ॥**
**भावस्य चोदयः संधिः शबलत्वमिति त्रयः ।**
**अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात् ॥**
**एवं पञ्चदशान्यानप्यलंकारान्विदुर्बुधाः ॥ १७१ ॥**

तत्र विभावानुभावव्यभिचारिभिरभिव्यञ्जितो रतिहासशोकादिश्चित्तवृत्ति-

---

रोग इत्यादौ कार्यगतोपादेयत्वानुपादेयत्वादिसंग्रहः ॥ आयुरिति । वीरः कलिङ्गेश्वरः कलिङ्गदेशाधिपो विजयत इत्यन्वयः । कीदृशः? दानरूपस्य महोत्सवस्य आयुरिति कार्याभिन्नत्वेनाभिधानम् । एवमग्रेऽपि । विशेषेण नतानां क्षोणीभृतां राज्ञां कलिताकृतिर्धृताकारः । वीरश्रियो वीरलक्ष्म्याः निकेतनं स्थानम् ॥ १६९ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्यभट्टविठ्ठलसूरिवरात्मज-
श्रीरामचन्द्रसूरिसूनुना वैद्यनाथेन कृतायामलंकारचन्द्रिकाख्यायां
कुवलयानन्दटीकायां हेत्वलंकारप्रकरणं संपूर्णम् ॥ १०० ॥

---

( अर्थादन्येऽपि पञ्चदशालंकारा लक्ष्येषु प्रचुरप्रयोगा मूलकारेणानुक्तास्ते प्रदर्श्यन्त इत्यभिप्रेत्य तान्विभजते—चत्वार इति । ) भावस्येति । निर्वेदादेर्व्यभिचारिभावस्येत्यर्थः । प्रत्यक्षप्रमुखाः प्रत्यक्षाद्याः । ते च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्याख्याः ॥ विभावेत्यादि । रत्यादेरालम्बनोद्दीपनरूपाणि नायिकाचन्द्रोदयादीनि कारणानि काव्ये वर्ण्यमानानि विभावयन्तीति व्युत्पत्त्या विभावपदेनाभिधीयन्ते । कार्याणि च कटाक्ष-

---

पाठा०—१ 'ऊर्जस्विच'.

विशेषो रसः, स यत्रापरस्याङ्गं भवति तत्र रसवदलंकारः । विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिस्त्रयस्त्रिंशद्भेदो देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिश्च भावः । स यत्रापरस्याङ्गं तत्र प्रेयोलंकारः । अनौचित्येन प्रवृत्तो रसो भावश्च रसाभासो, भावाभासश्चेत्युच्यते, स यत्रापरस्याङ्गं तदूर्जस्वि । भावस्य प्रशाम्यदवस्था भावशान्तिः । तस्यापराङ्गत्वे समाहितम् । भावस्योद्गमावस्था भावोदयः । द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धाभावो भावसंधिः । बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावशबलता । एतेषामितराङ्गत्वे भावोदयाद्यास्त्रयोऽलंकाराः ।

---

## तत्र रसवदलंकारः १०१

तत्र रसवदुदाहरणम्—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥

अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोऽङ्गम् ।

---

रोमाञ्चादीनि तथाविधान्येवानु पश्चाद्भवन्तीति व्युत्पत्त्याऽनुभावपदेन । एषामेव कार्याणां रत्यादिनोत्पादने कर्तव्ये सहकारिभूतान्युत्कण्ठादीनि च । व्यभिचारिपदेन विशेषादभितः समन्ततो ये स्थायिनं चारयन्तीति व्युत्पत्तेः । एवं रतिरासक्त्यनुरागादिपर्यायबोध्यान्तःकरणवृत्तिः । विकृतिविदूषकादिचेष्टादर्शनजन्या चित्तस्य विकासरूपा वृत्तिर्हासः । इष्टनाशानिष्टलाभादिजन्या चित्तवृत्तिः । शोकः प्रसिद्धः । आदिपदेन क्रोधोत्साहभयजुगुप्साविस्मयनिर्वेदाख्यानां षण्णां परिग्रहः । विशेषपदेन च रत्यादेः स्थायित्वप्रयोजकं परिपुष्टत्वं कान्ताविषयत्वमितरानङ्गत्वं च विवक्षितम् । तदुक्तम्—'रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथ वा । अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥' इति । स्थायिन एव चाभिव्यक्तरसत्वम् । यदाहुः—'कारणान्यथ कार्याणि सहकारीणि यानि च । रत्यादेः स्थायिना लोके तानि चेन्नाट्यकाव्ययोः ॥ विभावा अनुभावास्ते कथ्यन्ते व्यभिचारिणः । व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥' इति । अभिव्यक्तानां च रत्यादीनां रसरूपाणां क्रमाच्छृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्तरूपविशेषसंज्ञा बोध्याः ॥ **निर्वेदादिरिति** । 'निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः । आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ व्रीडा चपलता हर्ष आवेगो जडता तथा । गर्वो विषाद औत्सुक्यं निद्रा विस्मृतिरेव च ॥ स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता । मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥' इति भरतेनोक्ताः । लज्जादिना विकारगोपनमवहित्थाख्यो भावः । देवतेत्याद्यपरिपुष्टत्वादेरुपलक्षणम् । रतिरिति चापुष्टहासादेः ॥ **अनौचित्येनेति** । एतच्चोदाहरणे दर्शयिष्यामः ॥ **मुनिरिति** । कुम्भसंभवोऽगस्त्यः ।

---

पाठा०—१ 'ऊर्जस्विद्'.

यथा वा,—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र करुणस्य शृङ्गारोऽङ्गम् ॥

## प्रेयोलंकारः १०२

प्रेयोलंकार एव भावालंकार उच्यते । स यथा,—

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन !
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥

अत्र शान्तिरसस्य 'कदा'इतिपदसूचितश्चिन्ताख्यो व्यभिचारिभावोऽङ्गम् ।

यथा वा,—

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजौ वाचस्ततो मुद्रिताः ॥

अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गम् ॥

## ऊर्जस्व्यलंकारः १०३

ऊर्जस्वि यथा,—

त्वत्प्रत्यर्थिवसुन्धरेशतरुणीः संत्रासतः सत्वरं
यान्तीर्वीर ! विलुण्ठितुं संरभसं याताः किराता वने ।

---

एकचुलकेन समुद्रे पीयमाने तदन्तर्गतयोरवताररूपयोर्मत्स्यकूर्मयोर्दर्शनेन गम्योऽद्भुतरसो मुनिप्रभावातिशयपर्यवसन्नतया तद्विषयरतिपोषकत्वात्तदङ्गमिति भावः ॥ **अयमिति** । भूरिश्रवसश्छिन्नं हस्तमालोक्य तद्वधूनामुक्तिः । स पूर्वानुभूतोऽयं करः । यः काञ्चीसमाकर्षणशीलः । नीवी वसनग्रन्थिस्तस्या विस्रंसनो मोचक इति स्मर्यमाणया शृङ्गारावस्थया करुणरसपरिपोषः ॥

इत्यलंकारचन्द्रिकायां रसवदलंकारप्रकरणम् ॥

**कदेति** । निमिषमिव दिवसान् कदा नेष्यामीत्यन्वयः । कीदृशः ? काश्यां गङ्गातीरे वसन् । अये इत्यादेरिति आक्रोशन्नित्यनेनान्वयः ॥ **अत्युच्चा इति** । स्फारा विस्तीर्णाः । प्रस्तौमि प्रसंजयामि । भुवः पृथिव्याः । इमां भुवं बिभ्रद्धारयमाणः ॥

इत्यलंकारचन्द्रिकायां प्रेयोलंकारप्रकरणम् ॥

**त्वत्प्रत्यर्थीति** । हे वीर ! संत्रासतो भयाद्वने सत्वरं गच्छतीस्तव

---

पाठा०—१ 'प्रेमभावातिशय'. २ 'ऊर्जस्वित्'.

तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गम् ।

यथा वा,—

त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते! ।
अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ॥

अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विषद्गणरतिरूपो भावाभासोऽङ्गम् ॥

---

## समाहितालंकारः १०४

समाहितं यथा,—

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥

अत्र शृङ्गारस्य कोपशान्तिरङ्गम् ॥

---

प्रत्यर्थिनः शत्रवो वसुन्धरेशा भूपास्तेषां तरुणीर्विलुण्ठितुं याताः किराता भिल्लाः तासां तरुणीनामुत्तरलैरतिचपलैः स्तनैरतितरामतिशयेन लोलैश्चञ्चलैरपाङ्गैर्नेत्रप्रान्तैश्च तैः स्तिमिताः स्तब्धाः प्रोद्गतरोमाञ्चाः विस्मृत उपक्रमो लुण्ठनरूपो यैस्तादृशास्तिष्ठन्तीत्यन्वयः । अत्र शृङ्गारस्याननुरक्तराजवनिताविषयत्वादनौचित्येन प्रवृत्तिरित्याभासरूपत्वम् ॥ **त्वयीति** । अजनिष्ट अभूत् । युधि संग्रामे ॥ **तद्विषयेति** । प्रभुविषया द्विषद्गणस्य या रतिस्तद्रूप इत्यर्थः । अत्र शत्रुविषयकत्वरूपानौचित्येन प्रवर्तितत्वाद्भावस्याभासत्वम् ॥

इत्यलंकारचन्द्रिकायामूर्जस्व्यलंकारप्रकरणम् ॥

**पश्याम इति** । नायकस्य स्वमित्रं प्रति नायिकावृत्तान्तोक्तिः । मयि तूष्णींभूते किमियं प्रपद्यते कुरुते तत्पश्याम इत्यभिप्रायेण मया स्थैर्यं मौनरूपमालम्बितमङ्गीकृतम् । पश्याम इति बहुवचनं सखीसमानाभिप्रायम् । एवं तयाप्ययं खलु शठो मां किमिति नालपति भाषत इति कोप आश्रितः । इत्यन्योन्यं परस्परं विलक्षा लक्ष्यरहिता या दृष्टिस्तत्र चतुरे । सव्याजं निमित्तान्तरव्याजसहितम् ॥

इत्यलंकारचन्द्रिकायां समाहितालंकारप्रकरणम् ॥

## भावोदयालंकारः १०५

भावोदयो यथा ( नैपध० ९।६६ ),—

तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी ।
अदर्शि पादेन विलिख्य पत्रिणा तवैव रूपेण समः स मत्प्रियः ॥

अत्र नलं प्रति दमयन्त्या औत्सुक्यरूपभावस्योदयः शृङ्गाररसस्याङ्गम् ॥

---

## भावसंध्यलंकारः १०६

भावसंधिर्यथा,—

एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली
जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर! भवतः प्रौढाहवाडम्बरम् ॥

अत्र रमणीप्रेम-रणौत्सुक्ययोः संधिः प्रभुविषयभावस्याङ्गम् ॥

---

## भावशबलालंकारः १०७

भावशबलं यथा,—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं?, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,
चेतः! स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ?॥

---

**तदिति** । एधि भव । निनीषामि नेतुमिच्छामि । यतस्तवैव रूपेण समः स मत्प्रियो नलः पत्रिणा हंसेन पादेन विलिख्य अदर्शि दर्शितः ॥

इत्यलंकारचन्द्रिकायां भावोदयालंकारप्रकरणम् ॥

**एकेति** । हे वीर! क्षणमात्रेण युद्धप्रस्थानाद्भावी यो विरहक्लेशस्त्वदसहिष्णुं लोलाक्षीं दयितां पश्यतस्तथा प्रौढसंग्रामाडम्बरमाकर्णयतश्च भवतः; एका कपोलस्थली द्राक् शीघ्रं पुलकैः कुसुमायुधस्य मदनस्येषुधिस्तरुणीव प्रव्यक्ता पुङ्खावली शरपुङ्खपङ्क्तिर्यत्र तथाभूताऽभूत् । अन्या द्वितीया जेतुर्जयशीलस्य मङ्गलपालिका मङ्गलरूपा पालिका या कुशकाशादिनिर्मिता उभयपार्श्वस्थस्तम्भवृक्षादिषु बद्धा मार्गपालीति प्रसिद्धा तद्वदभूदित्यर्थः । अत्र प्रेमपदोक्ताया रतेरपरिपुष्टत्वाद्भावरूपत्वं बोध्यम् ॥

इत्यलंकारचन्द्रिकायां भावसंध्यलंकारप्रकरणम् ॥

**क्वाकार्यमिति** । शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः । अकार्यं ब्राह्मणकन्यासक्तिः । शशलाञ्छनस्य चन्द्रस्य कुलं सोमवंशः । अयं वितर्कः । तदुपमर्देन भूयोऽपीत्यौत्सुक्यम् । एवमग्रेऽपि । श्रुतं शास्त्रश्रवणमिति मतिः । अहो कोपेऽपीति स्मरणम् । अपगतकल्मषाः कृते सुकृते धीर्येषां ते किं वदिष्य-

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विप्रलम्भशृङ्गारस्याङ्गम् ॥

---

## प्रत्यक्षालंकारः १०८

प्रमाणालंकारे प्रत्यक्षं यथा,—

क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥

यथा वा,—

किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः।
संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः ॥

पूर्वत्र प्रत्यक्षमात्रम्, इह तु विशेषदर्शनजन्यसंशयोत्तरप्रत्यक्षमिति भेदः ॥

---

## अनुमानालंकारः १०९

अनुमानं यथा,—

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।
यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥

---

न्तीति शङ्का। स्वप्नेऽपीति दैन्यम्। हे चेतः! स्वास्थ्यमुपेहीति धैर्यम्। कः खलु धन्यो युवा तरुणोऽधरं धास्यति पास्यतीति चिन्ता। विप्रलम्भो वियोग इति पर्यायौ ॥

इत्यलंकारचन्द्रिकायां भावशबलालंकारप्रकरणम् ॥

**क्रान्तेति**। इन्द्रियाणां वर्गः समूहः। मधुनि मद्ये निर्ववार निर्वृतिं प्राप। कथंभूते? संक्रान्तप्रियमुखप्रतिबिम्बे। भग्नकोमलाम्रपल्लववत्सुगन्धौ स्वादुनि आस्वाद्ये प्रकृष्टनादयुक्तभ्रमरयुते शीतस्पर्शे चेति। अत्रेन्द्रियतृप्त्या तज्जन्यः प्रत्यक्षमलंकारः ॥ **किमिति**। आराद्दूरे। इति क्षणं संदिह्य कश्चिद्बकसहवासिनां कमलानां परोक्षैरदृश्यैर्बिब्बोकैः 'मानात्प्रियकथालापे बिब्बोकोऽनादरक्रिया' इत्युक्तलक्षणैर्हावविशेषैर्मुखमिति निश्चिकाय निर्णीतवान् ॥

इत्यलंकारचन्द्रिकायां प्रत्यक्षालंकारप्रकरणम् ॥

**यथेति**। यथाशब्दा अनुमानार्थाः। 'यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः' इति विश्वकोशात्। तथा च चपलजलदरूपो धूमो व्योम्न आकाशस्य रन्ध्रमवकाशं यस्मात्स्थगयति। यस्माच्च कीटमणयः। खद्योताः स्फुलिङ्गानां रूपं दधति धारयन्ति। यस्माच्च विद्युद्रूपाभिर्ज्वालाभिरुल्लसिताः प्रकाशीभूताः परितः पिङ्गवर्णाश्च ककुभो दिशस्तस्मात्पथिकरूपाणां तरूणां खण्डे समूहे स्मरलक्षणो दवाग्निर्लग्न इति मन्ये इत्यन्वयः। प्रयोगस्तु पथिकतरुखण्डे स्मरदावानलवत्

यथा वा,—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवौ
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापपुङ्खितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं तदासां स्मरः।

पूर्वं रूपकसंकीर्णम्, इदमतिशयोक्तिसंकीर्णमिति भेदः।

शुद्धानुमानं यथा,—

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥

यथा वा,—

सौमित्रे! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते,
चण्डांशोर्निशि का कथा? रघुपते! चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता?, धत्ते कुरङ्गं यतः,
क्वासि प्रेयसि! हा कुरङ्गनयने! चन्द्रानने! जानकि!॥

---

## उपमानालंकारः ११०

उपमानं यथा,—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।
यस्तन्वि! तारकान्यासः शकटाकारमाश्रितः॥

अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसम्।
शैलराजमिव धैर्यशालिनं वेद्मि वेङ्कटपतिं महीपतिम्॥

---

व्योमव्यापिजलदधूमवत्त्वादित्यादिर्बोध्यः॥ **यत्रैता इति**। लहरीवच्चलाचलाश्चञ्चला दृशो यासां ता एताः कामिन्यो यत्र जने भ्रूलतां व्यापारयन्ति प्रेरयन्ति तत्रैव भ्रूसंज्ञाविषय एव यद्यस्मादमी मर्मस्पर्शिनो बाणाः संततं पतन्ति तत्तस्मान्मण्डलीकृते चापे पुङ्खिता योजितमुखा ये शरास्तेषु प्रेङ्खंश्चपलः करो यस्य तादृशः क्रोधनः स्मरः शासनमाज्ञा तद्धारक आसामग्रतो धावतीति सत्यमित्यन्वयः॥ **अतिशयोक्तीति**। मार्गणत्वेन दृशामध्यवसानादिति भावः। प्रयोगस्तु एताश्चक्रीकृतचापं सदा पुरोधावदाज्ञाकरमदनकाः मर्मभेदिवाणपाताश्रयभ्रूसंज्ञास्थानकत्वादिति बोध्यः। एवं निलीयमानैरित्यत्रापि। अयं कालः सूर्यास्तमयवान् पक्षिनिलीयमानताद्याश्रयत्वादिति। रविरस्तगमनवान् तादृशकालसंबन्धित्वादिति वा प्रयोगो ज्ञेयः॥ **सौमित्रे इति**। विरहातुरस्य रामस्य लक्ष्मणं प्रत्युक्तिः। अत्राप्ययं चन्द्रः कुरङ्गधारित्वादिति प्रयोगः॥

इत्यलंकारचन्द्रिकायामनुमानालंकारप्रकरणम्॥

**तामिति**। तारकाणां न्यासः संनिवेशः शकटस्याकारं संस्थानमाश्रितस्तां रोहिणीं विजानीहीत्यतिदेशवाक्यार्थज्ञानमिहोपमानम्। इयं शकटाकारनक्षत्रव्यक्तिः रोहिणीपदवाच्येत्युपमितिं प्रति करणत्वात्॥ **अत्रेति**। अत्र एषु राजसु

पूर्वोदाहरणे उपमामूलभूतमतिदेशवाक्यं दर्शितम्। अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः॥

---

## शब्दप्रमाणालंकारः १११

शब्दप्रमाणं यथा (कुमार० ५।८१),—

विवृण्वता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ?॥

अत्र शिवः परमेष्ठिनोऽपि कारणमित्यत्र 'यो ब्रह्माणं विदधाति पूर्वं' इति श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम्। एवं स्मृतिपुराणागमलौकिकवाक्यरूपाण्यपि शब्दप्रमाणान्युदाहरणीयानि॥

---

## स्मृत्यलंकारः ११२

तत्र स्मृतिर्यथा,—

बलात्कुरुत पापानि सन्तु तान्यकृतानि वः।
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत्॥

पूर्वं श्रुतिरभिमतार्थे प्रमाणत्वेनोपन्यस्ता। इह तु स्मृतिरनभिमतार्थे तद्दूषणपरेण प्रमाणतया नीतेति भेदः। आचारात्मतुष्ट्योरपि मीमांसकोक्तधर्मप्रमाणयोर्वेदशब्दानुमापकतया शब्दप्रमाण एवान्तर्भावः।

---

मध्ये मन्मथमिवातिसुन्दरं महीपतिं वेङ्कटपतिसंज्ञं वेद्मीत्याद्यन्वयः। दानवारिर्विष्णुः। शैलराजं हरं धैर्यशालिनं मदनशासकत्वात्॥ **प्रत्यक्षरूपमिति**। सादृश्यविशिष्टपिण्डप्रत्यक्षस्यापि फलायोगव्यवच्छिन्नत्वेन कारणत्वादिति भावः। फलेन उपमितिरूपेण॥

इत्यलंकारचन्द्रिकायामुपमानालंकारप्रकरणम्॥

**विवृण्वतेति**। कुमारसंभवे बटुवेषं हरं प्रति पार्वत्या इयमुक्तिः। वरदोषं प्रकाशयतापि स्खलितान्तःकरणेन त्वया ईशं महादेवं प्रति एकमलक्ष्यजन्मत्वं साधूक्तम्। यतो यमीशात्मभुवो ब्रह्मणोऽपि कारणमामनन्ति वेदाः स कथं लक्ष्यः प्रभव उत्पत्तिस्थानं यस्य तादृग्भविष्यतीत्यन्वयः। **'विवक्षता'** इति क्वचित्पाठः, वक्तुमिच्छतेति तदर्थः॥

इत्यलंकारचन्द्रिकायां शब्दप्रमाणालंकारप्रकरणम्॥

**बलादिति**। नास्तिकोक्तिरियम्। हे जनाः! पापानि बलात्कुरुत। तानि च पापानि वो युष्माकमकृतान्येव भवन्तु। यतो बलात्कारेण कृतान्सर्वानर्थान् मनुरकृतानब्रवीदित्यन्वयः। तद्दूषणपरेण सर्वाभिमतार्थदूषणपरेण। आत्मनस्तुष्टिः प्रीतिर्वैकल्पिके विषये 'गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम्' इत्यादौ प्रमाण-

---

पाठा०—१ 'विवक्षता'.

तत्राचारप्रमाणं यथा (नैषध० ९।१३),—

महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
अतोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति॥

आत्मतुष्टिप्रमाणं यथा (शाकुन्तले १।१९),—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

अत्र दुष्यन्तेनात्मतुष्ट्या शकुन्तलापरिग्रहस्य धर्म्यत्वं श्रुत्यनुमतमनुमीयते। एवं श्रुतिलिङ्गादिकमपि मीमांसोक्तं प्रमाणं संभवदिहोदाहर्तव्यम्।

---

## श्रुत्यलंकारः ११३

तत्र श्रुतिर्यथा,—

त्वं हि नाम्नैव वरदो नाधत्से वरमुद्रिकाम्।
न हि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः॥

अत्र करिगिरीश्वरस्य वरद इत्यभिधानश्रुत्या सर्वाभिलषितदातृत्वं समर्थितम्। लिङ्गं यथा,—

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः॥

अत्र शिवस्य श्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्तिपरिग्रहलिङ्गेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं समर्थितम्। लिङ्गस्यापि मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाण एवान्तर्भावः। एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्दप्रमाण एवान्तर्भावः। अतः—

लोलद्भूलतया विपक्षदिगुपन्यासे विधूतं शिर-
स्तद्वृत्तान्तपरीक्षणेऽकृतनमस्कारो विलक्षस्थितः।

---

मित्युक्तम्॥ **महाजनेति**। दमयन्तीं प्रति नलस्योक्तिः। नाम वितर्के। नाददते न गृह्णन्ति। आचारमुचमाचारत्यागिनम्। विगायति निन्दति॥

**असंशयमिति**। क्षत्रेण क्षत्रियेण परिग्रहे क्षमा योग्या। यत आर्यं श्रेष्ठं मम मनः अस्यां शकुन्तलायामभिलाषशीलम्। पदेषु विषयेषु॥

इत्यलंकारचन्द्रिकायां स्मृत्यलंकारप्रकरणम्॥

**त्वं हीति**। वरमुद्रिकां वरमुद्रां नाधत्से न धारयसि। श्रुतिर्वरदसंज्ञारूपा लिङ्गं गमकम्। पक्षे श्रुत्या तृतीयादिरूपया प्रकर्षेण शीघ्रं सिद्धेऽर्थे अङ्गाङ्गिभावे सति लिङ्गमर्थप्रकाशनसामर्थ्यरूपमाद्रियते। यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थाने विनियुक्तस्य मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपेण लिङ्गेनेन्द्रोपस्थाने विनियोगो नाद्रियत इत्यर्थः। करिगिरीश्वरः हस्तिगिरीश्वरः॥ **विदितमिति**। इत्थंभूतः परार्थैकप्रवृत्तिकः। अत इत्यस्य चेष्टारूपं प्रमाणान्तरं नाशङ्कनीयमित्यग्रेतनेनान्वयः। **लोलदिति**। गुरूणां संनिधावपि द्वाभ्यां नायकाभ्यां समयोचितो विधिर्नोत्सृष्टः।

---

पाठा०—१ 'कालहस्तीश्वरः'.

ईषत्ताम्रकपोलकान्तिनि मुखे दृष्ट्यानतः पादयो-
रुत्सृष्टो गुरुसंनिधावपि विधिर्द्वाभ्यां न कालोचितः ॥

इत्यादिषु चेष्टारूपं प्रमाणान्तरं नाशङ्कनीयम् । क्वचिच्छब्दप्रमाणकल्पकतया चमत्कारो यथा (नैषध० ४।५२),—

किमसुभिर्ग्लपितैर्जड! मन्यसे मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥

अत्र म्रियमाणानां मनश्चन्द्रं प्रविशतीत्येतदर्थिकायाः श्रुतेर्नलमुखचन्द्रविषयत्वे कल्पिते तथा व्याख्यातृस्मरवाक्यं प्रमाणतयोपन्यस्तम्।

---

## अर्थापत्त्यलंकारः ११४

अर्थापत्तिर्यथा,—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि!।
अन्यथा नोपपद्येत पयोधरभरस्थितिः॥

यथा वा,—

व्यक्तं बलीयान् यदि हेतुरागमादपूरयत्सा जलधिं न जाह्नवी।
गङ्गौघनिर्भर्त्सितशम्भुकन्धरासवर्णमर्णः कथमन्यथा भवेत्?।

---

## अनुपलब्ध्यलंकारः ११५

अनुपलब्धिर्यथा,—

स्फुटमसदवलग्नं तन्वि! निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोऽपि लोकाः।

---

तथा लोलद्भ्रूलतया नायिकया विपक्षस्य सपत्न्यादेर्दिश उपन्यासे तत्सकाशादागतोऽसीति सूचने कृते नायकेन नेति सूचनाय शिरो विधूतं संचालितम्। ततस्तद्वृत्तान्तपरीक्षणे नायिकया कृते सति अकृतनमस्कारो विलक्ष एव स्थितः। तत ईषत्ताम्रा कपोलकान्तिर्यस्य तादृशे नायिकाया मुखे कोपातिशयाज्जाते सति तत्पादयोर्दृष्टिपाते नैवानतः प्रणत इति॥ **किमसुभिरिति**। व्याख्यातं प्राक्॥ **तथेति**। नलमुखचन्द्रविषयत्वव्याख्यातुः स्मरस्येत्यर्थः। तच्चासिद्धत्वात्कल्पितमिति भावः। इति शब्दः॥

इत्यलंकारचन्द्रिकायां श्रुत्यलंकारप्रकरणम्॥

**निर्णेतुमिति**। अस्तीति निर्णेतुं शक्यमित्यन्वयः॥ **व्यक्तमिति**। हेतुस्तर्कः। यदि व्यक्तं प्रकटं बलीयान् तदा सा जाह्नवी जलधिं नापूरयत्। अन्यथा पूरणे सति अर्णः समुद्रस्य जलं गङ्गौघैर्निर्भर्त्सितं तिरस्कृतं सच्छम्भुकण्ठसमानवर्णं नीलं कथं स्यादित्यन्वयः॥

इत्यलंकारचन्द्रिकायामर्थापत्त्यलंकारप्रकरणम्॥

**स्फुटमिति**। हे तन्वि! तर्कयन्तस्तर्कशीला अपि लोकास्त्वदवलग्नमनुपल-

कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥

---

## संभवालंकारः ११६

संभवो यथा,—

अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम् ।
किंतु त्वदग्रे शरणागतानां पराभवो नाथ ! न तेऽनुरूपः ॥

यथा वा (मालती० १।६),—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

यथा वा,—

भ्रातः पान्थ ! कुतो भवान्नगरतो वार्ता न वा वर्तते
बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ? ॥

---

भमाना अपश्यन्तस्तवावलम्बं मध्यमसदिति स्फुटमेव निश्चिन्वते। कुलपर्वतश्रेष्ठयुग्मत्वेनाध्यवसितं स्तनद्वन्द्वमाधारं विना यदास्ते तत्त्विह मकरध्वजस्येन्द्रजालं मायाचरितं प्रतीम इत्यन्वयः ॥

इत्यलंकारचन्द्रिकायामनुपलब्ध्यलंकारप्रकरणम् ॥

**अभूतेति** । ईश्वरं प्रति भक्तस्योक्तिः । पूर्वमभूतमभूतपूर्वं तादृशं मम किं वा भावि । न किंचित् । सर्वं शीतातपादि द्वन्द्वं सहे। हि यतो मम सहजमेव दुःखमस्ति । किंतु हे नाथ ! ते तव शरणागतानां भक्तानां त्वदग्रे पराभवो नानुरूपो नोचित इत्यन्वयः। अथवा तव नानुरूप इत्यन्वयः। अत्र दुःखादेः संभवाख्यप्रमाणसिद्धस्य कथनम् ॥ **ये नामेति** । भवभूतेरुक्तिः । नामेति कुत्सने । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । किमपीति काकुः । न किमपीत्यर्थः । एष काव्यनिर्माणरूपः । मम कोऽपि समानधर्मा सदृशो य उत्पत्स्यते अस्ति वा तं प्रति यत्नः, हि यस्मान्निरवधिरयं कालः पृथ्वी च विपुलेति क्रमेण योज्यम् । अत्र 'कालो ह्यय'मित्यादिना सोपपत्तिकं संभवाख्यप्रमाणमुपदर्शितम् ॥ **भ्रातरिति** । पथिकं प्रति ग्रामस्थस्य प्रश्नः । कुत इत्यनन्तरं आगत इति शेषः । नगरादित्युत्तरम् । वार्तेति पुनः पूर्वस्य प्रश्नः । बाढमित्युत्तरमङ्गीकारे । अस्तीत्यर्थः । ब्रूहीति पूर्वस्योक्तिः । युवेत्यादि पान्थवचनम् । सत्यं जीवतीति पुनः पूर्वस्य प्रश्नः । जीवतीत्यादि सर्वं पान्थवचनम् ।

इत्यलंकारचन्द्रिकायां संभवालंकारप्रकरणम् ॥

अत्राद्योदाहरणे 'अभूतपूर्वं मम भावि किं वे'ति संभवप्रमाणसिद्धार्थो दर्शितः । द्वितीयोदाहरणे संभवोपपादकं कालानन्त्यादिकमपि दर्शितम् । तृतीयोदाहरणे तु संभवोऽपि कण्ठोक्त इति भेदः ॥

---

## ऐतिह्यालंकारः ११७

ऐतिह्यं यथा,—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

अत्र लौकिकी गाथेयमित्यनिर्दिष्टप्रवक्तृकप्रवादपारम्पर्यरूपता दर्शिता ॥

## ( अथ संसृष्टिसंकरौ— )

अथैतेषामलंकाराणां यथासंभवं क्वचिन्मेलने लौकिकालंकाराणां मेलन इव चारुत्वातिशयोपलम्भान्नरसिंहन्यायेन पृथगलंकारावस्थितौ तन्निर्णयः क्रियते । तत्र तिलतण्डुलन्यायेन स्फुटावगम्यभेदालंकारमेलने संसृष्टिः । नीर-क्षीरन्यायेनास्फुटभेदालंकारमेलने संकरः । स चाङ्गाङ्गिभावेन समप्राधान्येन संदेहेन एकवाचकानुप्रवेशेन च चतुर्विधः । एवं नृसिंहाकाराः पञ्चालंकाराः ।

---

## अलंकारसंसृष्टिः ११८

तत्रालंकारसंसृष्टिर्यथा ( माघ० ६।१४ ),—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥

अत्र शब्दालंकारयोरनुप्रासयमकयोः संसृष्टिः ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

अत्रोत्प्रेक्षयोरुपमायाश्चेत्यर्थालंकाराणां संसृष्टिः ॥

---

**अनिर्दिष्टप्रवक्तृकेति** । अनिर्दिष्टो विशेषतोऽनुक्तः प्रवक्ता यस्येत्यर्थः । एवं चैतदेवैतिह्यलक्षणमिति दर्शितम् ॥

इत्यलंकारचन्द्रिकायामैतिह्यालंकारप्रकरणम् ॥

**यथासंभवमिति** । संसृष्टिसंकराभ्यां द्वयोस्तदधिकानां वेति यथासंभव-मित्यर्थः ॥ **स्फुटेति** । स्फुटमवगम्यमानो भेदो येषामिति विग्रहः । एकस्मि-न्वाचकेऽनुप्रवेशोऽवस्थितिः । एतत्सर्वमुदाहरणे व्यक्तीभविष्यति ॥

**कुसुमेति** । माघे ऋतुवर्णने पद्यमिदम् । अन्यया कयापि वनितया चलि-तया कलस्वरो मेखलायाः काञ्च्याः कलकलः कोलाहलो विदधे । किंभूतया ? कुसुमसौरभलोभेन परिभ्रमतां भ्रमराणां संभ्रमेण त्वराविशेषेण संभृता समृद्धा

---

पाठा०—१ 'वदन'.

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरसिञ्जितमनोहरमम्बिकायाः ॥

अत्र शब्दार्थालंकारयोरनुप्रासोपमयोः संसृष्टिः ।

---

## अङ्गाङ्गिभावसंकरालंकारः ११९

अङ्गाङ्गिभावसंकरो यथा,—

तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः ॥

अत्र 'शशाङ्कसिंहेन' इति 'तमोगजानाम्' इति च रूपकम् । यद्यप्यत्र शशाङ्क एव सिंहस्तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवच्छशाङ्कः सिंह इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या, तथापि 'लूनाकृतीनाम्' इति विशेषणानुगुण्याद्रूपकसिद्धिः । तस्य हि विशेषणस्य प्रधानेन सहान्वयेन भाव्यं, न तु गुणेन । 'गुणानां च परार्थत्वादसंबन्धः समत्वात्' इति न्यायात् । उपमितसमासाश्रयणे तस्य पूर्वपदार्थप्रधानत्वाच्छशाङ्कस्य तमसां च प्राधान्यं भवेत् । तत्र च न विशेषणस्य मुख्यार्थान्वयस्वारस्यमस्ति । स्वरूपनाशरूपोपचरिताकृतिलवनकर्तृत्वान्वयसंभवेऽपि

---

शोभा यस्यास्तया । अलका लोला यस्यां तादृशी दृग्यस्यास्तथाभूतयेति ॥ आनन्देति । आनन्देन मन्थरं यथा स्यात्तथा । पुरन्दरेणेन्द्रेण मुक्तमर्पितं माल्यं यत्र तादृशं महिषासुरस्य मौलौ मस्तके हठेन निहितं मञ्जु मनोज्ञं मञ्जीरस्य नूपुरस्य सिञ्जितं रणितं यत्र तादृशमनोरममम्बिकायाः पादाम्बुजमम्बुजसदृशं चरणं नोऽस्माकं विजयाय भवत्वित्यन्वयः । अत्र पादाम्बुजमित्युपमितसमास एव नतु मयूरव्यंसकादिवत्पाद एवाम्बुजमिति । तथा सत्यम्बुजप्राधान्ये मञ्जीरसिञ्जितान्वयायोगादित्युपमैव न रूपकमिति ज्ञेयम् ।

इत्यलंकारचन्द्रिकायामलंकारसंसृष्टिप्रकरणम् ॥

**तलेष्विति** । तदा मारुतकम्पितानां महीरुहाणां तलेषु छाया अवेपन्त कम्पमाना आसन् । तत्रोत्प्रेक्षते—शशाङ्करूपेण सिंहेन छिन्नाकृतीनां तमोलक्षणगजानां शरीरखण्डा इवेति । 'गुणानां च—' इति तार्तीयाधिकरणसूत्रम् । अस्यार्थः—गुणानां गुणभूतानां पदार्थानां परार्थत्वान्मुख्यप्रधानार्थत्वात्परस्परमसंबन्धः । कुतः ? समत्वादप्रधानत्वसाम्यादिति । यथा भाष्यकारमते पावमानेष्टीनामाधानस्य चाहवनीयाद्यर्थत्वात्परस्परं नाङ्गाङ्गिभावसंबन्धः । यथा वा वार्तिककारमतेऽग्निसमिन्धनार्थानां मन्त्रविशेषरूपाणां निविदां सामिधेनीनां चेति संक्षेपः । एतदधिकरणपूर्वपक्षसिद्धान्तौ प्रकृतानुपयोगान्न दर्शितौ ॥ **स्वरूपनाशेति** । स्वरूपनाशरूपमुपचरितं गौणं यदाकृतिलवनमित्यर्थः ॥ नन्वेवमपि तमोंशेऽस्य विशेष-

मुख्यार्थान्वयस्वारस्यमेवादरणीयम्। अतः स्वरूपनाशक्रोडीकरणप्रवृत्तया लक्षणामूलातिशयोक्त्या रूपकसिद्धिः। तच्च रूपकमुत्प्रेक्षाया अङ्गं तदुत्थापकत्वात्। रूपकाभावे हि छाया लूनगात्रखण्डा इवावेपन्तेत्येतावदुक्तावुपमैव सिध्येत्। वेपनादिसाधर्म्यात्। न छायानां सद्यःकृत्तगात्रखण्डतादात्म्यसंभावनारूपोत्प्रेक्षा। ननु शशाङ्केन लूनाकृतीनां तमसां गात्रखण्डा इवावेपन्तेत्येतावदुक्तावपि सिध्यत्युत्प्रेक्षा; तादात्म्यसंभावनोपयुक्तलूनाकृतित्वरूपाधिकविशेषणोपादानात्। सत्यम्; तथोक्तावाकृतिलवनादिधर्मैरूपकार्यसमारोपनिमित्ता शशाङ्कतमसोर्हन्तृहन्तव्यचेतनवृत्तान्तसमारोपरूपा समासोक्तिरपेक्षणीया। एवमुक्तौ रूपकमिति विशेषः। एवं चात्रातिशयोक्तिरूपकोत्प्रेक्षाणामङ्गाङ्गिभावेन संकरः॥

---

## समप्राधान्यसंकरालंकारः १२०

समप्राधान्यसंकरो यथा,—

अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा।
स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभःश्रियः॥

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याङ्गभूतयोत्थाप्यमानैव सवितृतुरगावल्यां गगनलक्ष्मीमरकतैकावलीतादात्म्योत्प्रेक्षा नभोलक्ष्म्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते। पयोधरशब्दश्लेषस्योभयोपकारकत्वात्, तत उत्प्रेक्षासमासोक्त्योरेकः कालः। परस्परापेक्षया चारुत्वसमुन्मेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यम्।

---

णस्यान्वयात्कथं रूपकसिद्धिरित्याशङ्क्याह—**स्वरूपेति**। क्रोडीकारेण निगरणेन॥ **लक्षणामूलेति**। साध्यावसानलक्षणामूलेत्यर्थः। तथा च तमोंशे उपचारेणान्वय इति भावः। न चैवं सत्युपमाङ्गीकारेऽपि किं बाधकमिति वाच्यम्। तदङ्गीकारे प्रधानान्वयेऽप्युपचाराश्रयणापत्तेः। तदपेक्षयाऽप्रधाने तमोंशे तदङ्गीकारेण रूपकस्यैवौचित्यादिति॥ **न छायानामिति**। सिध्येदित्यनुवर्तते। उत्प्रेक्षा न सिध्येदित्यन्वयः। इवशब्दस्य सादृश्ये प्रसिद्धतरत्वेनासति तात्पर्यग्राहके संभावनाबोधकत्वासंभवादिति भावः। रूपकं विनाप्युत्प्रेक्षायां तात्पर्यग्राहकमस्तीति शङ्कते—**नन्विति**। एवमुक्तौ तमोगजानामित्युक्तौ। तथा च साधकान्तरस्य साधकान्तरादूषकत्वाद्रूपकस्योत्प्रेक्षाङ्गत्वमविकृतमिति भावः॥

इत्यलंकारचंद्रिकायां अङ्गाङ्गिभावसंकरालंकारप्रकरणम्॥

**अवत्विति**। सवितुः सूर्यस्य तुरगावली अश्वपङ्क्तिर्नोऽस्मानवतु। केव? नभःश्रियो गगनलक्ष्म्याः मरकतमणीनामेकलता एकावलीवेत्युत्प्रेक्षा। सूर्यतुरङ्गाणां हरितवर्णत्वात्। कथंभूता? सम्यगतिलङ्घितास्तुङ्गा उच्चाः पयोधरा मेघा यया। एकावलीपक्षे—पयोधरौ स्तनौ। तथा स्फुरितो दीप्तिमान्। मध्यगतोऽरुण-

यथा वा,—

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

अत्राङ्गुलीभिरिवेति वाक्योक्तोपमया तत्प्रायपाठान्मुख्यकुड्मलीकरणलिङ्गानुगुण्याच्चोपमितसमासाश्रयणेन लब्धया सरोजलोचनमिति समासोक्तोपमयाङ्गभूतयोत्थाप्यमानैव शशिकर्तृकनिशामुखचुम्बनोत्प्रेक्षा निशाशशिनोर्दाम्पत्यव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते। उपमयोरुभयत्रोत्थापकत्वाविशेषात्समासोक्तिगर्भतां विना चुम्बनोत्प्रेक्षाया निरालम्बनत्वाच्च। ततश्चात्राप्युत्प्रेक्षासमासोक्त्योरेककालयोः समप्राधान्यम् । यद्यप्यत्रोपमाभ्यां शशिनिशागतावेव धर्मौ समर्थ्येते, नतु शशि-नायकयोः निशा-नायिकयोश्च साधारणौ धर्मौ। साधारणधर्मसमर्पणं चोत्प्रेक्षासमासोक्त्योरपेक्षितम्। उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियारूपनिमित्तसापेक्षत्वात्समासोक्तेर्विशेषणसाम्यमूलकत्वाच्च। तथापि वाक्योक्तोपमायामिवकारस्य 'मरीचिभिरिव' इत्यन्वयान्तरमभ्युपगम्यान्वयभेदलब्धस्य प्रकृताप्रकृतयोरेकैकविषयस्यार्थद्वयस्य समासोक्तोपमायां 'सरोजसदृशं लोचन'मिति समासान्तरमभ्युपगम्य समासभेदलब्धार्थद्वयस्य चाभेदाध्यवसायेन साधारण्यं संपाद्य च तयोरुत्प्रेक्षासमासोक्त्योरङ्गता निर्वाह्या। यद्वा,—इह प्रकृतकोटिगतानां मरीचितिमिरसरोजानामप्रकृतकोटिगतानां चाङ्गुलिकेशसंचयलोचनानां च तनुदीर्घारुणत्वनीलनीरन्ध्र-

---

रूपो नायको नेता सारथिर्यस्याः । पक्षे—अरुण आरक्तो नायको हारमध्यमणिः । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । अतिशयोक्त्या मेघानां स्तनत्वेनाध्यवसानरूपया । गर्भैवेत्यनेन तिलतण्डुलन्यायेन स्फुटावगम्यमानभेदायाः संसृष्टेः सकाशाद्वैलक्षण्यं दर्शितम् ॥ **एवमत्रेति** । एकस्य चमत्कृतिजनने परापेक्षत्वादङ्गाङ्गिभावमाशङ्क्याह—**परस्परेति** । **अङ्गुलीभिरिति** । शशी अङ्गुलीभिरिव मरीचिभिः केशसंचयमिव तिमिरं संनिगृह्य कुड्मलीकृतसरोजलोचनं लोचनमिव सरोजं यत्र तादृशं रजनीमुखं चुम्बतीवेत्यन्वयः ॥ **तत्प्रायेति** । उपमाबहुले संदर्भे पाठादित्यर्थः ॥ **मुख्येति** । मुख्यार्थरूपं यत्कुड्मलीकरणरूपं लिङ्गं पुष्पासाधारणधर्मस्तस्यानुकूल्यादित्यर्थः । उत्थापकत्वाविशेषादङ्गत्वाविशेषात् ॥ चन्द्रस्य चुम्बनोत्प्रेक्षायां दाम्पत्यव्यवहारसमारोपात्मकसमासोक्तौ चापेक्षितस्य नायकसाधर्म्यस्योक्तोपमाभ्यामसमर्पणात्कथं तयोस्तदङ्गत्वमिति शङ्कते—**यद्यपीति** । **मरीचिभिरिवेति** । मरीचिभिरिवाङ्गुलीभिस्तिमिरमिव केशसंचयमित्येवंरूपमित्यर्थः । एकैकविषयस्यार्थद्वयस्याभेदाध्यवसानेनेत्यन्वयः । तयोर्वाक्यसमासोक्तोपमयोः । आवश्यकाभेदाध्यवसायेनोपपत्तौ कृतमन्वयान्तरसमासान्तरकल्पनागौरवेणेत्याशयेनाह—**यद्वेति** । तनुदीर्घेत्यादौ पूर्वनिपातनियमानुरोधेन यथासंख्यक्रमपरित्यागः । तथा चाङ्गुलिमरीच्योस्तनुत्वनीरन्ध्रत्वाभ्यां तिमिरकेशसंचययोरावरणरूपत्वनीलत्वाभ्यां सरोजलोचनयोर्दीर्घत्वकान्ति-

त्वकान्तिमत्त्वादिना सदृशानां प्रातिस्विकरूपेण भेदवत् अनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति स चात्र विवक्षित एव। भेदाभेदोभयप्रधानोपमेत्यालंकारिकसिद्धान्तात्। तत्र च प्रयाजकाण्डनिष्कर्षन्यायेनाभेदगर्भतांशोपजीवनेन साधारण्यं संपाद्य प्रधानभूतोत्प्रेक्षा समासोक्त्यङ्गता निर्वाह्या। न हि प्रकाशशीतापनयनशक्तिमतः सौरतेजसः शीतापनयनशक्तिमात्रेण शीताल्पयोगिता न दृष्टा॥

एवमनभ्युपगमे च,—

'पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥'

इत्याद्युपमापि न निर्वहेत्। न ह्यत्राद्रिराजपाण्ड्ययोरुपमानोपमेययोरनुगतः साधारणधर्मो निर्दिष्टः। एकत्र बालातपनिर्झरौ, अन्यत्र हरिचन्दनहाराविति धर्मभेदात्। तस्मात्तत्रबालातपहरिचन्दनयोर्निर्झरहारयोश्च सदृशयोरभेदांशोपजीवनमेव गतिः॥

'पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम्।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः॥'

इत्यत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यम्। अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात्। तदादायेति फेनचन्दनरूपकमात्रोपजीवनेन पूर्वोत्प्रेक्षानपेक्षणात्। नचैवं 'लिम्पतीव तमोऽङ्गानी'तिवदुत्प्रेक्षाद्वयस्य संसृष्टिरेवेयमिति वाच्यम्। लौकिकसिद्धपेषणलेपनपौर्वापर्यच्छायानुकारिणोत्प्रेक्षाद्वयपौर्वापर्येण

---

मत्त्वाभ्यां च सादृश्यं बोध्यम्। प्रातिस्विकरूपेण अङ्गुलित्वमरीचित्वादिना॥ **अनुगतेति**। अनुगतं यत्सादृश्यप्रयोजकं रूपं तनुत्वादिकं तेनेत्यर्थः। एतच्च सादृश्यमतिरिक्तमित्यभिप्रायेण॥ **सिद्धान्तादिति**। तदुक्तं—'साधर्म्यं त्रिविधं भेदप्रधानमभेदप्रधानं भेदाभेदप्रधानं चे'त्युपक्रम्य विधानाथेन 'उपमानन्वयोपमेयोपमास्मरणानां भेदाभेदसाधारणसाधर्म्यमूलत्व'मिति। ननु भेदाभेदरूपांशद्वयोपेताया उपमाया भेदांशस्यानुपयोगात्कथं तस्या उत्प्रेक्षाद्युपयोगित्वमित्याशङ्क्य परिहरति—**न हीति**। प्रकाशश्च शीतापनयनं चेति द्वन्द्वः। शीतालुः शीतार्तः 'शीतोष्णतृप्रेभ्यस्तदसहने' (वा. ३२१७) इति वा आलुः। उक्तसिद्धान्तस्य निर्युक्तिकत्वेनाश्रद्धेयत्वमाशङ्कमानं प्रत्याह—**एवमिति**। **पाण्ड्योऽयमिति**। पाण्ड्यनामायं नृपः अद्रिराज इवाभाति। कथंभूतः? अंसयोरर्पितो लम्बो हारो येन सः। तथा हरिचन्दनेन रक्तचन्दनेन क्लृप्तः कृतोऽङ्गरागोऽनुलेपनं येन तथाभूतः। अद्रिराजः कीदृक्? बालातपेन रक्तानि सानूनि प्रस्थानि यस्य सः। तथा निर्झरस्योद्गारेणोद्गमेन सहितः। **पिनष्टीति**। व्याख्यातं प्राक्॥ **पौर्वापर्येणेति**। तथा च चमत्कारप्रयोजकपौर्वापर्यघटकत्वेन भेदानवभासात्संसृष्टि-

चारुतातिशयसमुन्मेषतः संसृष्टिवैषम्यात् । तस्माद्दर्शादिवदेकफलसाधनतया समप्रधानमिदमुत्प्रेक्षाद्वयम् । एवं समप्रधानसंकरोऽपि व्याख्यातः ॥

---

## संदेहसंकरालंकारः १२१

संदेहसंकरो यथा (रघु० ६।८५),—

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

अत्र इयमिति सर्वनाम्ना यद्यजं वृतवतीन्दुमती विशिष्टरूपेण निर्दिश्यते तदा बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः सदृशयोरैक्यारोपरूपा निदर्शना। यदि तेन सा स्वरूपेणैव निर्दिश्यते, बिम्बभूतो धर्मस्तु पूर्वप्रस्तावात्समगुणयोगप्रीतय इति पौरविशेषणाच्चावगम्यते, तदा प्रस्तुते धर्मिणि तद्वृत्तान्तप्रतिबिम्बभूताप्रस्तुतवृत्तान्तारोपरूपं ललितमित्यनध्यवसायात् संदेहः ॥

यथा वा,—

विलीयेन्दुः साक्षादमृतरसवापी यदि भवे-
त्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥

अत्र यद्येतावत्साधनं संपद्येत तदा तापः शाम्यतीत्यर्थे कविसंरम्भश्चेत्तदैतदुपात्तसिद्ध्यर्थमूह इति संभावनालंकारः । एतावत्साधनं कदापि न संभवत्येवातस्तापशान्तिरपि गगनकुसुमकल्पेत्यर्थे कविसंरम्भश्चेदुपात्तमिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनारूपा मिथ्याध्यवसितिरित्युभयथासंभवात्संदेहः।

एवम् ,—

'सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ।
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ॥'

---

वैलक्षण्यमिति भावः । दर्शादिवद्दर्शपौर्णमासादिवत् । अयं च भिन्नकालीनयोरपि समप्राधान्ये दृष्टान्तः । फलं तत्र स्वर्गः । प्रकृते तु चमत्कृतिविशेषः ॥

इत्यलंकारचन्द्रिकायां समप्राधान्यसंकारालंकारप्रकरणम् ॥

**शशिनमिति** । अत्र अजस्येन्दुमत्या स्वयंवरे समगुणयोरजेन्दुमत्योर्योगेन प्रीतिर्येषां ते पौरा नागरिकाः नृपाणामन्येषां श्रवणयोः कटु पीडाकरमिति पूर्वार्धरूपकमेव वाक्यं विवव्रुरुच्चारयामासुरित्यन्वयः । तेन सर्वनाम्ना सा इन्दुमती बिम्बभूतो धर्मः । अजकर्मकं वरणम् । तत्र तस्मिन्पक्षे ॥ **विलीयेति** । अग्निसंयोगेन घृतादिवत्केनापि हेतुना विलीनतां प्राप्येत्यर्थः । विकचं विकसितम् । जडभावः शैत्यम् । मदन एव शिखी वह्निः । संरम्भस्तात्पर्यम् ॥ **सिक्तमिति** ।

इत्यादिष्वपि संभावनामिथ्याध्यवसितिसंदेहसंकरो द्रष्टव्यः ॥

मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी ।
फलसंदोहगुरुणा तरुणा किं प्रयोजनम् ? ॥

अत्र महोरगवृत्तान्ते वर्ण्यमाने राजद्वाररूढखलवृत्तान्तोऽपि प्रतीयते । तत्र किं वस्तुतस्तथाभूतमहोरगवृत्तान्त एव प्रस्तुतेऽप्रस्तुतः खलवृत्तान्तस्ततः प्रतीयत इति समासोक्तिः । यद्वा,–प्रस्तुतखलवृत्तान्तप्रत्यायनायाप्रस्तुतमहोरगवृत्तान्तकीर्तनमप्रस्तुतप्रशंसा । यद्वा,–वर्ण्यमानमहोरगवृत्तान्तकीर्तनेन समीपस्थितखलमर्मोद्घाटनं क्रियत इति उभयस्यापि प्रस्तुतत्वात्प्रस्तुताङ्कुर इति संदेहः ।

---

## एकवचनानुप्रवेशसंकरः १२२

एकवाचकानुप्रवेशसंकरस्तु शब्दार्थालंकारयोरेवेति लक्षयित्वा काव्यप्रकाशकार उदाजहार—

स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ यत्रैकस्मिन् श्लोके पदभेदेन शब्दार्थालंकारयोः स्थितिस्तत्र तयोः संसृष्टिः, इह तु संकर इति । अलंकारसर्वस्वकारस्तु

---

स्फटिककुम्भान्तःस्थित्या श्वेतीकृतैर्जलैः सिक्तं मौक्तिकमित्यन्वयः ॥ मुखेनेति । संदोहः समूहः ॥

इत्यलंकारचन्द्रिकायां संदेहसंकरालंकारप्रकरणम् ॥

**लक्षयित्वेति** । 'स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वय'मिति सूत्रेणेत्यर्थः । **स्पष्टेति** । अतो अनन्तरं दिवसरूपमरविन्दं कमलं संचुकोच संकोचमगमत् । कीदृक् ? स्पष्टमुच्छ्वसन्त उल्लसन्तः किरणा एव केसराणि यस्यास्तथाभूता सूर्यबिम्बरूपा विस्तीर्णा कर्णिका वराटो यस्य तत् । श्लिष्टाः प्रकाशाभावेन परस्परं मिलिता अष्ट दिश एव दलानां कलापस्तन्मुखेनावतारो यस्यास्तादृशी बद्धा अन्धकाररूपा मधुपावलिर्येन तथाभूतमित्यर्थः । **पदभेदेनेति** । 'सो णत्थि एत्थ गामे जो एयं महमहंतलाअण्णं । तरुणाणं हिअअलुडिं परिसप्पंतिं णिवारेइ' ॥ 'स नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्ठनं परिसर्पन्तीं निवारयति' इति संस्कृतम् । अत्र पूर्वार्धेऽनुप्रासस्तृतीयपादे रूपकमिति तयोः

एकस्मिन्वाचकेऽनुप्रवेशो वाच्ययोरेवालंकारयोः स्वारसिको वाच्यप्रतियोगिकत्वाद्वाचकस्येति मत्वार्थालंकारयोरप्येकवाचकानुप्रवेशसंकरमुदाजहार ।

सत्पुष्करद्योतितरङ्गशोभिन्यमन्दमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥

अत्र नाट्यगृहत्वापीपयसोः सत्पुष्करेत्यादिविशेषणे शब्दसाम्यं श्लेषः,'अमन्दमारब्धे'त्यादिविशेषणेऽर्थसाम्यमुपमा, तदुभयमेकस्मिन्निवशब्देऽनुप्रविष्टमिति तदपि न मन्यामहे। सत्पुष्करेत्यादिविशेषणेऽपि श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिलभ्यस्य धर्मसाम्यस्यैव तत्रेवशब्दप्रतिपाद्यतया शब्दसाम्यस्य तदप्रतिपाद्यत्वात् । श्लेषभित्तिकाभेदाध्यवसायेन धर्मसाम्यमतानङ्गीकारे 'अहो रागवती सन्ध्या जहाति स्वयमम्बरम्' इत्यादिश्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषणसाम्याभावेन समासोक्त्यभावप्रसङ्गात् । शब्दसाम्यस्येवशब्दप्रतिपाद्यत्वेऽपि तस्योपमावाचकत्वस्यैव प्राह्या श्लेषवाचकत्वाभावाच्च। शब्दतोऽर्थतो वा कविसंमतसाम्यप्रतिपादने सर्वविधेऽप्युपमालंकारस्वीकारात् ।

अन्यथा,—

'यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥'

इत्यत्राप्युपमा न स्यात्। न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किंचिदर्थसाम्यं कविविवक्षितमस्ति । तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमाने अलंकारद्वयलक्षणयोगादलंकारद्वयप्रतीतिस्तत्र तयोरलंकारयोरेकवाचकानुप्रवेशः ॥

---

संसृष्टिः ॥ **वाच्यप्रतियोगिकत्वादिति** । वाच्यं प्रतियोगि प्रतिसंबन्धि यस्य तद्वाच्यप्रतियोगिकं तत्त्वादित्यर्थः । एवं च काव्यावाच्यस्यानुप्रासादेः शब्दालंकारस्य तदनुप्रवेशो न वाचकानुप्रवेश इति वक्तुं युक्तमिति भावः ॥

**सत्पुष्करेति** । यस्यां नगर्यामेणीदृश उद्यानसंबन्धिवापीपयसीव नाट्यगृहे रमन्ते क्रीडन्ति । कीदृशे? समीचीनैः पुष्करैः कमलैः द्योतिनो ये तरङ्गास्तच्छोभावति । गृहपक्षे—समीचीनैः पुष्करैर्वाद्यभाण्डमुखैर्द्योतितो यो रङ्गो नृत्यभूमिस्तच्छोभिनीत्यर्थः । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गफले पद्मे' इत्यमरः । **श्लेषभित्तिकेति** । श्लेषो भित्तिरिव भित्तिर्मूलं यस्येत्यर्थः ॥ **रागवतीति** । रागोऽनुरागो रक्तिमा च । अम्बरमाकाशं वस्त्रं च । नन्वत्र विशेषणसाम्यायाभेदाध्यवसायापेक्षणेऽपि सत्पुष्करेत्यादौ शब्दसाम्यमात्रेणाप्युपमोपपत्तेर्न तदपेक्षेत्यत आह—**शब्देति** । शब्दतोऽर्थतो वेति । शब्दप्रयुक्तमर्थप्रयुक्तं वा यत्कविसंमतं साम्यं तत्प्रतिपादन इत्यर्थः । सर्वविधे सर्वप्रकारे । **यथेति** । 'चदि आह्लादने' इति धात्वनुसाराच्चन्द्रपदमन्वर्थम् । अन्वर्थोऽन्वर्थनामा । तस्मान्मतद्वयस्याप्ययुक्तत्वात् ॥

यथा (नैषध० २.६ ),—

विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥

अत्र हि प्रतिपाद्यमानोऽर्थः समृद्धिमद्वस्तुवर्णनमुदात्तमिति लक्षणानुसारादुदात्तालंकाररूपः, असंबन्धे संबन्धकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिरूपश्च । न च सर्वत्रोदात्तस्यासंबन्धे संबन्धकथनरूपत्वं निर्णीतमिति न विविक्तालंकारद्वयलक्षणसमावेशोऽस्तीति वाच्यम्; दिव्यलोकगतसंपत्समृद्धिवर्णनादिष्वतिशयोक्त्यस्पृष्टस्योदात्तस्य शौर्यौदार्यदारिद्र्यादिविषयातिशयोक्तिवर्णनेषूदात्तास्पृष्टाया अतिशयोक्तेश्च परस्परविविक्तया विश्रान्तेः । तयोश्चेहार्थवशसंपन्नसमावेशयोर्नाङ्गाङ्गिभावः । एकेनापरस्यानुत्थापनात्स्वातन्त्र्यपारतन्त्र्यविशेषादर्शनाच्च । नापि समप्राधान्यम्; यैः शब्दैरिह संबन्धि वस्तु प्रतिपाद्यते तैरेव तस्यैव वस्तुनोऽसंबन्धे संबन्धरूपस्य प्रतिपाद्यमानतया भिन्नप्रतिपादकशब्दव्यवस्थितार्थभेदाभावात् । नापि संदेहसंकरः; एकालंकारकोट्यां तदन्यालंकारकोटिप्रतिक्षेपाभावात् । तस्मादिहोदात्तातिशयोक्त्योरेकवाचकानुप्रवेशलक्षणः संकरः ।

---

## संकरसंकरालंकारः १२३

क्वचित्संकराणामपि संकरो दृश्यते । यथा,—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥

अत्र तावद्विदुषां संपत्समृद्धिवर्णनमुदात्तालंकारस्तन्मूलको 'बालाङ्घ्रिलाक्षा-

---

**विधुकरेति** । स हंसस्तत्र भैमीवनेन दमयन्त्या उद्यानेन हृतचित्तो व्यरचि कृतः । कथंभूतेन? चन्द्रकिरणाश्लेषोदात्तैरङ्गीकृतैर्निष्यन्दैः पूर्णैश्चन्द्रकान्तघटितैस्तरूणामालवालैर्विफलीकृतजलसेकप्रकाररूपगौरवेणेत्यर्थः ॥ **शब्दव्यवस्थितेति** । शब्दप्रयुक्तेत्यर्थः । तथा च समप्राधान्यमर्थभेदविषयमिति भावः । प्रतिक्षिप्यते निवार्यते कोट्यन्तरमनेनेति प्रतिक्षेपो विरोधः ॥

इत्यलंकारचन्द्रिकायामेकवचनानुप्रवेशसंकरालंकारप्रकरणम् ॥

**मुक्ता इति** । विदुषां भवनेषु मन्दिरेषु केलौ सुरतक्रीडायां विच्छिन्नसूत्राद्धाराद्गलिताः संमार्जनीभिरपसारिताः प्रातःकालेऽङ्गणसीमान्ते मन्दं चलतां बालानां चरणलाक्षारसेनारुणा मुक्ताः दूराद्दाडिमबीजशङ्कितधियः क्रीडाशुका यत्कर्षन्त्याकर्षन्ति तद्भोजनृपतेस्त्यागस्य दानस्य लीलायितमित्यन्वयः । तत्रैव बाला-

रुणा' इत्यत्र तद्गुणालंकारस्तत्रैव वक्ष्यमाणभ्रान्त्युपपादकः पदार्थहेतुककाव्यलिङ्गालंकारश्चेति तयोरेकवाचकानुप्रवेशसंकरः। तन्मूलः शङ्कितधिय इत्यत्र भ्रान्तिमदलंकारस्ताभ्यां चोदात्तालंकारश्चारुतां नीत इति तयोश्च तस्य चाङ्गाङ्गिभावेन संकरः। एवं विद्वद्गेहवैभवस्य हेतुमतो राज्ञो वितरणविलासस्य हेतोश्चाभेदकथनं हेत्वलंकारः। स च राज्ञो वितरणविलासस्य निरतिशयोत्कर्षाभिव्यक्तिपर्यवसायी। एतावन्मात्रे कविसंरम्भश्चेदुक्तरूपोदात्तालंकारपरिष्कृते हेत्वलंकारे विश्रान्तिः। वर्णनीयस्य राज्ञः कीदृशी संपदिति प्रश्नोत्तरतया निरतिशयैश्वर्यवितरणरूपाप्रस्तुतकार्यमुखेन तदीयसंपदुत्कर्षप्रशंसने कविसंरम्भश्चेत्कार्यनिबन्धनाप्रस्तुतप्रशंसालंकारे विश्रान्तिः। कार्यस्यापि वर्णनीयत्वेन प्रस्तुतत्वाभिप्राये तु प्रस्तुताङ्कुरेऽपि विश्रान्तिः। अत्र विशेषानध्यवसायात्संदेहसंकरः। किंच विद्वद्गृहवैभववर्णनस्यासंबन्धे संबन्धकथनरूपतयाऽतिशयोक्तेरुदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः। निरतिशयवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्याप्यद्भुतातथ्यौदार्यवर्णनात्मिकयात्युक्त्या सहैकवाचकानुप्रवेशसंकरः। तन्मूलकस्याप्रस्तुतप्रशंसालंकारस्य प्रस्तुताङ्कुरस्य वा राजसंपत्समृद्धिवर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशसंकरः। वाचकशब्दस्य प्रतिपादकमात्रपरतया व्यञ्जकसाधारण्यात्। एषां च त्रयाणामेकवाचकानुप्रवेशसंकराणां समप्राधान्यसंकरः। न ह्येतेषां परस्परमन्यत्राङ्गत्वमस्ति। उदात्तादिमात्रस्यैव हेत्वलंकारादिचारुतापादकत्वेनातिशयोक्ति-

---

ङ्गिलाक्षारुणा इत्यत्रैव ॥ **वक्ष्यमाणेति**। शङ्कितधिय इति वक्ष्यमाणेत्यर्थः॥ तयोस्तद्गुणकाव्यलिङ्गयोः। तन्मूलः संकरमूलः। ताभ्यां संकरभ्रान्तिमद्भ्याम्। तयोः संकरभ्रान्तिमतोः। तस्य उदात्तस्य। हेतुमतः कार्यस्य अभेदकथनं तत्त्यागलीलायितस्य कार्यमिति वक्तव्ये तदेव त्यागलीलायितमित्यभेदकथनम्॥ **तदीयेति**। राजकीयेत्यर्थः॥ **अतथ्यौदार्येति**। असत्यौदार्येत्यर्थः। **तन्मूलकस्येति**। वितरणोत्कर्षपर्यवसायिहेत्वलंकारमूलकस्येत्यर्थः। ननु राजसंपत्समृद्धव्यञ्जनागम्यत्वेनावाच्यत्वात्कथं तद्वर्णनात्मकोदात्तालंकारेण सहैकवाचकानुप्रवेशकथनमित्याशङ्कायामाह—**वाचकशब्दस्येति**। **त्रयाणामिति**। एक उदात्तातिशयोक्त्योरपरो हेत्वत्युक्त्योरन्यो व्यङ्ग्योदात्ताप्रस्तुतप्रशंसाप्रस्तुताङ्कुरान्यतरयोरित्येवं त्रयाणां परस्परमित्यर्थः॥

इत्यलंकारचन्द्रिकायां संकरसंकरालंकारप्रकरणम्॥

उदात्तालंकारस्य हेत्वलंकाराङ्गतायाः पूर्वमुक्तत्वादुदात्तातिशयोक्तिसंकरस्यापि तदङ्गत्वमिति शङ्कां निरस्यति—**उदात्तादिमात्रस्यैवेति**। उदात्तादीत्यादिपदेन हेत्वलंकारपरिग्रहः। हेत्वलंकारादीत्यादिपदेन चाप्रस्तुतप्रशंसापरिग्रहः। तत्रापि निरतिशयैश्वर्यवितरणोत्कर्षपर्यवसायिनो हेत्वलंकारस्यैव तादृशवितरणरूपकार्यपरिष्कारद्वारा तद्गम्यप्रस्तुतराजसंपदुत्कर्षप्रशंसारूपायामप्रस्तुतप्रशंसायामङ्गत्वं

संकरस्याङ्गतयानपेक्षणात् । एवमत्र श्लोके चतुर्णामपि संकराणां यथायोग्यं संकरः। एवमन्यत्राप्युदाहरणान्तराण्यूह्यानि ॥

---

## उपसंहारः।

अमुं कुवलयानन्दमकरोदप्पदीक्षितः।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः ॥ १७१ ॥
चन्द्रालोको विजयतां शरदागमसंभवः।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥ १७२ ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतिः कुवलयानन्दः समाप्तः॥

---

न त्वद्भुतातथ्यवर्णनरूपात्युक्तिसंकरस्यापेक्षेति भावः ॥ **यथायोग्यमिति।** तथा हि उदात्ततद्गुणयोरङ्गाङ्गिभावसंकरस्य भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसंकरस्य चाङ्गाङ्गिभावे च संकरः। तथा भ्रान्तिमदुदात्तयोरङ्गाङ्गिभावसंकरस्योदात्ताङ्गकहेत्वलंकारादिसंदेहसंकरस्य चाङ्गाङ्गिभावेन संकर इति सूक्ष्ममतिभिरूहनीयम् ॥

स्वकीर्त्यनुप्रवृत्तये ग्रन्थनाम स्वनाम चोपनिबध्नन् ग्रन्थपूर्तिमनुवदति—**अमुमिति।** स्वग्रन्थस्य प्रामाणिकत्वं सूचयितुमाह—**चन्द्रालोक इति।** शरदागमसंज्ञकश्चन्द्रालोकमूलभूतो ग्रन्थः। शरत्कालागमनेन चन्द्रस्यालोक इति श्लेषः। तस्माच्च कुवलयानन्दः स्वग्रन्थोऽभूत् । कुवलयस्य कुमुदस्यानन्द इति च श्लेष इति शिवमास्ताम्।

विद्वद्वृन्दमहामान्यरामचन्द्रात्मजन्मना।
विदुषा वैद्यनाथेन कृतालंकारचन्द्रिका ॥ १ ॥
एनां कुवलयानन्दप्रकाशनविशारदाम्।
विदांकुर्वन्तु विद्वांसः काव्यतत्त्वविदां वराः ॥ २ ॥
असौ कुवलयानन्दश्चन्द्रालोकोत्थितोऽपि सन्।
प्रतिष्ठां लभते नैव विनालंकारचन्द्रिकाम् ॥ ३ ॥

**इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृतालंकारचन्द्रिकाख्या कुवलयानन्दटीका संपूर्णा।**

**समाप्तोऽयं ग्रन्थः**

# विक्रय्यसंस्कृतपुस्तकानि ।

| | मू. | डा. व्या. |
|---|---|---|
| **आर्यासप्तशती**—गोवर्धनाचार्यकृता, अनंतपण्डितकृतया व्यङ्ग्यार्थदीपनाटीकया संहिता. .... .... | २ | ।= |
| **कथाकौतुकम्**—पण्डितश्रीवरविरचितम्. .... .... | १ | ८= |
| **कथासरित्सागरः**—महाकविश्रीसोमदेवभट्टविरचितः, एतस्मिन् पृथक् पृथक् मनोहराः १२४ कथाः सन्ति. | ८ | १॥ |
| **कादम्बरीकथासारम्**—श्रीमदभिनन्दकृतम्. .... | १ | ८= |
| **किरातार्जुनीयम्**—भारविकृतं, मल्लिनाथकृतया घण्टापथटीकया परिशिष्टादिभिश्च सहितम्. .... .... | २। | ॥ |
| **कुमारसंभवम्**—कालिदासविरचितम्, पाठान्तर-टिप्पणी-महाशिवपुराणसाम्यप्रतिपादकपरिशिष्टादिभिः समेतम् | ३ | ॥ |
| **रघुवंशकाव्यम्**—कालिदासकृतम्, मल्लिनाथकृतसंजीविनीटीकासहितम् [ स्थूलाक्षरम्. ] .... .... | ४॥ | ।= |
| **गाथासप्तशती**—सातवाहनविरचिता, ध्वनिव्यङ्ग्ययोश्चमत्कृतौ सुप्रसिद्धस्यास्य ग्रन्थस्य षष्ठं संस्करणं मूलप्रत्यक्षरं 'संस्कृत-गाथासप्तशत्या' सह संवलितं वरीवर्ति..... .... .... .... .... | ४॥ | ॥ |
| **दशावतारचरितम्**—क्षेमेन्द्रविरचितम्. .... .... | १॥ | । |
| **नैषधीयचरितम्**—श्रीहर्षविरचितम्, नैषधीयप्रकाशाख्य-(नारायणी)टीकयानेकटीकाविशेषांशैश्च सनाथीकृतम्. | १० | १ |
| **शिशुपालवधः**—माघकृतः, मल्लिनाथकृतया सर्वंकषाख्यटीकया परिशिष्टटिप्पण्यादिभिश्चोपबृंहितः. .... | ३॥ | ।॥ |
| **श्रीकण्ठचरितम्**—श्रीमङ्खककविकृतम्, जोनराजकृतया टीकया सहितम् । अस्य २५ सर्गाः सन्ति, अस्मिन् सज्जनदुर्जनवर्णनं, वसन्तवर्णनं, कैलासपर्वतवर्णनम्, शिववर्णनं चेत्यादीनि वर्णनान्यतीव मनोहराणि सन्ति. .... .... .... .... | ३॥ | ।= |

मॅनेजर—निर्णयसागरमुद्रणालयम्, मुंबई.

# कुवलयानन्दपद्यानामकारादिकोशः ।

समाप्ता चेयं कुवलयानन्दश्लोकसूची ।

## विक्रय्यसंस्कृतपुस्तकानि।

| | मू. रू. | आ. | मा. रू. | आ. |
|---|---|---|---|---|
| **स्वप्नवासवदत्तम्**—महाकविभासप्रणीतं, पं. पुरुषोत्तमशास्त्री दत्तवाडकर विरचितव्याख्ययालङ्कृतम् कलिकाता-वाराणसी-संस्कृतपरीक्षार्थिनां तथा आंग्लमहाविद्यालये विशेषेण संस्कृताध्येतृणां कृतेऽतीवोपयुक्तमिदम्। व्याख्या चैतस्यातीव सरला विस्तृता च। ध्वन्यलङ्कारवस्तुरसादीनां च विवेचनं तथा प्रत्यङ्कप्रारम्भे तस्य तस्याङ्कस्य विषयः स्थलकालयोर्निर्णयश्च नावीन्यं प्रकटीकरोति। ... ... ... ... | १ | ८ | ० | ४ |
| **अलङ्कारसर्वस्वम्**—राजानकरुय्यककृतं, जयरथकृतटीकासहितम्। अस्मिन् शब्दार्थोभयविधालङ्काराणां मनोहरतया विवेचनं विद्यते, अत एवायं ग्रन्थः केवलं (रसादिज्ञानं विना) अलङ्कारजिज्ञासूनामतीवोपयोगीति प्रसिद्धिः सर्वत्र। ... ... ... ... | २ | ० | ० | ८ |
| **अभिधावृत्तिमातृका**—महामहोपाध्याय-श्रीमन्मुकुलभट्टप्रणीता. ... ... ... ... | ० | १२ | ० | ३ |
| **अलंकारकौस्तुभः**—पं. श्रीविश्वेश्वरविरचितम्. ... | ४ | ० | ० | १२ |
| **उज्ज्वलनीलमणिः**—श्रीमद्रूपगोस्वामिप्रणीतः, १ श्रीमद्विश्वनाथविरचितव्याख्या-श्रीजीवगोस्वामिविरचितव्याख्या इति टीकाद्वययुतः. ... ... ... ... | ४ | ० | ० | १२ |
| **अष्टाङ्गहृदयम्**-अरुणदत्तकृतसर्वाङ्गसुन्दरया, हेमाद्रिविरचितया ह्यायुर्वेदरसायनाख्ययेति टीकाद्वयेन प्राच्यार्वाचीनवाग्भटविमर्शनैश्च विभूषितोऽयं सर्वाङ्गीणो ग्रन्थः प्रथमत एवोपाहियते त्वगदंकारेभ्यः। ... | | | | |

मॅनेजर—निर्णयसागरमुद्रणा